# The Sanskrit Journal

OR

# ॥ सहृदया ॥



EDITOR

R. Krishnamachariar, M.A.,

Vidyanidhi.

VOL. XXI.

No. 1.




PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM

AND PUBLISHED AT MADRAS.





Registered No. M. 103.

## विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, 1/3 Ormes Road, Kilpauk, Post, Madras (W).
6. Annual subscription is Rs. 3 only, including postage.

॥ श्रीः ॥

# ॥ सह्रदया ॥





सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ९. ] नलवर्ष चैत्रमासः । [ संचि. १.

## सुभाषितानि ॥





मासि मासि समा ज्योत्स्ना पक्षयोरुभयोरपि ।
तत्रैकः शुक्लपक्षोऽभूद्यशः पुण्यैरवाप्यते ॥ १ ॥

अकृतोपद्रवः कश्चिन्महानपि न पूज्यते ।
अर्चयन्ति नरा नागं न तार्क्ष्यं न गजादिकम् ॥ २ ॥

अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा ।
तदिदं देहि देहीति विपरीतमुपस्थितम् ॥ ३ ॥

निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान् ।
न सुवर्णे ध्वनिस्तादृग्यादृक्कांस्ये प्रजायते ॥ ४ ॥

॥ श्रीः ॥

# विज्ञापना ॥

—*—

आर्याः सहृदयानुवाचकाः,

संपूर्णविंशतिवयस्का सहृदया सांप्रतमेकवंशे पदं निदधाति । प्रायः विनोदात्मकैर्लेखैः विमर्शप्रायैः प्रबन्धैश्च रसिकजनानानन्दयन्तीयं गैर्वाणीसमभिवर्धनबद्धदीक्षैरत्यन्तमभिनन्द्यमानप्रचारापि दारुणेनायोधनेन कृच्छ्रादवाप्तमनोरथा कथं कथञ्चिद्द्राक्षसंवत्सरमतिवाहितवती ॥

एतामधिकृत्य केचनाभियुक्ता एवं विचारयन्ति— तथा हि— 'जीवत्वाचन्द्रतारमियं वसुधातले । अनया नाम कथमुपकृतो भवति जीलोकः ? एतया विना कीदृशमनिष्टं संभवेदस्माकम् ? गैर्वाणी किल जठरानलमद्य शमयितुं स्वयमसमर्था राजकीयैर्नीतीवादता प्रायो निवृत्तिमार्गमाश्रयद्भिरामुष्मिकफललाभोन्मुखैर्मनस्विभिरेवादरणीया वर्तते । देववाण्यामस्यां पूर्वं मनीषिभिर्ग्रथितानि ग्रन्थरत्नान्यमूल्यानि सुबहूनि अद्यापि नावलोक्यन्ते । तथासति नूत्नप्रबन्धनिर्माणेन किं प्रयोजनम्—' इति ।

अत्र ब्रूमः— सहृदयायाः स्वरूपं कात्स्न्येंनानवगच्छन्त इमे केवलं परप्रत्ययनेयमतयः केवलं असहनतामदीर्घदर्शितामरसिकतां च बहिराविष्कुर्वन्ति । न जानन्ति च नवीनपरिष्काराभिलाषिणां ये ये विषयाः सारतो गैर्वाणीत अवगन्तव्यास्तानेवेयं विशदयतीति । प्रौढाविवाहमधिकृत्य कालिदासस्याशयः कीदृशः ? प्राचीनैः पण्डितैः

नवीना सरणिः कथं नानुस्रीयते? गैर्वाण्यां विनोदात्मका विषयाः प्रतिपादयितुं शक्यन्ते वा? देशान्तरीयग्रन्थानां देववाण्या अनुवादः कीदृशीं रसस्फूर्तिं जनयति? पुरा सिंहलद्वीपवासिनामस्माकं च कथमिव व्यवहारः समजनि?— इत्यादिकमधिकृत्यातीते हायने सहृदया स्वाशयमतिमधुरया सरण्या प्रकाशितवतीतीदं न खलु न विदितं प्रतिभावताम् ॥

'भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती' इति जानान्तोऽपि केचनाधुनातनाः भाषयैवानया देशस्यास्योत्कर्षः परमात्मनः सर्वान्तर्यामित्वमभिशंसत्या ब्रह्मविद्ययैवास्माकमनितरसाधारणं गौरवमित्यादिकं विस्मृत्य देशान्तरीयसंस्कारेणातिभूमिं गतेन सूदूरं मूढमात्मानं नावगच्छन्ति । विस्मरन्ति च तत्तद्देशस्थित्यनुगुणं भाषावेषादिकं व्यवस्थितमिति । चण्डकरकिरणसन्तापितसर्वाङ्गेष्वस्मच्छरीरेषु अनवरतं धार्यमाणानि कञ्चुकानि स्वेदममितमापाद्यासह्यमुद्वेगमुपजनयन्ति । अत एव शीतदेशवासिनां समुचितो वेषः उष्णदेशस्थेषु न घटते । एवमेवाहारादिकमपि । देशकालानुगुणं प्राचीनैर्दीर्घदर्शिभिर्निर्दिष्टां व्यवस्थामधरोत्तरीकर्तुमभिलाषमाविष्कुर्वन्त इमे आधुनिकाः सदसद्विवेकविधुराः औचित्यविचाररहिताः पार्थिवभोगप्रवणाः आत्मानुशासनप्रकारानभिज्ञाः प्रकृतितत्त्वज्ञानशून्याः यत्किञ्चिदभिलपन्ति । त एते न विशेषज्ञाः नाप्यज्ञाः । तादृशानामनुरञ्जनमशक्यमित्यभियुक्ता वदन्ति । तथा हि—

'अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥' इति ।

सत्यम् । प्राचीनाचारादिव्यवस्थासु कालानुगुणं केचना-

मुख्या अंशाः परिहरणीयाः परिष्करणीयाश्च— इत्यत्र नास्ति विशयलेशोऽप्यस्माकम् । उक्तं हि कविसार्वभौमेन 'पुराणमित्येव न साधु सर्वम्' इति ॥

अतः सहृदयेयं केष्वंशेष्वन्याः पत्रिकाः समतिशेते इति सम्यक् परिशोध्य स्वाशयमाविष्कुर्वतां कुशाग्रमतीनां रसिकशिरोमणीनां देशभाषाभिमानिनामास्तिकवर्याणां सौमनस्यायासकृन्नमोवाकमाशास्महे ॥

संपादकः ।

॥ श्रीः ॥

## ॥ कुमारसंभवविमर्शः ॥

( पूर्वतोऽनुवृत्तम् । )

---

अभ्युन्नताङ्गुष्ठनखप्रभाभि-
र्निक्षेपणाद्रागमिवोद्गिरन्तौ ।
आजहतुस्तच्चरणौ पृथिव्यां
स्थलारविन्दश्रियमव्यवस्थाम् ॥ ३३ ॥

अथ महाकविः षोडशभिः पद्यैर्भवान्या विग्रहं आपादचूडमनुवर्णयितुमुपक्रमते । प्रथमं गार्याश्चरणयोः सौकुमार्यं लोकोत्तरमित्यनुरूपेणोपमानेन विशदयति । स्मारयति च 'आलोहिताङ्गुलिप्रभापाटलितनखमयूखामतिकठिनमणिकुट्टिमस्पर्शमसहमानां क्षितितले पल्लवभङ्गानिव विन्यस्य संचरन्तीम्' इत्यादिकां भट्टबाणसूक्तिम् ।

देवतावर्णने 'पादादिकेशान्तम्' अन्यासां वरवर्णिनीनां

विषये 'केशादिपादान्तम्' इति काचन व्यवस्थिता सरणिराश्रियते महाकविभिरिति केचन मन्यन्ते ।

सा राजहंसैरिव संनतांसा
गतेषु लीलाञ्चितविक्रमेषु ।
व्यनीयत प्रत्युपदेशलुब्धै-
रादित्सुभिर्नूपुरशिञ्जितानि ॥ ३४ ॥

इह गौर्या मरालगमनायाः गतिवैचित्र्यं ध्यानविषयीकुर्वन्कालिदासः 'भवान्या गतिवैचित्र्यं राजहंसेभ्यः समधिगतम्; राजहंसैश्च तस्या नूपरमणिशिञ्जितेभ्य एवात्मनो विलक्षणं रुतमनुशिक्षितम्' इति च वर्णयन् 'नूपररवाकृष्टानां च धवलितास्थानमण्टपसोपानफलकानां भवनदीर्घिकाकलहंसकानां कोलाहलेन'– इति भट्टबाणसूक्तिं स्मरणपथमुपनयति ॥

पद्यमिदमनुध्यायतामस्माकम्— 'पदन्यासक्रीडापरिचयमिवारब्धुमनसः स्खलन्तस्ते खेलं भवनकलहंसा न जहति । अतस्तेषां शिक्षां सुभगमणिमञ्जीररणितच्छलादाचक्षाणं चरणकमलं चारुचरिते' इति सौन्दर्यलहरीगीतिः हृदयगह्वरमापूरयति ॥

वृत्तानुपूर्वे च न चातिदीर्घे
जङ्घे शुभे सृष्टवतस्तदीये ।
शेषाङ्गनिर्माणविधौ विधातु-
र्लावण्यमुत्पाद्यमिवास यत्नः ॥ ३५ ॥

इह भवान्याः जङ्घाद्वयस्यान्यादृशं रामणीयकं वर्णयितुमुपक्रान्तः कविः 'वृत्तानुपूर्वे' इत्यादिना कार्तान्तिकैरुद्घुष्टं कल्याण-

लक्षणं निर्दिशन्— पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते निषङ्गौ-जङ्घे ते विषमविशिखो बाढमकृत । यदग्रे दृश्यन्ते दशशरफलाः पादयुगलीनखाग्रच्छद्मानः सुरमकुटशाणैकनिशिताः' ॥ इति सौन्द-लहरीगतं पद्यमनुस्मारयति । सूचयति च 'शुभे' इत्यनेन पार्वत्या जङ्घे हृदि कलयतामुपासकानामनुपदमेव कल्याणपरम्परा समुन्मिषतीति ॥

नागेन्द्रहस्तास्त्वचिकर्कशत्वा-
देकान्तशैत्यात्कदलीविशेषाः ।
लब्ध्वा हि लोके परिणाहि रूपं
जातास्तदूर्वोरुपमानबाह्याः ॥ ३६ ॥

पद्यमिदम्— 'करीन्द्राणां शुण्डान्कनककदलीकाण्डपटली-मुभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवति—' इति सौन्दर्यलहर्या-मनुश्रूयमाणायाः सूक्तेरर्थं सोपपत्तिकं विशदयतीव । आदिकविरपि जानकीम् 'नागनासोरूम्' इति वर्णयति ॥

(क्रमशः ।)

॥ श्रीः ॥

## ॥ अम्ब कृष्णवेणि ॥

---*---

कृष्णवेणि तव नाम शुभोदे
दूरगः स्मरति योभिगृणाति ।
सोऽपि धूतदुरितस्सरिदार्ये
किं पुनर्मुनिनुते त्वयि मज्जन् ॥ १ ॥

यद्भङ्गसङ्गतसमीरणसङ्गमात्रा-
द्भङ्गं समेति विविधाघमनन्यभङ्गम् ।
कृष्णाङ्गजन्मसुभगां वरकृष्णवेणी-
मुत्तुङ्गमङ्गलतरङ्गयुतां नतोऽस्मि ॥ २ ॥

एतज्जनपदजाह्नवि कृष्णवेणि, नाहमवगच्छामि अद्यावधि कियन्ति दिनानि, न हि— कति वा वर्षाणि व्यतीतानि अद्य वक्तव्यं श्वो वाच्यमिति हृदय एव विनिहितास्यभिधित्सितस्य म इति । यदाहं पापापहारिणे दर्शनायोपैमि तीरं ते, किं भवति तदा न जाने, सर्वं विस्मृतिपथमेवावतरत्यभिधेयं मे । सत्यं ब्रवीमि मातः, कुतस्त्वत्तटमनुप्राप्तस्य प्रश्नो मे स्मृतिपद्धतिं जहाति? किं पृष्टा कोपिष्यसीति मनस्येव विनश्यति भीत्या? न हि नेदानीं तादृशी भीतिश्चेतसि समुद्भवति । यदाहमासं शैशवमासेवमानः तदा हीतरस्मादिव हृदयं त्वत्तोपि नितरां बिभेति स्म । गुल्फपरिमितेऽपि तदानीं पुरुषप्रमाणत्वेन भासमाने सलिले तव गन्तुं कम्पते स्म चित्तम् । एतावद्विस्तृतं पात्रं ते कियद्विपुलमगम्यं भासते स्म । अहह! कृष्णाङ्गसंभूते, गतं तद्बाल्यम्, तादृशमनः तदवस्थं शरीरमपि । दिने दिने वर्धमानया विचारशक्त्या सा भीः, स चमत्कारश्चास्तमितः । अकुतोभयमिदानीं जलं ते प्रविशामि । ये नाम ते सलिलप्रवेशाय साध्वसमावहन्ति; तान्बालकान्निर्भत्सनापुरस्सरम् 'नात्र किमपि विद्यते भीतिनिदानमिति वेदान्त (परोपदेशमात्रपण्डितस्य वचनं) मुपदिशामि । कथं ते जानन्तु मुग्धाः कुमाराः! वेदान्तवक्तायमप्येकदा वयमिवोदकगमनाय त्रस्यति स्मेति ।

अहमिदानीं तादृशे वयसि वर्ते यस्मिन्शुभाशुभकर्माणि बोद्धुं प्रभवन्ति पूरुषाः। विश्वंभरायामस्यां हस्तद्वयपरमिते प्रदेशे वर्तमानोपि, दिष्टमेतावन्तं गतमायुरथवा सर्वोऽपि जीवितकाले, गरीयसः प्रभोरनेहसः क्षणार्धस्य कोप्यंश इति, उपर्यधःपार्श्वयोश्च प्रसृतानंतागम्यचमत्काराकरस्य कस्यापि वस्तुन एकदेश इति चाजानन्नपि, 'अहमेव वंद्यो वसुधायां बुद्धिमान्दूरदर्शी च' इति कियतीमहंकृतिं बिभर्मि! अनयैवांधोहं अधिकधिषणावत्सु भावुकेषु, मे क्षुद्रस्य ज्ञानस्य प्रकाशं आविष्कर्तुमभिलषामि। किं वक्ष्यामि मातः? कालेऽकाले सकारणमकारणं वा लोकानामुपदिशन्नापतिते प्रसंगे कथमहं पण्डितंमन्यः प्रस्खलाम्येतदहमेव वेद्मीति। स्खलितमेनं नावलोकयन्तु लोका इति कथं तच्छद्मना च्छादयामि। कथमिदं मुग्धं जगज्जानातु? जननि, नैतदासीद्बाल्ये एवंविधं वा किमपि। तदा हि ते जलाधिगमचकितं चेतो नात्मनो भीतिं मायया निह्नोति स्म। प्रत्युतोन्मुक्तकंठमुदितेन रुदितेन प्राचीकशदेव भियम्। भीरुं मामपहसिष्यति लोक इति विचार एव नासीत्तदा सर्वथा निरपराधमुग्धं किल कौमारं नाम। अद्यावलोकयतु भवती; कर्मण्येकस्मिन्विशतो मे त्वदीयोदकभीतशिशुभ्योप्यतितरां भियं बिभ्रन्मनो नात्मनो भीरुतादोषमाविष्कर्तुं लघिमानं चोररीकर्तुं सधैर्यं पुरस्सरति। जगज्जीवने कृष्णवेणि, शिवशिवेतराभिज्ञस्य मनुजस्य किं न स्थाने मनोधैर्याभिवृद्धिः? किं नोचिता वा सत्याभिरुचिः? चक्षुः प्रक्षिप अत्र सर्वं विपरीतमेवावलोक्यते। प्रचलितुं सत्ये पथि तथ्यं च हृदयगतं प्रकटयितुं त्रपामहेतराम्। श्रीकृष्णगात्रोद्भूते, विचार्यमाणे अतिशेते शैशवमेव प्रौढदशातः अथवा किमनेन विमर्शेन? भवतु

गरीयान्कौमार एव प्रौढावस्थातः । न हि शक्यते मया परिहाय प्रौढदशामिमामुपादातुं च बाल्यमिदानीं । येन साधीयान्स्यादयं विचारः । ज्यायाञ्जयति जगदीशनियमः— अनति बाधकं भुक्तबाल्य एव प्रभवेदवाप्तुं प्रौढदशाम्, सेवितप्रौढावस्थः शक्नुयादधिगन्तुं वार्धकमिति । नैतं विपरिवर्तयितुं प्रभुर्भूतधात्र्या भुवनत्रये वा समुपलभ्यते । सत्येवं किमतेन विचारेण?

अम्ब भागीरथीभगिनि, अस्त्यद्य विचारणीयं किमपि । किं करोमि? एवमेव तदा तदा विचारपरंपरया व्यापृतं स्वान्तं विस्मरति प्रष्टव्यम् । नाहमधुनानापृच्छय जिगमिषामि मन्दिरम् । मातः, नाद्यतनो मे प्रश्नः किं तु नैकहायन इति निगदित एव प्रथमं मया । परं तत्र किंचित्सुधारणमावश्यकं संवृत्तम् । विहितं च मनसि तत् । यदाहं बाल्ये वर्तमानः प्रथमं त्वामपश्यम्, समुद्भूता तदेयं पृच्छा 'कुतस्त्वमागम' इति । गतेषु कतिपयदिनेषु प्राथमिकशालायामधीयानस्य मे भूगोलज्ञानेन विदितोत्तरा सा । द्वितीये दर्शने तवोदयमापापरः प्रश्नोऽयं 'कस्य कृते किमर्थं च सततमेवं वहसि' इति । कालान्तर अयमप्यधिगतोत्तरस्समजनि । तदनु तृतीयेन प्रश्नेन न्यधायि मनसि पदं 'कियदायुस्तव कदा जन्मनान्वगृह्णा धरणीमेनाम्' इति । नास्मिन्निदानीं महत्त्वं भासते । तावतावगतसमाधानोयमिति मा भावयतु भवती। परं कस्यांचन कालकलायामुदयमाप्तवती भवती ! नाशोऽपि जनिमत्यास्तव भविता यदा कदा वा । किं ज्ञातेनाज्ञातेन वानेन प्रयोजनम् । विचारणीयमन्यदेव मे । निजजनप्रणयिनि कृष्णवेणि, यद्विचारयिष्यामि चमत्कुर्यादेव तत्ते चेतः । अथवोत्पादयेद्वा मूढोऽयमिति मतिम् । तच्छ्रुत्वा मा

हसतु भवती। यदन्तस्स्थितं विदारति हृदयं तदद्यपृच्छामि । उचितं वास्तु भवत्वनुचितं वा, क्रुध्यतु वा भवती, तस्योत्तरं परमपेक्षे । अपि नाम समाश्वास्यसि प्रत्युत्तरप्रदानेन माम्?।

आबाल्याच्चेतश्चमत्कारिणि सह्याद्रिनन्दिनि, सत्यमपहससि! हस! प्रेमामृतसम्मिश्रे कौतुकोद्भूते हास्येऽस्मिन्नपत्यप्रीतिरेव स्फुरतितराम् । सैव मेऽधीरप्रकृतेः विचारयितुं प्रागल्भ्यमुपजनयति नितराम् ।

पतितपावने देशेऽस्मिन्बहुमानयन्ति त्वां लोकाः। भावयन्ति च भगवतीं भागीरथीमेव त्वाम् । भाषस्व क्व गतमेतद्देशीयानां गीर्वाणीप्रणयित्वम्? तुंगतरसह्याद्रिशिखरादवप्लुत्याप्लावयन्ती देशमेनमेतद्देशसीमान्तावधि त्वमनल्पा आपगा नैकानि पुण्यक्षेत्राण्यैक्षथाः संख्यातिगामिनीभ्यो नगरीभ्यो ग्रामवाटिकाभ्यश्च जलमदाः। बहुविधान्केदारानाप्लाव्याकृथाः प्रशस्यसस्यशालिनः। किं चानेकेषामिदंदेशीयानां स्नापयित्वा बाह्यांङ्गं वा निर्मलं व्यधाः । अर्थाद्बहुविधैर्मार्गैरेतज्जनपदनिवासिनां विश्वेषां बाह्यान्तरङ्गपरिचयस्त्वयि संभाव्यते ! अस्ति च । आचक्ष्व विचक्षणे एतद्विषयवर्तिनाममीषां दिविषद्भाषापोषणपक्षपातित्वमस्ति वा न वा? चेदस्ति किं न दृश्यते? न विद्यते चेत्कयातम्? अयि अन्तकातंकनाशिनि, सुरसुरस्वतीसमुन्नतिसमादरः किमस्मास्वासीद्यदा कदा वा? यद्यवर्तत कियन्तं कालमतिष्ठत्? कदा नामशेषतामलभत? कस्मान्महात्मन उदयमाप? केन किंनिमित्तं कथं प्रणाशितः? नक्तंदिवं प्रयतमानैरस्माभिरवाप्येत वा। आँ जननि प्रश्नपरंपरां अवतारयामि । त्वरां च महतीं विधास्यामि । नायं प्रष्टुर्धर्म इति जानामि च। किं करोमि मातः, दयनीयां देशस्या-

स्य दशां दृष्ट्वा दूनं हृदयमित्थं प्रश्नपङ्क्तिं आवेदयितुं व्यवसाययति माम् । नाद्य मे मनो जनपदस्यास्यावनतिनिदानमनवगत्य शान्तिसुखमाप्नोति । अत एव ब्रवीमि, सर्वसाक्षिणि, त्वं सरलैस्सरसैर्वचनैस्समुत्तरय्य समाश्वासय मामिति ।

दीनदूनमोदिनि, व्यात्तवदनः कल्पकालकृतान्तकल्पः कबलयतीलातलमेकतो ग्रन्थिज्वरनिशाचरः; भक्षयति क्ष्मां दुर्भिक्षरक्षोऽन्यतः । परत्र हि निर्दयं दण्डधरनन्दिनी दारिद्र्यदेवता दूनयति मेदिनीम् । सर्वतः प्रसर्पन्तीमद्याप्यनासादितापायामापदमेनामवलोक्य किं भगवान् जगदीश्वरो भुवनमिदं नामशेषतां नयतीति व्याकुलीभवति चेतः । त्वां गोदावरीनर्मदामुखाश्च निम्नगास्समीक्ष्य प्रमोदते तरां च, यद्यभिलषति निर्मानवां वसुमतीं विधातुं श्रीवरदराजस्तदा किमेताभिवहंतीभिः प्रयोजनमतो नास्त्येव तथाकर्तुं जगत्कर्तुरभिलाष इति । उत प्रथममुदोदनदानेन पोषयित्वा पृथिवीं पार्थसारथिरसौ ततः करालकालकिंकरैः दारिद्र्यदुर्भिक्षग्रंथिज्वरहतकैः किं शब्दशेषां चिकीर्षति? एतादृशमरणदण्डसमुचितोऽपराधः को वा अकार्यस्माभिः? पापसीमन्तिनीसविलीसदनेभ्योऽपि नः प्राणहरणचणशासनदानं किं शोभते भगवतो दीनवत्सलकमलावल्लभस्य? । निस्संकोचमयं व्यक्तं वक्तीति मां माभिक्रुध्यतु । भक्तभयभञ्जने, त्वं खलु पतितान्पावयसि । हंत तर्हि कथं अवशिष्टानि दुष्कृतानि नः? अथ वा यदास्मासु दुरितान्युदितानि तदैव कुतो नानाशयः? अपि नाम न तानि ते दृष्टिपथमवतीर्णानि । यदास्माकं परोत्कर्षविषयद्वेषादिदोषक्रमयस्सरभसं शरीराणि प्राविशन् तदैव, एतद्दृशमन्दाकिनि, पापाटवीपाटनपण्डिते

पतितोद्धारिणि कृष्णवेणि, किं तान्न प्रत्यवेक्षसे? अद्यापि पापपावकपच्यमानाङ्गानवलोकयन्ती किमिति तूष्णीमातिष्ठसे? नाधुनापि नस्त्रातुमादत्से मनः । हा! दुर्भागधेयमस्माकम् ।

कोपनां हृदि, भीमां पार्श्वे, तुङ्गभद्रामुत्तरीयाञ्चले, परिगृह्य पारावारं प्रस्थिते सरित्प्रवरे स्वर्धुनीसपत्नि, श्रूयते हि जननजालकालानले सलिले तवाभिषुण्वते स्म तत्रभवन्तः पाणिनिपतञ्जलिप्रमुखा अमरभारतीजीवातवः । श्रीमन्तो मतत्रयभाष्यकाराः परमहंसश्रेष्ठा श्रीशंकररामानुजानन्दतीर्थभगवत्पूज्यपादाचार्या अपि मोचासुधामधुरिमाचामचतुरं त्वदीयं तोयं आचुचूषन्ति स्म । श्रीगुरुवरगलगलीमुद्गलाचार्याश्च चिरमूषुस्तीरे तव । सर्वेप्यमी महाभागाः सुधाशनसरस्वतीबन्धवस्सुरगिरमुन्नतिशिखरमारोपयामासुः । कारणगृहीतकलेवरास्ते किल सागरांबरायां यशश्शरीरं विन्यस्य कृतकर्तव्या निर्जरवरप्रार्थिताः प्राकृतं पांचभौतिकं वपुः परित्यज्य देवांगनाजेगीयमानगाथा देवभूयं गताः । महद्भाग्येनास्मदीयेन न तथा त्वमभवः? सैव त्वं? तदानीमिव अद्यापि स्रवसि? तादृशमेव खल्वद्यतनं रूपं श्रीमत्याः? तथाविधैव हि माधुरी त्वदीयाम्भसः? शक्तिरपि सैव जागर्ति ननु पाथसि? त्वद्भागिन्योपि कच्चिन्नायथाभावमनुप्रापिताः? सतीत्थं कथं तेऽन्नजीवनजीविनो जनपदीया इमे दैववचःप्रीतिमत्यजन्सहसा? । त्वद्विषयवर्तिनाममीषां कुतः करुणापदमेषा समुत्पन्ना दशा? निस्तेजस्त्वं च कस्मादेतेषु? संदृश्यमानो दुर्गुणगणोऽप्यस्मासु कुत आयातः? । अम्ब, अर्भका दोषदूषिता गततेजसश्चेत्तद्दोषो मातरमाक्रमत इति किं न वेत्सि? । किं न ते श्रवणसरणिमुपयातं वीरप्रसूमूर्धन्याया केस-

रिकुटुम्बिन्या भगवत्या अञ्जनायाश्चरितं । या हि सत्यमप्यात्मनश्शौर्यमुपवर्णयन्तं वर्णिवरेण्यं वायुतनयमवलोक्य विमनायते स्म कथं मदीयस्तन्यपानप्रवृद्ध एष मे कुमारः निरपत्रपमात्मानं श्लाघते नन्वस्ति कोऽपि दोषो मयि' इति । भक्तभव्याभिलाषिणि, क्वगतस्तेऽभिमानः ? । त्वत्पयःपोषिता असमर्थाऽकीर्तिजननी प्रजासाववियमानैव वरमिति किं न मनुषे ? दुरिताद्रिभिदुरे, मातासि मे त्वम् , तवाहमात्मजोऽस्मि; न ममावहेलनं विधातुं ते वियते मतिः नाविद्यत न वेत्स्यते च । परं प्राय इदानीं निद्रासुखमनुभवन्त्या तत्रभवत्या भवत्या भवितव्यम् । प्रबोधयाम्यत एव प्रार्थनयानया । जागृहि । मा चिरं शयीथाः । खिद्यन्तेऽनात्मज्ञास्ते तनयाः । प्रेक्षस्व तान् । सुखय च विबुधवाणीपरिचर्याप्रज्ञाप्रदानेन ।

अयि क्लिष्टकल्पलते, यथैकस्यैवेह प्रभातः सुखस्य मध्याह्नसंध्ये च विश्वसृष्टिनियमानुसारेण प्रवर्तन्ते तया चेन्नो गत्वरा दुर्भागधेयविभावरी तदा न किमपि वक्ष्यामः । यथा त्वं हेमन्ते स्वादुतावधीरितपीयूषरसा वैडूर्यप्रभाभासुरसुषमा, अन्तस्संदृश्यमानसकलवस्तुजाला अन्तरालप्रतिबिम्बितविपिनपर्वततारागृहचक्रवाला सर्वैस्सप्रमोदमासेव्यमाना प्रसरसि । वसन्ते हि एकपदप्रक्षेपप्राप्यापरतीरा दिने दिने दीनेव तनिमानं विन्दमाना अन्तर्वत्नीव मन्दं मन्दं प्रचलसि । वर्षर्तौ च प्रतिदिनम्— न हि न हि— प्रतिक्षणोपचीयमानपानीया, तटयुगमभिव्याप्योल्लंघ्य च वहन्ती भिद्यमानविपुलतरोपला, आलोहितफेनकर्बुरितकीलालकाया, आवर्तशतसाध्वसप्रदा, अदृश्यान्यतीरा, कलुषितसलिलापि किमपि महनीयं महः धारयन्ती घनघनघोरघोषा, जलरयोन्मूलिततीरतरुलतालेखा,

निजजवाऽवधीरितवायुवेगा, प्रतिक्षणाऽतीतानेकक्रोशा, व्रजसि वारिधिम् । तथा चेद्विपरिवर्तनीयस्वभावाऽस्माकीनाऽधुनिकी दयाभाजनं दशा तदा सहर्षं भाव्युन्नतितृष्णयाऽनेहसं हस्तेनातिवाहयन्तो जीवितं वहामः । यथा त्वं वसन्तसमयायातकृशतां परित्यज्य बिभर्षि वर्षर्तावनुत्तमां समुन्नतिं तथा किं वयमप्यवनतिमेनामुत्सृज्य स्पृहणीयामवस्थां भजिष्यामहे ? देवि देहि न चिराय सुदिवससमागमसुखमनुभविष्यथेति वरवचनम् । येन मे दूनं मनश्शाम्यति । सत्यं वद मातः, अपि नाम सुखप्रभातो भविता नः ? तदा किल ध्रुवं प्रवहिष्यति नश्चेतोभुवि शेमुषीकृष्णवेणी । तत्तीरगाः सद्भावनासद्विचारकेदाराः श्रेष्ठसस्यशालिनो भूत्वाऽस्माकं देववाणीपक्षपातोदयरूपफलं प्रयच्छति कच्चित् ? भक्तजनप्रिये, हन्त यद्येवं भविष्यति वा देशेऽस्मिन्संस्कृतविद्योद्यानम् , संचरिष्यन्ति वा तत्र सुविचारमारुताः सेविष्यन्ते वा सप्रमोदं तदुपवनमेतज्जनपदजनिजुषस्तदागामिसुखसक्तस्वांता असह्यमप्यदीनवमेतं सानन्दं सहामहे ॥

यद्येवं नो न फलिष्यति मनोरथमहीरुहस्तर्हि शृणु श्रीकृष्णवेणि; विधेयं वचनं मम । नाभिलषामो वयमितःपरं भूभारभूतं नैकक्लेशकोशं कलेबरमिदं वोढुम् । जगज्जननि, सत्यं कथयामि वयमिदानीं न पारयामो वस्तुं वसुमत्याम् । सत्वरं प्रयाहि पारावारम्; तत्राहीश्वरमयमञ्चं शयानं योगस्वापमातन्वानं श्रीनारायणं विज्ञाप्य, तथा कारय यथा पुष्करावर्तकाद्यामुदिरा गगनतलमावृत्य प्रलयकालीनवृष्टिमारचयेयुः । तदनु त्वं वर्धमाना सर्वाभिरापगाभिसंगम्यैकीभूय च निमज्जय देशमेनं गाधेतरे त्वदीये तोये । येन विश्वे देव-

भाषाद्वेषिणोऽशब्दशेषां पञ्चतां प्राप्नुयुः । ततः पुनः सागरागारं रमारमणमगणनीयप्रणामपूर्वं गत्वा आचक्ष्व— अयि लक्ष्मीपते, निखिला निर्जरभारतीपरिपन्थिनो विनाशमापुः; देवाधिदेव, नवीनसृष्टौ यथा देववाणी गरीयसीमुन्नतिमाप्नुयात्तथा कुर्वित्यादिश पितामहम्— इति । अनन्तरं यथेच्छति श्रीशस्तथा भवति ।

अयि मातर्भगवति भवभीतिभञ्जने, सुकृतराशिवर्धने, विततदुरितदारिणि, निजजनेष्टदायिनि, श्रीमहाबलेश्वरजटाजाते, वसिष्ठादिसुरर्षिजुष्टे, सरितां वरिष्ठे, करुणाविशिष्टे, श्रीकृष्णसृष्टे, पतितोद्धारदक्षदीक्षे श्रीकृष्णवेणि सप्रणतिशतं सदैन्यवदनं सोत्तरीयप्रसरं सकपोलतलताडनं पुनः पुनरिदमेवाभ्यर्थ्यसे ।

मुद्दू विट्ठलाचार्यः । ( गलगली । )

॥ श्रीः ॥

## अतिमूत्रम् । ( Diabetes. )



रोगस्यास्य प्रमेहत्वेन व्यवहारो दृश्यते प्राचीनायुर्वेदमते । 'प्रकर्षेण मेहत्यस्मिन्निति' अतिमूत्रबहुमूत्रपदयोरस्य च सदृशार्थकत्वेन पर्यायत्वमित्यत्र नास्ति विसंवादः ।

'रोगोऽयं पुंसामेव न स्त्रीणाम्; मासि मासि रजःप्रसेकात् । तदुक्तम्— 'रजः प्रसेकान्नारीणां मासि मासि विशुध्यति । सर्वं शरीरं दोषाश्च न प्रमेहन्त्यत स्त्रियः ॥ इति तन्त्रान्तरे' इति केचित्—

नैतद्युज्यते । लोके प्रत्यक्षविरोधात्सर्वतन्त्राप्रसिद्धेश्च । अपि चैवं

विमृशामः । रजोनिवृत्तेः प्रमेहानुत्पत्तिरिति हि तेषां मनीषा। तत्र तावद्रजसः किं द्रव्यत्वम्, क्व स्थितिः, क आश्रय इत्यादिकमादौ विचारणीयम् ।

प्रम्बकोषात्परिपक्वं स्त्रीबीजं तत्पार्श्वतो गर्भाश्रयमनुव्रजन्त्या बहुमुखनागतुल्यचलन्नाडिकया गर्भाशयं प्रविशति । तदा तत्परिसरवर्ति रक्तस्रोतसो मुखं विव्रियते। ततः शोणितमतिमात्रं गर्भाशयमनुप्रविश्य जननेन्द्रियतो बहिर्निस्सरति । तदेवार्तवमित्युच्यते।

एवं च तस्य रजसो गर्भाशयप्रविष्टरोहितद्रव्यत्वम्, गर्भाशये स्थितिः, रक्तस्रोत आश्रय इत्यादि सुज्ञातम् ।

गर्भाशयश्च मूत्रबस्तितः किञ्चिदूर्ध्वं पृष्ठतः सावरणं तिष्ठतीति सुव्यक्तं शरीरविदाम् । मूत्राशयगर्भाशययोर्न कोऽपि संबन्ध आसावहिरिति च ज्ञातचरम् । किं च, रक्तस्रोतसां क्रिमाश्रयणमिति विशये, मांसाभ्यन्तरवर्ति रक्तधरानामककलायामन्तशिरासु, यकृत्प्लीह्नोश्च तदीया स्थितिरिति दृश्यते शारीरात् ।

एवं चाल्पास्थिगत सरक्तमेदसश्च तेषां च भेद एव । वक्ष्यमाणदूष्यत्वं च मेदसोपहितरक्तस्यैव न रक्तधरान्तररक्तस्येति ज्ञायते । तथा च रक्तधरान्तर्गतशोणितस्यैव गर्भाशयगतत्वे रजस्त्वेन व्यवहारात्तस्य च प्रमेहहेतूनां च भेदात्तत्सेकात्प्रमेहानुत्पत्तिः स्त्रीणामिति न युक्तमिव प्रतिभाति ।

प्रमेहोत्पत्तिं जिज्ञासुना प्रथमं किंचिच्छारीरं वेदितव्यम् । आहारजरणादिकं च । प्रमेहस्य तावत्त्रिदोषा मेदोमांसरुधिरक्लेदलसीकौजःशुक्रवसामज्जरसाश्च आश्रयाः । अतस्तेषां यथायथं स्थानानि तावदादौ ज्ञेयानि ।

तत्रादौ वात-पित्त-श्लेष्मणां दोषाणामाशयान्विचारयामः । मध्यशरीरस्योर्ध्वभागे कण्ठान्निम्नस्थले कफाशयस्तिष्ठति । तदनन्तरं किंचिन्निम्नम्, नाभिस्तनयोरन्तरे चामाशयः । ततो निम्नपार्श्वे पित्ताशयः तदधः पक्वाशयः । तदधो वाताशयश्चेति क्रमः । तदुक्तं वाग्भटेन— 'कफामपित्तपक्वानां वायोर्मूत्रस्य च क्रमात् ।' इति । 'नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः' इति वसिष्ठश्च । माधवोऽप्याह—– 'कफपित्तानिलाः पूर्वमध्यान्तेषु व्यवस्थिताः । देहाहोरात्रवयसां संधिष्वपि कफानिलौ' इति ॥

मेदसश्चाश्रयो मांसगताण्वस्थ्यन्तरमुदरं चेति वदन्ति वेदविदः । माधवोऽप्याह– 'मेदस्तु सर्वभूतानामुदरेष्वस्थिषु स्थितम्' इति । मांसस्य सर्वशरीरे स्थितिः । रुधिरस्य दूष्यान्तर्गतस्यास्थिन्येव स्थानानि न रक्तधरा कला । क्लेदस्य सस्नेहजलरूपस्य सर्वशरीरमाश्रयः । लसीका च मांसशर्मणोरन्तरे जलरूपेण तिष्ठति । अर्धाञ्जलिपरिमितश्लेष्मरूपौजःसोमात्मकं हृदये वर्तते । मनसोऽधिदैवत्वात् । चरकोऽप्याह— 'हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम् । ओजः शरीरे सुख्यातं तन्नाशान्नाविनश्यति' इति । शुक्रं च सर्वत्र शरीरे क्षीरे यथा घृतं तिष्ठति । तदुक्तं सुश्रुतेन 'कृत्स्नदेहाश्रितं शुक्रं प्रसन्नमनसस्तथा' इति । वसा च शुद्धमांसगतस्नेहविशेषः । मज्जा च स्थूलास्थिमध्यगतस्नेहविशेषः । मेदोमज्जवसानां भेदस्तूक्तः सुश्रुतेन— 'स्थूलास्थिषु विशेषेण मज्जात्वभ्यन्तराश्रितः । अथेतरेषु सर्वेषु सरक्तं मेद उच्यते । शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता' इति । रसश्च धातुविशेषः । मांसमध्यगत एव ॥

अथ जरणमुत्पश्यामः । इह खल्वस्माभिः प्रतिदिनमभ्यवह्रियमाणमाहारजातं चतुर्धा प्रविलसति । भक्ष्य-भोज्य-लेह्य-पेयभेदात् । तत्र मोदकलड्डुकापूपादयो भक्ष्याः । अन्नशाकफलादयो भोज्याः । पायससूपादयो लेह्याः । पानकपानीयादयः पेयाः ॥

अथ चैवंविधाहारविशेषे कतिचन वर्गा भवन्ति । जल क्षीर दधि तैल मध्विक्षु मद्य सुधान्य कुधान्यमांस फल शाक पुष्प कन्द लवणवर्गा इति । तत्र पृथिव्यादिभूतानामन्योन्यानुप्रवेशकृतेन मधुरादिगुणभेदेन जलस्य, गव्याजौष्ट्रादिभेदेन क्षीरस्य, मधुराम्लात्यम्लभेदेन दध्नः, तैलैरण्डादि भेदेन तैलस्य, पौत्तिकभ्रामरादिभेदेन क्षौद्रस्य, पौण्ड्रकभीरुकवंशकादिभेदेनेक्षोः, मार्द्वीकखार्जूरादिभेदेन मद्यस्य, शालिषष्टिकव्रीह्यादिभेदेन सुधान्यस्य, कोरदूषकश्यामाकादिभेदेन कुधान्यस्य, बिलेशयानूपग्राम्यादिभेदेन मांसस्य, दाडिमामलकबदरादिभेदेन फलस्य, पुष्पफलालाबुकालिन्दादिभेदेन शाकस्य, कोविदारशणशाल्मल्यादिभेदेन पुष्पस्य, विदारीशतमूल्यादिभेदेन कन्दस्य, सैन्धवसामुद्रादिभेदेन लवणस्य च भेदाद्वर्गत्वं ज्ञेयम् ॥

एतेभ्यो वर्गेभ्यः केचिद्भिन्ना अपि घृतादयस्सन्ति । सर्व एते पूर्वोक्तभक्ष्यादिषु यथायोग्यमुपयुज्यमानास्तद्भेदान्तर्भूता भवन्ति ॥

पुनरप्येतेषु चत्वारो भेदाः । पिष्टपदार्थः । स्नेहकृतपदार्थः । मांसपदार्थः मधुरपदार्थश्चेति । पिष्टपदार्थास्तावच्छालियवकन्दादयः । स्नेहकृतस्तु घृततैलादयः । मांसकृतश्च माषमांस-

कुक्कुटाण्डादयः । मधुरपदार्थस्तु सर्वस्मिन्नपि वस्तुनि वर्तत इति वदन्ति ॥

इत्थमनेकधा भिन्नमाहारद्रव्यं प्रथमतो वदनगतमेव दशनैर्दश्यमानं लालाजलेन मिलितं किंचित्सृतं सदन्नवाहिकयामाशयं प्रविश्य वामोर्ध्वभागतः स्रवता केनचिद्रसेन संसृज्यते । ततश्च तदाशयचलनादेतत्सर्वं द्रवीभूतं पायसवन्निर्वर्त्यते । अमाशयव्यथितः सूक्ष्मच्छिद्रैः खिन्नस्तस्य द्रवो रक्तधरायां रक्ते मिश्रीभवति । एतावता किंचिदूनाधिकं जरणकृत्यं निर्वृत्तकल्पं भवति । ततः पक्वाशयं प्रविश्यावशिष्टाहारभागः तत्र ततः किंचिद्दक्षिणोर्ध्वगतपित्तकोशादागतेन पैत्यरसेन तिक्तेन मिलति । क्लोम्नश्च कश्चिज्जीर्णरसः क्षारयुक्तश्च तेन मिलति । एतेन जरणकार्यं निर्वृत्तं सद्ग्रहणीनामकपक्वाशयाधस्थितान्त्रद्वारेण क्षुद्रान्त्रं प्रविशति शिष्टं द्रव्यमाहारस्य । एवं किंचित्किंचिज्जीर्यमाणं यावत्स्थूलान्त्रसमीपमायाति तत् तावत्पूर्यते जरणविधिः । तत्र शिष्टं जरणानर्हं तुषास्थ्यादिकं किंचिज्जलेन सह स्थूलान्त्रं प्रविशति । तत्र च जलं बहु परिशुष्यति । मलपदार्थश्च निर्वर्त्यते । एतावानेव जरणप्रकारः ॥

मूत्राशयश्च शुक्राश्रयादूर्ध्वं पृष्ठतस्तिष्ठति । अवशिष्टान् शरीरांशांस्तत्र तत्र यथावसरं प्रतिपादयामः ॥

अथ प्रमेहनिदानं द्रक्ष्यामः । ननु निदानमिति किमुच्यते? 'निदानंत्वादिकारणम्' इत्यभियुक्तोक्त्या रोगस्य प्राथमिककारणम्, उत किंचित्पारिभाषिकमित्यत्रोच्यते । 'नितरां दीयत' इति व्युत्पत्त्या कारणकारणस्य बोधकोऽयं निदानशब्दः कारणानि सर्वेषां रोगाणां वात-पित्त-श्लेष्माण्येवेति तेषां कारणमन्नपान-

विहारादि निदानशब्देनोच्यते ॥

केचित्तु 'सेतिकर्तव्यताको रोगोत्पादकहेतुर्निदानम्' इति वदन्ति । सामान्यतो लोके व्यवह्रियमाणं 'अमुं रोगं सम्यङ्‌निदेहि' इत्यादि सम्यक् निरीक्षणार्थकं निदानमेतल्लक्षणमेवेति ज्ञायते । अपि तु ऋषिमते प्राथमिकार्थांगीकार एव दृश्यते । यथोऽस्य प्रमेहस्यैव प्रस्तावे चरकाचार्यो 'हायनकयवचीनकोद्दालकनैषध:' इत्यारभ्य 'कश्चिद्विधिरन्योऽपि श्लेष्ममेदोमूत्रसंजननः सर्वः संनिदानविशेषः' इति आहारादिकमेव निदानत्वेनोक्तवान् । सुश्रुतेनापि 'दिवास्वप्नाव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमेद्यद्रवान्नपानसेविनं पुरुषं जानीयात्प्रमेही भविष्यतीति' इत्ययमेवांशोऽङ्गीकृत इति सुव्यक्तम् । निमित्तहेत्वायतनादिपदैः पर्यायत्वं निदानस्य वदता माधवेनाऽप्येतत्पक्षः स्वीकृतः । यद्यनन्तरार्थांगीकारस्तेषाम्, आहारविहारादिकस्य निदानत्वेनोक्तिः कथं वा संगच्छत इति सुधियो विभावयन्तु ॥

द्वितीयेऽर्थे कश्चिद्दोषोऽपि वर्तते । तथा हि—सेतिकर्तव्यताक इति बहुव्रीहिरन्यपदार्थप्रधानः । इतिकर्तव्यताज्ञानविशिष्ट इत्यर्थकः । रोगोत्पादकहेतुरिति तस्य विशेष्यतया स्वीकर्तव्यम् । रोगोत्पादको यो हेतुः स सेतिकर्तव्यताज्ञानविशिष्टः इत्यर्थोऽवश्यमङ्गीकार्यः । तत्रेत्थं प्रष्टव्यम् । रोगोत्पादकहेतुर्नाम कः ? वातपित्त-श्लेष्मरूपदोषत्रयं वा ? उताहारादिकम् ? आहोस्विदन्यत् ? । न वातादिः । तेषामाभ्यान्तरहेतुत्वेन वक्ष्यमाणत्वात्केवलं रोगोत्पादकत्वासंभवात् । आहारादिकमिति चेत् प्रथमपक्षांगीकारकल्पत्वादिष्टापत्तिः । अथान्यस्य ज्ञानवतः कस्याऽपि हेतुत्ववचनासंगते-

र्नान्यत् । एवं स्थिते आहारादिकस्य कारणत्वेनांगीकारे तस्य सेतिकर्तव्यताज्ञानविशिष्टत्वमनुपपन्नमिति मन्दोऽपि जानाति । जडस्याहारादेः कर्मरूपस्य विहारादेश्च ज्ञानत्वासंगतेः ॥

किं तु 'सेतिकर्तव्यताकं रोगोत्पादकहेतुज्ञानं तत्' इत्युक्ते लोके व्यवहृतनिदानस्य लक्षणतया संगच्छते । तदा 'यद्रोगोत्पादकहेतुज्ञानं तत्सेतिकर्तव्यताभानविशिष्टमित्यर्थान्नानुपपत्तिरित्यलमतिप्रसंगेन ॥

तादृशं च निदानं प्रथमं संनिकृष्ट-विप्रकृष्ट-व्यभिचारि-प्राधानिकभेदेन चतुर्विधमिति हरिचन्द्रः । रोगस्य वातादिप्रकोपरूपस्य साक्षाज्जनकं सन्निकृष्टम् । तद्यथा— दिवारात्रं ऋतु-भोजन-विहारादयः । परम्परया जनकं विप्रकृष्टम् । यथा— ज्वरादे रुद्रकोपादिः । रोगोत्पादनासमर्थं व्यभिचारि । यथा— बलहीनवातादिः 'दोषा अबलीयांसो यदा नानुबध्नन्ति न तदा विकाराभिनिर्वृत्तिर्भवति' इति चरकः । प्राधानिकस्त्रिधा । असात्म्येन्द्रियार्थसंयोगं प्रज्ञापराधं परिणामश्चेति । तत्रासात्म्येन्द्रियार्थसंयोगं तावदयोगमतियोग मिथ्यायोगमिति त्रिविधम् । जिह्वादीनामिन्द्रियाणां मधुरादिगुणाननुभूतिरयोगं नाम । अधिकानुभूतिरतियोगम् । अन्यस्यान्यथाऽनुभूतिर्मिथ्यायोगम । एकस्मिन्नन्यथा ज्ञानं प्रज्ञापराधं । कालपरिणामस्वभावाज्जातशीतोष्णादेरननुभवः परिणामः । अथवाऽधिकमपि वाऽन्यथा ॥

पुनरपि तन्निदानं वातादिप्रकोपहेतुत्वेन व्याधिहेतुत्वेन द्वयोर्हेतुत्वेन च त्रिविधम् तत्र तत्तद्दतुभेदेन मधुरादिरसवर्गस्य वातादीनां चयप्रकोपप्रशमहेतुत्वेन तत्प्रकोपहेतुत्वम् । काषायादि-

भेदेन स्थिताया मृदो भक्षणस्य पाण्डुरोगजनकत्वेन व्याधिहेतुत्वम् । हस्त्यश्वादिभिर्यानादेर्वातादिप्रकोपस्य वातरक्तनामकव्याधेश्च हेतुत्वेनोभयहेतुत्वं च स्पष्टम् ॥

अपि च उत्पादकव्यञ्जकभेदेन द्विविधं पुनर्निदानम् । तत्र हेमन्तादिषु मधुरादिः कफादीनामुत्पादकः । वसन्ते च तेषां सूर्यातपादिर्व्यञ्जकः ॥

अथ च बाह्याभ्यन्तरभेदेन निदानं द्विविधम् । आहारविहारकालादयो बाह्यनिदानानि । दोषदूष्यभेदेनाभ्यन्तरं द्विविधम् । दोषाः खलु वातादयः । दूष्यश्चोक्ता वक्ष्यमाणा मेदोमांसादयः ॥

दोषाश्च तत्र प्राकृतवैकृतभेदेन द्विविधाः । तत्र वसन्ते श्लेष्मा, शरदि मायुः, वर्षासु वायुश्च प्राकृताः । वसन्ते श्लेष्मभिन्नौ द्वौ, शरदि मायुभिन्नौ, वर्षासु वायुभिन्नौ च वैकृताः । प्रकृतिसिद्धाः प्राकृताः । विकृत्या जनिता वैकृताः ॥

अपि चैतेषां दोषाणामनुबन्ध्यानुबन्धाशयापकर्ष-क्षय-स्थानवृद्ध्यूर्ध्वाधस्तिर्यक्कोष्ठशाखामर्मास्थिसन्धिगति-साम-निरामत्वादिभेदा बहवः सन्ति । अत्रायं निदानदोषभेदसंग्रहः—

चत्वारो व्यभिचारदूरनिकटप्राधानिकत्वात्पुन-
स्तेऽसात्म्येन्द्रियकार्मयुक्परिणतिप्रज्ञापराधास्त्रिधा ।
रुग्दोषोभयकारणादपि तथा द्वौ व्यञ्जकोत्पादकौ
बाह्याभ्यन्तरभेदतोऽपि कथिता हेतोः प्रभेदा अमी ॥

दोषस्य च प्राकृतवैकृताभ्यां भेदोऽनुबन्ध्यादपि चाऽनुबन्धात् ।
तथा प्रकृत्यप्रकृतित्वयोगात्तथाशयाकर्षवशाद्गतेश्च ॥ इति ।

अपि च दोषाणामेतेषां द्विषष्टिर्भेदानाह सुश्रुतो दोषविकल्पाध्याये यथा—

द्विषष्टिधा वदन्त्येते भूयिष्ठमिति निश्चयः ।
त्रय एव पृथग्दोषाद्विशोनवसमाधिकैः ॥
त्रयोदशाधिकैकद्विसममध्यादितैस्त्रिशः ।
पञ्चाशदेवन्तु सह भवन्ति क्षयमागतैः ॥
क्षीणमध्याधिकक्षीणक्षीणवृद्धैस्तथाऽपरैः ।
द्वादशैवं समाख्यातास्त्रयोदोषा द्विषष्टिधा ॥ इति ।

वाग्भटोऽप्याह—

द्व्युल्बणैकोल्बणैष्षट्ते हीनमध्याधिकैश्च षट् ।
समश्चैको विकारास्ते सन्निपाते त्रयोदश ॥
संसर्गेण च षड् भेदा द्व्येकवृध्या समैस्त्रयः ।
पृथक्त्रयःस्युस्तैर्वृद्धैर्व्याधयः पञ्चविंशतिः ॥
यथा वृद्धैस्तथा क्षीणैर्व्याधयः पञ्चविंशतिः ।
वृद्धिक्षयकृतश्चान्यो विकल्प उपदिश्यते ॥
एकैकवृद्धि समता क्षयैष्षट्ते पुनश्च षट् ।
एकक्षयद्वन्द्ववृध्या सविपर्यययाऽपि ते ॥ इति ।

अथ प्रमेहस्य 'निदानदोषदूष्येभ्यो विकाराणां विघातभावाभावप्रतिविशेषा भवन्ति' इति निदानदोषदूष्यजन्यत्वं प्रत्यपादयच्चरकाचार्यः । तत्र निदानपदेनैव तद्भेदाभ्यन्तरनिदानरूपदोषदूष्ययोर्ग्रहणे पुनर्दोषदूष्यग्रहणं किमर्थमिति चेदत्रोच्यते । अत्रत्यनिदानपदस्य न निरुक्तभेदविशिष्टं निदानमर्थः । किन्त्वाहारवि-

हाररूपबाह्यनिदानमात्रम्। न च लघुतया निदानमात्रस्य ग्रहणमस्तु। किं दोषदूष्यग्रहणेनेति वाच्यम्। प्रमेहस्य कृत्स्नमपि निदानजातं जनकमिति बोधनार्थत्वात् ॥

न च सर्वस्याऽपि रोगस्य कृत्स्नं निदानं कारणं भवतीति कोऽत्र विशेष इति वाच्यम्। दोषत्रयदूष्यजाताहारादिकस्य सर्वस्याप्येकस्मिन्नपि भेदे प्रमेहस्य सत्त्वात्। कुष्ठस्याऽपि सर्वदोषजत्वमित्यन्यत्। ज्वरादीनान्तु तत्तद्दोषमात्रजन्यत्वमेव न सर्वदोषजन्यत्वमिति विवेकः। ननूत्तरत्र 'तत्र इमे निदानादिविशेषाः श्लेष्मनिमित्तानां प्रमेहाणाम्, इत्युक्तत्वादस्य भेदानामप्येकैकदोषजन्यत्वेन ज्वरादितोऽविशेष इति चेन्न। कुष्ठवदस्याऽपि सर्वदोषसमुत्थत्वस्योत्तरत्रोक्तत्वादस्यापि तदाशयकल्पनौचित्यश्लेष्मनिमित्तानामित्यादौ प्रधानेनेत्यादि वक्तव्यत्वात्। तथा च सुश्रुतेऽपि 'सर्वे एव सर्वदोषसमुत्थास्सहपिटका' इत्युक्तम्। 'एतेन प्रमेहाणां पिटकानां च सर्वदोषजत्वमुक्तम्। सर्वेषां सर्वदोषजत्वेऽप्युत्कर्षतो दोषग्रहणं दर्शयन्नाह। तत्र कफादिति' इत्यादि डल्लणो व्याख्याति। यद्येकैकदोषजत्वन्तर्हि सर्वस्यापि सर्वदोषजत्वं न संगच्छते ॥

सुश्रुतस्तु 'दिवास्वप्नाऽव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमेद्यद्रवान्नपानसेविनं पुरुषं विजानीयात्प्रमेही भविष्यति' इति इत्याहारविहारादिरूपबाह्यनिदानमेव निदानतया स्वीचक्रे। तज्जन्यं वातपित्त-श्लेष्मणामपरिपाकरूपलक्षणमाभ्यन्तरं निदानमिति च वदति ॥

माधवोऽप्यमुमेवार्थम् 'आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि। नवान्नपानं गुडवैकृतं च प्रमेहहेतुः कफकृच्च सर्वम्' इत्यनेन चरकवचनेन बोधितवान् ॥

( क्रमशः । )

॥ श्रीः ॥

अखिल भारत वर्षीय

# ॥ श्री सनातनधर्म महासम्मेलनम् ॥

## द्वितीयमहाधिवेशनम् मथुरा ।

---

अतीते ह्यब्दे महति कुम्भपर्वावसरे श्रीमति हरद्वारक्षेत्रे, कलिकल्मषापहायाः सुभगसलिलाया भगवत्या मन्दाकिन्याः पावने रोधसि, परमश्रद्धेयस्य भगवतः सनातनधर्मस्याभ्युदयार्थं योग-क्षेमार्थम्, धार्मिकजनतायाश्च वार्षिकविचारपरिवर्त्तनमुद्दिश्य— आसीत् संस्थापितमखिलभारतवर्षीयसनातनधर्ममहासम्मेलनाभिधं कि-मप्यभिनवं रङ्गस्थलमिति मन्ये न स्यादविदितं विदितवेदितव्यानां संस्कृतविदुषामपि । ऐषमश्चास्य द्वितीयं महाधिवेशनं पवित्रतमायां श्रीमथुरापुर्यां गत १८७२ विक्रमसंवत्सरस्य चैत्रकृष्णतृतीयातः षष्ठी— तदनुसारं मार्च मासस्य २२ दिनादारम्य २५ दिन-पर्यन्तमपूर्वेणोत्साहेनातिद्वयेन समारोहेणासदृशेन विभवेनानितर-साधारणेन संभारेण च सार्द्धं सुप्रशस्ते नवनिर्मिते च मण्डपे बहूनां देशमान्यानामाचार्याणां महाराजानां विद्वदग्रेसराणां धार्मिकनेतृवर्ग-स्याखिलभारतीयप्रतिनिधिप्रवराणां चोपस्थितौ सकुशलं निर्वृत्तम् । प्रथमदिने चैत्रकृष्णतृतीयायां भगवतः श्रीवेदपुरुषस्य दोलायात्रो-त्सवः (Procession.) हस्त्यश्वपटहमंगलवाद्यादिसंकुल आन्दोलिता-खिललोकश्च सुखमजायत । श्रीहरद्वारवृन्दावन— ऋषिकुलयो र्माणवकानां माथुरचतुर्वेदविद्यालयस्य च च्छात्राणामेकस्वरोच्चरित-ब्रह्मघोषैः शप्तमिव पापमपसारितमिव चाखिलममङ्गलम् । दोलाया-

त्राया दर्शनार्थं परित आकीर्णमासीदापणं, रथ्याः, पन्थानश्च दर्शकैः, सङ्कुचित इवासीच्च जनपदोट्टालिकास्वेव हर्म्याणाम् । आविद्धदंगनागोपालैः सानन्दगद्गदस्वरमुद्घुष्टो जयनादोऽसकृद· पूरयत् द्यावारोदसी । ३०–३५ सहस्राणां दर्शकानामुपस्थितिरन्व- मीयत विज्ञैः । माथुराणां सजीवमुत्साहं विभाव्य चित्रिता इवाभवन् समागताः प्रतिनिधयः । महाराज श्रीदर्भङ्गाधिपतिः, काश्मीर, जय- पुर, अलवर, भरतपुर, धातृपुर, शालपुर, दतिया, वेङ्कटगिरिप्रभृति- राज्यानां प्रतिनिधयोऽन्ये च नेतारो नग्नपादाभ्यामेवानुसरन्तो भगवन्तं वेदं प्राकाशयन्महनीयतां सनातनधर्मस्य । परिणतवयसा- मपि मथुराभिजनानामासीदयमुच्चैर्नादो यन्न तैस्ततः प्रागवलोकितो मथुरायां तादृशोऽनन्यसाधारणो लोकोत्तरश्च दोलोत्सवः ॥

## २३ मार्च— प्रथमदिनम् ।

भारतीयसेनापतिमहोदयेन संमेलनार्थं कृपया प्रदत्ते शिविरस्य सुयार्जिते प्रशस्तविस्तीर्णे च समक्षेत्रे सुनिर्मापितोऽभवत् विस्तीर्णो हृदयावर्जकोऽतिरमणीयश्च मण्डपः–१० सहस्रदर्शकानां सुखपूर्वक- मुपवेशनार्थम् । मण्डपस्य दक्षिणतो महाविष्णुयागार्थं निर्मिता यज्ञ· शाला, वामतो विद्वद्विलासपुस्तकालयः, पुरतः प्रतिष्ठापिताः स्फटि- कावदाताः पटमण्डपाः पटकुड्यः काण्डपटामंडपिका वितानानि चा- भिनवामेव कामपि श्रियमपुष्णन् । एकतः पण्यवीथिकाराजिरशो· भत । मध्येमण्डपञ्च निर्मितासीद्विस्तृता शोभना च वेदिः पण्डितोत्त· मानां नेतॄणां व्याख्यातॄणां राजप्रतिनिधिप्रभृतीनां च सुखासिकायै ॥

एकवादनसमये मण्डपे समुदेतुमारभत सदस्यानां दर्श- कानाञ्च विदुषां सन्दोहः । संमेलनस्य निर्वाचिताः सभापतयः

श्रीमन्तो माननीयाः श्री दर्भङ्गाधिपतयः स्वागतकारिण्याः समितेरध्यक्षैः श्रीधवलपुरधराधीशैः सार्द्धं नियतसमय एव समागत्य—ससंभ्रमानन्दकौतुकामोदमभ्युत्थितेषु, जयजयादिविविधनादैर्बधिरयत्सु दिगन्तान् जनेषु— सभापतेरग्र्यासनमभूषयन्। ७ सहस्रपरिमितानां भारतीयप्रतिप्रान्तेभ्यः समागतानां प्रतिनिधिप्रवराणां देशीयराज्ञां संभावितानां प्रतिपुरुषाणां (Representatives) महात्मनां विदुषामुपदेशकानां बहूनां दर्शकानाञ्चोपस्थितावारभ्यत कार्यम्। हरिकीर्त्तन मङ्गलपाठाद्यनन्तरं संमेलनप्रवर्त्तकेन व्याख्यानवाचस्पति श्रीदीनदयालु शर्मणा रुचिरं स्तोकञ्च व्याचक्षाणेन प्रतिपादिता संमेलनस्योपयोगिता तात्कालिकी तस्याक्स्था भविष्यति च तदभ्युदयोपायाः। तदनु स्वागतकारिण्या अध्यक्षस्य श्रीमतो धवलपुराधिपतेः स्वागतवक्तृता तदनुमत्या श्री हरिहरसुरूपशर्मणा सुस्पष्टेनोच्चस्वरेण पठिता; प्रसन्नगम्भीराण्याकर्ण्याक्षराणि भावाप्लुतानि वक्तृताया नितराममूमुदज्जनसमुदायः। काश्मीर, अलवर, जयपुर, सलावड् राज्यानाम्, संभावितैः प्रतिनिधिभिः, कलकत्ता, मुम्बई, मद्रास, पञ्चापादिप्रान्तानाञ्च प्रतिष्ठितैर्व्युक्तिभिः कृते प्रस्तावेऽनुमोदने सर्वेषां करतलनादे समुदञ्चति श्रीदरभङ्गाधिपतिभिः सभापतेरासनमलमकारि। धवलपुराधीशैरपि तत्रैव स्थितम्। तदनन्तरं पूर्वं हिन्दीभाषायां तदनु हौण्याञ्च मुद्रितमात्मीयं गभीरं विवेचनापूर्णं चाभिभाषणं सभापतिमहोदयेन अनुवाचितम्। पदे पदे धन्यन्धन्यमिति व्याहरन्तः, करतलध्वनिनासभामण्डपं प्रतिध्वनयन्तः क्षणे क्षणे कञ्चनालौकिकं विस्मयानन्दमन्वभवन् सभ्याः। अत्यन्तं प्रभावशालिन्योजस्विनी च सेय-

मासीद्भक्ततेति यत्सत्यं निर्माय वक्तव्यमेव। ततः सभापतिनैव त्रयः प्रस्तावा उपस्थापिताः सर्वसम्मत्या च स्थिरतामनीयन्त। प्रथमः—— प्रकृते महासमरे बृटिषसिंहस्य विजयार्थम्; द्वितीयः श्रीमतो लार्ड हार्डिङ्गमहोदयस्यानुग्रहपूर्णोदारशासनस्योपलक्ष्ये तद्धन्यवादैः सत्कर्त्तुम्; तृतीयश्च श्रीमतो भारतचक्रवर्त्तिन आयुर्यशोविजयकामनार्थं 'सार्वजनिकप्रार्थना (Common Prayer)' निर्माणविषयक इति त्रयः प्रस्तावाः स्वीक्रियन्तेस्म। पं. दीनदयालुशर्मणा सर्वेपि सभ्याः समुत्थानपूर्वकं राज्यविजयार्थमीश्वरस्मरणं कर्त्तुमनुनाथिता आसन्। सर्वैः समुत्थाय तारस्वरेण प्रार्थितो जगदीश्वरः। समाजोसावत्यर्थमावर्जक आनन्दप्रदश्चासीत्। ततः (संमेलनस्य संयुक्तमंत्रि) श्रीहरिहर सुरूपशर्मणा, वार्षिकं कार्यविवरणं सुश्रावितम्—— यत्र संमेलनस्यकार्यपाटवमुपयोगित्वं च सुविवेचितमासीत्। तदनन्तरं पं. दीनदयालुशर्मणा महासंमेलनस्य महामण्डलस्य च पार्थक्यविषये जनताया विविधवितर्काणां योग्यत्नयोपशमपूर्वकं पारस्परिकप्रेम्णा एकतायाश्च संस्थापनार्थमुट्टङ्किता धार्मिकनेतारः। ततो विषयनिर्वाचिन्याः सभायाः सभ्यानां निर्वाचनमक्रियत— रात्रौ च यमुनोद्याने सेयं सभा सममिलत्, द्वितीयदिनस्य कार्यक्रमश्च स्थिरतामनीयत। एतावतैव समाप्यत महति भक्तिश्रद्धासम्वलिते धर्मोन्मेषे प्रथमदिनकृत्यम्॥

## २४-३-१६ द्वितीयादिनम्।

२. वादनसमय एव यथाविधि मङ्गलगानाद्यनन्तरं कार्यमारभ्यत। स्वागतकारिण्याः समितेर्मन्त्रिणा श्रीवैद्यनाथ चतुर्वेद महाशयेन महानुभूतिप्रदर्शकाः तारपत्रादयः पठिताः। नानाप्रान्तीयानां

धर्मानुरागिणां भारतविभूषणानां सहयोगमनुभूय तज्जनितानन्दपूर इव निमग्ना अन्वभवन्कञ्चन वर्णजातिगं हर्षमुपस्थिताः सभ्याः । सहानुभूतिप्रदर्शकेषु, जगन्नाथकरवीरयोः स्वामिश्रीशंकराचार्यपादानाम्, श्रीस्वामिकाञ्चीप्रतिवादिभयङ्कराचार्यपादानाम्, उदयपुर, काश्मीर, जयपुर, अलवर, दयिता वेङ्कटगिरि, कासि, मद्याजर-प्रभृति महाराजानां पं. मदनमोहनमालवीय, राजा शशिशेखरेश्वर-राय, सर प्रभाशङ्करपट्टनी, सर् त्रिभुवनदासवरजीवनदास, महाराजा सर कृष्णप्रसाद बहादुर जी. सी. आई. ई., जस्टिस् शेषगिरि ऐयर् प्रभृति बहूनां देशमान्यानां नामान्यश्राव्यन्त । आहत्य प्रस्ताव षट्कं स्वीकृतमभूदद्य समस्तवैदिकसंप्रदायेषु मिथो भ्रातृभावस्था-पनविषयकः चतुर्थः प्रस्तावो विद्यावाचस्पतिश्रीकृष्णशास्त्रिभिरुप-स्थापितः । पं. गोविन्दराम गणपति शास्त्री, अधिकारी जगन्नाथ दासैरनुमोदितः समर्थितश्च स्थिरतामनीयन्त । मण्डासा (मद्रास) निवासिगणपतिशास्त्रिणां संस्कृतवक्तृतामाकर्ण्य चित्रितेवासीत् संसद् । ततः कुलपुरोहितेषु तीर्थमन्दिरादिनां च पाण्डेयादिषु अपेक्षितविद्यायाः प्रचारविषयकः प्रस्तावः, महामहोपाध्याय पं. हरनारायणशास्त्रि विद्यासागरैरूपस्थापितः, चतुर्वेदी द्वारकाप्रसा-दशर्मा पं. गिरिधरशास्त्रिभ्यां चानुमोदितः समर्थितः स्वीक्रियतेस्म । उपनिषत्—स्मृति—पुराणेतिहासादीनां यथापूर्वं कथाव्यवस्थायाः प्रसारार्थमपरः प्रस्ताव उपस्थापितः पं. दुर्गादत्तपन्तेन । लवपुरे 'सनातनधर्मकालेज' स्थापकान् पञ्चाणयधर्मोत्साहिनः तेषां सदुद्योगाय धन्यवाददानपरं प्रस्तावमुपाक्षिप्तवान् काश्मीरराज्य-प्रधानामात्यो दीवान अमरनाथ बहादुर सी. आई. ई. महोदयः,

पं. दीनदयालु शर्मणा चान्वमोद्यत । सभापतिनैवानन्तरं ब्रह्मचार्याश्रमाणां विद्यालयानां च संचालकेभ्यः साधुवादवितरणविषयकः प्रस्तावः स्वयमुक्षिप्तः । नवमः प्रस्तावः भटेले श्यामविहारिणा हिन्दूविश्वविद्यालयस्थापने हर्षमुद्गिरता तत्र धार्मिकशिक्षणस्य समुचितप्रबन्धार्थमुद्बोधनविषयक उपक्षिप्तः, माननीयरायरामशरणदासबहादुरेणानुमोदितश्च स्वीकृतोऽभूत् । वैदिकसंस्काराणां प्रचारायोत्तेजनार्थकः प्रस्तावः, विद्यानिधि पं. गणेशदत्तशास्त्रिणोपस्थापितः, तृतीयदिनेचादावेव पं. हाथीभाई शास्त्रिभिः, पं. ज्वालाप्रसादमिश्रैः, सत्यचरणशास्त्री, गो. लक्ष्मणाचार्यैरनुमोदितः समर्थितश्च स्थिरतामनायि । एतदर्थमेकं संस्कारप्रचारसमितेः संटघनमपि जातम् । एतावतैव कार्यं पूर्णतामगमत् ॥

## २५-३-१६. तृतीयदिनम् ।

यथासमयमारभ्यत कार्यम् । श्रीभोलानाथशर्मणा बालविवाहनिरोधार्थं प्रस्तावः कृतः । गोपालचन्द्र बी. ए. महाशयो गवांरक्षणार्थं प्रासजत् । पं. वैद्यनाथ चतुर्वेदश्च विद्यालयेषु धार्मिकशिक्षार्थं रुचिरमुपन्यास्थत् । अनाथालयानां संस्थापनार्थमप्यपरः प्रस्तावः अक्रियत । सर्वेऽपि तत्कालमेव सर्वसंमत्योररीक्रियन्ते स्म । सभापतिना लार्ड चेंसफोर्ड महोदयस्य स्वागतसूचकः प्रस्तावः समुपस्थापितः, स्थिरीकृतश्चैकमत्येन । संमेलनस्य प्रबन्धाद्यर्थं स्वीकृतप्रस्तावान् कार्ये परिणेतुं 'सार्वजनिक प्रार्थनाश्च भारते प्रसारयितुमेका बलशालिनी' स्थापिनी समितिरसृज्यत' यस्यां प्रत्येकप्रान्तस्य संभाविताः प्रतिनिधयः सभ्यत्वेनाव्रियन्त । धार्मिकविवादास्पदविषयाणां शास्त्रीयनिर्णयमुद्घाटयितुमेकस्या 'व्यवस्थापकपरिषदो अपि गमनिका निरधार्यत । अस्यां सुप्रथितयशसः

सुगृहीतनामानः पण्डितपुङ्गवाः सदस्यत्वेन स्थानं लभेरन् धार्मिकपुस्तकलेखका यथा किल विद्यालयेषु पाठनायोपयुक्ता भवेत्—चतुर्वेदी द्वारकाप्रसादशर्मश्रेष्ठिक्षेमराज श्रीकृष्णदासाभ्यां ५० १०० रूप्यकाणां (क्रमशः) सौवर्णपदकप्रदानं प्रतिज्ञातम् । गोस्वामिश्रीवल्लभाचार्यमहाराजैः विंशत्स्वर्णपदकानां प्रदानं तेभ्योऽनुमतं यान् गुणविशेषाद्यर्थं संमेलनं सत्कारभाजनमाकलयेत् । संमेलनस्य प्रधानकार्यालय इन्द्रप्रस्थे देहल्यां (Delhi) त्वरितं प्रतिष्ठापितः स्यात्, कलिकाता काशी लवपुरेभ्यश्चागामि वर्षार्थं निमन्त्रणानि प्राप्तानि, कार्यकारिणी समितिः पश्चात् निर्धार्यैकं स्वीकृत्य द्योतयिष्यतीति संसूच्य स्वागतकारिणीसभायै, सभापतिमहाभागाय श्रीवैद्यनाथचतुर्वेदाय च धन्यवादान्वितीर्य सभासमापनप्रस्तावमकरोत् श्री दीनदयालुशर्मा । श्रीवैद्यनाथचतुर्वेदीक् दीनदयालु शर्माणो वर्षापिता अनेकैः साधुवादैः, अन्ये च कार्यकर्तारः सहायकाः स्वेच्छासेवका धन्यवादैः सत्कृताः ततः दीनदयालुशर्मणा गवर्नमेंटकृते कार्तज्ञ्यं प्रकाशितवता स भगवन्नामकीर्तनमलौकिकस्योत्साहस्य जयघोषैर्बाधिरितदिङ्मण्डलस्यापूर्वस्वर्गीयदृश्यस्य मध्ये सकुशलं समापितं सम्मेलकृत्यम् ॥

सभापतेर्दक्षिणतो वामतश्च बहवः पुण्यश्लोका महानुभावा मञ्चोपर्यतिष्ठन्त । तेषु कतिपयनामानीमानि गोस्वामिश्रीबालकृष्णलालमहाराजाः उदय पुरेन्द्रस्य गुरवः गो श्री वल्लभाचार्यगोपाललालमहोदयौ स्वामिश्रीवरदराजाचार्यमहाराजाः स्वामि श्री ब्रह्मदेवतीर्थमहाभागाः, दीवान अमर नाथ बहादुर सी आई. ई. काश्मीरराज्यसचिवदीवानदयाशा कौल सी. आई. ई. अलवरराज्यामात्यः, ठाकुरमहताबसिंहठाकुरनन्द किशोरसिंहौ जयपु-

रकौंसिलसदस्यौ दीवान बहादुर धाऊ रघुवीरसिंहः, रायबहादुर मुंशी रौशनलालश्च (भरतपुरकौंसिलसभ्यौ,) रायबहादुर पं. श्रीरामदीक्षित बी. ए., कंसवाडाराज्यमन्त्री, श्री प्रभाकरभट्टाचार्यः एम्. ए. दतियाराज्यप्रतिनिधिः, व्याख्यानवाचस्पति पं. दीनदयालु शर्मा, महामहोपाध्याय पं. हरप्रसादशास्त्री एम्. ए. सी. ऐ. ई. कलकत्ता, म०. म०. पं. बालेराय दिल्ली, म०. म०. पं. हर नारायणशास्त्री दिल्ली, विद्यावाचस्पति पं. श्रीकृष्णशास्त्री पटियाला, विद्यानिधि, पं. गणेशदत्तशास्त्री ग्वालियर, विद्यावारिधि पं. ज्वालाप्रसाद पं. दुर्गायत्त पंत गोविन्दरामशास्त्री बेरली, पं. हाथी भाई शास्त्री जामनगर, ए. गणपतिशास्त्री मंडसा (मद्रास), पं. गिरिधर शास्त्री जयपुरम्, पं. सत्यचरणशास्त्री कलकत्ता माननीय राय रामशरणदास बहादुर लाहौर, दीवान कृष्णा किशोरः, सरधार बूटासिंह सी. आई. ई. रावलपिंडी, राय बहादुर कन्हैयालाल दिल्ली, ठाकुर महाचन्द्र अमृतसर रायबहादुर ताबूविश्वेश्वर लाल हलवासिया बाबूराम देवचोखानी कलिकत्ता, सेठक्षेम राजश्री कृष्णदास बम्बई पं. द्वारकाप्रसाद चतुर्वेदी, अधिकारी जगन्नाथ दासः, पं. गिरिधरशर्मा, पं. राधाचरणगोस्वामी, पं. आनन्द-नारायण, लाला बलदेवसिंहः, रायबहादुर रामदास चतुर्वेदी, मटेल श्यामविहारीलालः, पं. भोलानाथशर्मा लालगोपालचन्द्र पि. ए. पं. ऋषिरामः, श्रेष्ठी आत्मारामः, ठाकुरजालिमसिंहः, अन्ये च भिन्नभिन्न प्रान्तैर्हया कृपया समागता आसन् ॥

महासंमेलनस्य संयुक्तमन्त्री ।



## देशवृत्तान्ताः ॥

---

वत्सरेऽस्मिन् दारुणेनायोधनेन पत्रिकादिमुद्रणसामग्रीदौर्लभ्यात् अतर्कितोऽनन्तरन्यैश्च कारणैः सहृदयायाः प्रकाशने कियानिव विलम्बः समजनि। असमीचीनं वेषं धारयितुं रमणीयवेषोज्ज्वला सहृदया न संमन्यते। किं कुर्मः। यावच्छक्यं तस्या मनोरथं पूरयितुं महान्यत्नः अनुष्ठीयते। अतः प्रेमार्द्रहृदयाः अनुवाचकाः पत्रिकाप्रकाशे अवर्जनीयतया समापतितं विलम्बं क्षमया सहेयुरिति प्रार्थयते सप्रश्रयं सपादकः ॥

श्रीवाणीविलासमुद्रालयाधिपः अपूर्वानमुद्रितानद्वैतग्रन्थान् इदे रमणीये च पत्रे प्रकाशयितुं महान्तमनितरसाधारणमुत्साहमावहति ॥

महीशूरराज्ये पार्थक्येन युनिवर्सिटिसङ्घः एकः निरमायि। निश्चिता नियमाः अनवद्याः देशोन्नतिकारका विलसन्ति ॥

---

# विषयाः ।

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥



संपु. ९. ] नलवर्ष वैशाखमासः । [ संचि. २.

## सुभाषितानि ॥

परिशुद्धामपि वृत्तिं
समाश्रितो दुर्जनः परान्व्यथते ।
पवनाशिनोऽपि भुजगाः
परोपतापं न मुञ्चन्ति ॥ १ ॥

प्रेरयति परमनार्यः
शक्तिविहीनोऽपि जगदभिद्रोहे ।
तेजयति शस्त्रधारां
स्वयमसमर्था शिला च्छेत्तुम् ॥ २ ॥

बिसमलमशनाय स्वादुपानाय तोयं
शयनमवनिपृष्ठे वल्कले वाससी च ।
नवघनमधुपानभ्रान्तसर्वेन्द्रियाणां
अविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ ३ ॥

॥ श्रीः ॥

# ॥ कुमारसंभवविमर्शः ॥

(पूर्वतोऽनुवृत्तम्)

——*——

एतावता नन्वनुमेयशोभि
काञ्चीगुणस्थानमनिन्दितायाः ।
आरोपितं यद्गिरिशेन पश्चा-
दनन्यनारीकमनीयमङ्कम् ॥ ३७ ॥

अत्र कामेश्वराङ्कस्थिताया भवान्याः महिमानं संकल्पस्य विषयीकुर्वन्महाकविः अनयैवाङ्कमारोपितया महादेवस्य माहाभाग्यमनिर्वचनीयमुदपादीति सूचयन् 'काञ्चीगुणस्थानमनिन्दितायाः' इत्यनेन अतिपावनी तस्यास्तनुरसकृदनुध्याता भक्तानसंशयं पुनातीत्युपदिशन् देवीपूजकानां माहात्म्यमनितरसाधारणमनक्षरमावेदयतीव ॥

इह योगिनामग्रिमं वशिनामुत्तमं ज्ञानिनां ज्ञानदं महादेवमपि रूपविभ्रमैरावर्जितवत्या गौर्याः लावण्यमीदृशमिति अनुक्तमेव ज्ञायेत भावुकैरिति साकूतमवबोधयति कालिदासः ॥

तस्याः प्रविष्टा नतनाभिरन्ध्रं
रराज तन्वी नवरोमराजिः ।
नीवीमतिक्रम्य सितेतरस्य
तन्मेखलामध्यमणेरिवार्चिः ॥ ३८ ॥

पूर्वस्मिन्पद्ये प्रस्तुतां काञ्चीमनुस्मरन् तन्मध्यमणेरर्चिषा नव-

रोमराजिमुपमयन् भवान्या उपासकानां शुभानुध्यानस्य कामपि शुद्धसत्वमयीं मूर्तिमुपस्थापयति । सर्वमङ्गलाया देव्या रोमावलिं भगवत्पादा एवमनुवर्णयन्तिः—

'हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतसङ्गो मनसिजः ।
समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानीते तव जननि रोमावलिरिति ॥' इति

**मध्येन सा वेदिविलग्नमध्या**
**वलित्रयं चारु बभार बाला ।**
**आरोहणार्थं नवयौवनस्य**
**कामेन सोपानमिव प्रयुक्तम् ॥ ३९ ॥**

इह देव्यास्त्रिवल्या शोभां वर्णयन्महाकविः 'वेदिविलग्नमध्या' इत्यनेन तन्मूर्तेरतिपावनत्वं विशिष्य देवकार्योपयोगित्वं चोपादिशन्, 'अत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः' इत्यन्यत्रोक्तामात्मनः सूक्तिमनुस्मारयन्, पुरारातिविजयं भाविनमुत्प्रेक्षमाणेन मदनेन विधातुर्नैपुणीमप्रमाणीकुर्वता तदवयवशोभानिर्माणे स्वच्छन्दानुरोधेन प्रयत्न अनुष्ठित इति निपुणमवगमयति भावुकान् । 'तस्यारम्भः चतुरवनिताविभ्रमैरेव सिद्धः' इति मेघे तमिममाशयं साधु निरूपयति च ॥

श्रीमन्तः शङ्कराचार्याश्च भवान्यास्त्रिवलिसंविधानमधिकृत्य मदनमेव विधातारमभिप्रयन्ति—

तथा हि—

'कुचौ सद्यः स्विद्यत्तटघटितकूर्पासभिदुरौ
कषन्तौ दोर्मूले कनककलशाभौ कलयता ।

तव त्रातुं भङ्गादलमिति वलग्नं तनुभुवा
त्रिधा नद्धं देवि त्रिवलिलवलीवल्लिभिरिव ' ॥ इति ।

**अन्योन्यमुत्पीडदुत्पलाक्ष्याः**
**स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।**
**मध्ये यथा श्याममुखस्य तस्य**
**मृणालसूत्रान्तरमप्यलभ्यम् ॥ ४० ॥**

स्तनद्वयस्यान्तरे मृणालसूत्रगतेरप्यकाशो नास्तीति वर्णयति कालिदासः । व्योम्नोऽपि नास्त्यन्तरमिति भगवत्पादाः—

तथा हि—

' विमर्दादन्योन्यं कुचकलशयोरन्तरगतम्
तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम् ॥ ' इति ।

पद्यमिदमनुचिन्तयतामस्माकम् ' मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ' इत्यस्यैव महाकवेः सूक्तिः स्मरणपदवीमास्कन्दति ॥

**शिरीषपुष्पाधिकसौकुमार्यौ**
**बाहू तदीयाविति मे वितर्कः ।**
**पराजितेनापि कृतौ हरस्य**
**यौ कण्ठपाशौ मकरध्वजेन ॥ ४१ ॥**

सुकुमारैर्मनोहरैः पुष्पविशिखैरविचालितमनाविद्धं च विषमलोचनस्य स्वान्तं पर्वतराजपुत्र्याः बाह्वोर्दर्शनेन मोहितं मदनविवशममभूदतस्तस्या बाह्वोः सौकुमार्यं लोकोत्तरमिति वर्णयन्भवानीभक्तः कविः तस्याः प्रत्यङ्गसौष्ठवं देवकार्यनिष्पादनाय मदनस्य

साधनमासीदिति सम्यगवबोधयति । शिरीषकुसुमेषु पुरमथनस्य अधिका प्रीतिरस्तीत्यपि ध्वन्यते ॥

अत्र देवतायाः बाह्वोर्द्वयमेव महाकविना ध्यानस्य विषयीक्रियते । श्रीमद्भिस्तु 'मृणालीमृद्वीनां तव भुजलतानां चतसृणां चतुर्भिः सौन्दर्यं सरसिजभवः स्तौति वदनैः' इति बाहुचतुष्टयं स्तूयते ॥

कण्ठस्य तस्यास्तनुबन्धुरस्य
मुक्ताकलापस्य च निस्तुलस्य ।
अन्योन्यशोभाजननाद्बभूव
साधारणो भूषणभूष्यभावः ॥ ४२ ॥

'मुक्ताकलापः कण्ठेन भूष्यते कण्ठश्च मुक्ताकलापेन' इति वदन्महाकविः अन्योन्यशोभाजनकत्वं तयोरवगमयति । भवानीकण्ठस्पर्शेन मुक्ताहारस्य काप्यपूर्वा शोभा समजनीति प्रथमं मनस्याकलयन्महाकविः भवानीकण्ठग्रहमसुलभं लब्धवतो मुक्ताकलापस्यानितरसाधारणं वैभवमपलपितुमनीहमान इव उभयोरपि साम्यनिरूपणमेवोचितमिति निश्चिन्वानः तयोरन्योन्यं भूषणभूष्यभावं वर्णयतीति मन्यामहे ॥

श्रीशङ्कराचार्यास्तु—

'भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती
तव ग्रीवा धत्ते मुखकमलनालश्रियमियम् ।
स्वतः श्वेता कालागरुबहुलजम्बालमलिना
मृणालीलालित्यं वहति यदधोहारलतिका ॥

इति भवान्या ग्रीवावैभवमनुवर्णयति ॥

(क्रमशः ।)

॥ श्रीः ॥

# ॥ चित्रकेतूपाख्यानम् ॥

[ पूर्वतोऽनुवृत्तम् ]

---

कृतद्युतिस्तु सपत्नीनां तां क्रूरां चेष्टामजानन्ती 'बालोयं नाद्यापि सुप्तोत्थितः' इति सञ्चिन्त्य कार्यान्तरव्यापृता बभूव। एवं महान्तं कालं प्रसमीक्ष्यापि अप्रबुद्धमेव कुमारमवधार्य चकितहृदया मनीषिणी सा राजमहिषी धात्रीमाहूय 'भद्रे मम पुत्रं सत्वरमादेहि' इत्यचोदयत्। साऽप्यनुपदमेव तत्र गत्वा उत्तारलोचनम्, प्राणेन्द्रियादिभिः परित्यक्तम्, शीतकलेबरम्, काष्ठवत् भूमौ शयानम्, अप्राप्तयौवनम्, कनकवर्णाभं तं बालं निशाम्य 'हा हतास्मि' इति सकरुणं विलपन्ती सत्वाविष्टेव कराभ्यामुर उच्चकैस्ताडयन्ती सहसा भूमौ पपात। तदाकर्ण्य सा राज्ञी सत्वरं ससंभ्रमं च तत्रागत्य तं मृतं निश्चित्य परिवृद्धया शुचाऽभिभूता, विकीर्णशिरोरुहाम्बरा, अञ्जनाश्रुधाराभिस्तमभिषिञ्चन्ती, विह्वलाङ्गयष्टिः अशनिहतेव मोहमूर्च्छिता, क्षणात्संज्ञामवाप्य स्नेहानुबन्धेन पुनःपुनस्तमालिङ्गन्ती, मूर्ध्न्युपजिघ्रती, वक्षसि आनने कपोले शिरसि च असकृत् चुम्बन्ती, 'उत्तिष्ठ तात, इमे ते वयस्यास्त्वां विहर्तुमाह्वयन्ति, चिरं सुप्तोऽसि, जागृहि, स्तन्यं पिब, अशनायया श्रान्तोऽसि, एहि वत्स, परिष्वजस्व, इदं स्वाद्वन्नं भुंक्ष्व, इदं क्षीरमास्वादय। तव बालकेलीभिः मन्दस्मितेन कलप्रलापेन च अस्माकं शुचं हर, हतमङ्गलां मां मा कार्षीः। गर्भभारभरणक्लेशं तनुशोषणं नैरुच्यं च लेशतोऽपि नाजीगणम्। प्रसूतिसमये दुर्वारमनुल्लेख्यं च शूलं सोढम्।

एतावत्पर्यन्तं मलमयी च शय्या ईषद्वैमनस्यमपि विना अनुभूतम् । सर्वमिदं त्वदर्थमेव । एतस्य सर्वस्य निष्कृतिरीदृशमेव वा तात । त्वमेव मे जीवितम्, त्वमेव मे प्राणाः, त्वमेव मे सुखम् मम सर्वं त्वमेव । मम सुखं दुःखं च त्वय्येव आयत्तम् त्वदन्यो नास्ति मेऽस्मिन् लोके प्रियतमः । एतादृशं मां मा प्रतारय वत्स' इति सगद्गदं तं लालयन्ती सुचिरं विललाप । राजाऽपि मन्त्रिपुरोहितादिभिर्वृतो वज्रापातमिवैतदाकर्ण्य अश्रुकणोपरुद्धकण्ठो निरुद्धदृष्टिः दीर्घदीर्घं श्वसन् पदेपदे स्खलन् स्नेहानुबन्धैधितेन शोकाग्निना नितरां परिदह्यमानो विस्रस्तशिरोरुहाम्बरो मृतस्य पादमूले पतितः मुक्तकण्ठं प्राकृतवद्रुरोद । एवं सर्वं तद्राजकुलं क्षणमात्रेण किंकर्तव्यतामूढं आपन्नकश्मलं नष्टसंज्ञमनायकं च बभूव ॥

एतस्मिन् व्यतिकरे अङ्गिरा नाम महर्षिः सर्वमेतत् स्वयोगबलेन ज्ञात्वा नारदद्वितीयः सहसा तं देशमाजगाम । तत्र च मृतस्य शिशोरन्तिके पतितं शोकाभिभूतचेतसं राजानं निरीक्ष्य परमकारुणिकौ तावित्थमुपदिदिशतुः— 'भो राजन्, विदितवेदितव्यस्य, श्रुतश्रोतव्यस्य, अधीताध्येतव्यस्य, अधिगताधिगन्तव्यस्य, दृष्टद्रष्टव्यस्य, विचारितविचारयितव्यस्य उपदिष्टोपदेष्टव्यस्य लोकतत्वनिष्णातस्य च ते न किमपि नूत्नतया वक्तव्यांशमुत्पश्यामः । चिरेण दैवतानुग्रहाल्लब्धो महता च प्रयत्नेन संवर्धितो यदि कश्चित् कुमारो बाल्य एव म्रियते तर्हि स्थाने एव शरीरिणां शोकमूर्च्छा; किं पुनरवाप्तसकलैश्वर्यस्य समस्तभूमण्डलाधिपस्य दिगन्तविश्रान्तकीर्तेरेकसन्ततेस्तव । त्वमेतावति महति संकटे हतेन विधिना निर्घृणं पातित इति नूनं नितान्तमनुशोचामः । तथापि

तत्वत आलोच्यमाने सर्वमिदमज्ञानविजृम्भितमेव भवति । सुदूरमालोच्यापि मृतस्यास्य शिशोस्तव च न कमपि सम्बन्धं पश्यामः, यदज्ञानेन अयं महान् प्रक्षोभः । आ ब्रह्म आ च गोपालमिदं विदितचरं यत् कालेन देहिनो देहेन संयुज्यन्ते वियुज्यन्ते च; जनिमतां च मृतिः स्वाभाविकी अपरिहार्या चेति । किं च, जनिर्मृतिर्वा न देहिनः जीर्णवासोन्यायेन देही पूर्वं देहं विहाय देहान्तमाददाति ॥

'देहेन देहिनो राजन्
देहाद्देहोऽभिजायते ।
बीजादेव यथा बीजं
देह्यर्थ इव शाश्वतः' ॥

देहे नष्टे देह्यपि स्वरूपनाशं नश्यतीति प्राकृतजनाभिमानोऽन्धपरम्पराकृत एव । इममेवार्थं श्रीभगवानपि——

'देही नित्यमवध्योऽयं देहे सर्वस्य भारत' ।
'अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ॥'

इत्यादिभिर्गीतावचनैरर्जुनमुपादिक्षत् । यावत्कर्मफलोपभोगं देही पञ्जरशुकन्यायेन देहे वसति, तत्क्षये तु ततोऽपक्रम्य देहान्तरमादत्त इति वस्तुगतिः । एवं च सति क वा देहिनो मृतिकथा, कुत्र वा इयं परिदेवना' इत्यादिभिस्तत्वोपदेशैः शोकसागरमग्नं तं बोधयामासतुः ॥

( क्रमशः । )

॥ श्रीः ॥

# अतिमूत्रम् । ( Diabetes. )

( पूर्वतोऽनुवृत्तम् । )

---*---

अत्र कस्साधुः ?। निदानपदेन कारणकारणस्यैव ग्रहणमित्युक्तत्वात्कारणभूतवातादिदोषप्रकोपस्य कारणमाहारादिकम्भवतीति, सुश्रुतदर्शितदिश आहारादेरेव निदानत्वेन ग्रहणं युक्तम् । उत्तरत्र प्रमेहचिकित्सिते चरकेणाप्येतत्पक्षस्यैवांगीकृतत्वात् 'आस्यासुख' इत्यादिना ॥

अथास्य प्रमेहस्य स्वभेदविशिष्टनिदानदोषा विव्रीयन्ते । तद्यथा— 'आस्यासुख' इत्यादिबोधितम् 'दिवास्वप्नाऽव्यायाम' इत्यादिबोधितं चाहारविहारादिरूपं निदानं सन्निकृष्टम् । तत्तद्धेतुभेदेन प्रवृद्धस्य कफादिदोषस्य तत्तद्धेतुगतोद्बोधकसामग्री विप्रकृष्टम् । 'यदा ह्येते त्रयो निदानादिविशेषाः परस्परं नानुबध्नन्ति' तदा विकाराभिनिर्वृत्त्यभावान्निदानादिपरस्परसंबन्धाभावो व्यभिचारिप्राथानिके च, असात्म्येन्द्रियार्थसंयोगभेदेऽयोगरूपं निदानं तु 'स्वाद्वास्यं च जायत इत्युक्त्या तद्भिन्नरसाग्रहणरूपम् । आस्यमाधुर्यान्मधुरस्यातिमधुरतया प्रतीतिरतियोगम् । मधुरभिन्नरसानामास्यमाधुर्येण संयोगादन्यथा प्रतीतिर्मिथ्यायोगम् । तेषान्तु पूर्वरूपाणि हस्तपाददाहः । स्निग्धपिच्छिलगुरुता गात्रणाम्पिपासा...' इत्याद्युक्तेर्हेमन्तादिष्वपि शीताद्यननुभवो वसन्तादिष्वधिकं तापादेरनुभवश्च परिणामः । अपि च 'हायनकयवचीनकोद्दालकादीनां'

कफादिदोषवर्धकत्वाद्दोषप्रकोपकनिदानत्वम् । द्रवद्रव्याणां व्याधिनिदानत्वम् । दिवास्वप्नादीनां चोभयनिदानत्वं द्रष्टव्यम् । आहारादयो बाह्यनिदानानि, दोषदूष्या आभ्यन्तरानिदानानीत्युक्तमेव । अथ च दोषेषु, कफप्रमेहभेदेषु कफोऽनुबन्ध्यः । वातपित्तावनुबन्धौ । एवमन्यत्रापि द्रष्टव्यम् । 'त्रयाणामेषां निदानादिविशेषाणां सन्निपाते क्षिप्रं श्लेष्मा प्रकोपमापद्यते । प्रागतिभूयस्त्वात् । स प्रकुपित एव क्षिप्रं शरीरे विसृप्तिं लभते' इति चरकाचार्यवचनात्तत्तदाहारादिभिः कफस्य स्वस्थानाच्च्युतिरूप आशयापकर्षः । कफप्रमेहादिषु यदा कफादिरभिवर्धते, तदा पित्तादिः क्षयं यातीत्यादिदोषाणां क्षयादिगतिविशेषो बोध्यः ॥

तथा च प्रमेहस्य सामान्यतो निर्व्यापारता, दिवास्वापो, दध्यादिगुरुमधुराहारभक्षणमपि च कफमेदोवृद्धिकरं यत्तत्सर्वेणापि वर्धितानि दुष्टानि वातपित्तश्लेष्ममेदोऽस्रशुक्रमांसशरीरजक्लेदवसामज्जलसीकारसौजोरूपदोषदूष्याणि च कारणानीति फलितम् ॥

अथाऽस्य भेदान्निरूपयामः । 'ते एवं त्रिदोषप्रकोपनिमित्ता विंशतिप्रमेहाः' इति चरकः । 'एवमेते विंशतिः प्रमेहास्सोपद्रवाः' इति सुश्रुतः । विंशत्येवं प्रमेहास्तु नराणामिह लक्षणम्' इति हारीतः । 'विंशतिरेव प्रमेहा' इति माधवश्च । अतो नास्त्यत्र संदेहगन्धः ॥

एते विंशतिभेदाश्शुद्धाः । अवान्तरसांकर्यादसंख्यविधा इति । 'यदा ह्येते त्रयो निदानादिविशेषाः परस्परं नानुबध्नन्ति, न तदा विकाराभिनिर्वृत्तिः । चिराद्वाप्यभिनिर्वर्तन्ते, तनवो वा भवन्त्यथवाप्ययथोक्तसर्वलिङ्गा विपर्ययेण विपरीता' इति चरकः । 'यथा हि वर्णानां पञ्चानामुत्कर्षकृतेन संयोगविशेषेण शबलबभ्रुकपिलकपोत-

मेचकादीनां वर्णानामनेकेषामुत्पत्तिर्भवति, एवमेव दोषधातुमलाहारविशेषेण प्रमेहाणां नानाकारणं भवति' इति सुश्रुतश्च सूचितवन्तौ । अतः प्रमेहाणामानन्त्याच्छुद्धानां विंशतिप्रमेहाणामेवात्र स्वीकारः । तत्र कफदोषप्रधाना दशभेदाः । पित्तदोषप्रधानाश्च षट् । वातप्रधानाश्चत्वारः ॥

तत्र कफादीनां यथा प्रकोपान्मूत्रदुष्टिपर्यन्ता सम्प्राप्तिस्तथा वक्ष्यामि । ननु तत्र संप्राप्तिर्नामका? या प्रस्तूयतेऽत्रेति चेत् 'यथा दुष्टेन दोषेण यथा चानुविसर्पता । निर्वृत्तिरामयस्यासौ सम्प्राप्तिः' इति वाग्भटमाधवादीनां वचनाद्दोषेतिकर्तव्यतोपलक्षितं व्याधिजन्म सम्प्राप्तिः' इति ज्ञायते । 'जन्मनोऽपि बोधविषयत्वेन ज्ञानकारणत्वाज्जन्ममात्रस्य सम्प्राप्तित्वम् इति' हरिचन्द्रोक्तं तु न सम्यक् । आलोकादेरिव चिकित्सायामेतत्सम्प्राप्तेरनुपयुक्तत्वादित्यलम् । तथा च तत्तत्प्रकरणोक्तदिशा दुष्टे शरीरे चोर्ध्वादिगतिभेदेन विसर्पद्भिर्वातादिदोषैस्तत्तद्व्याधिजननमेव सम्प्राप्तिरिति फलितम् ।

एवं चात्र कफादिदोषोत्प्रकोपकनिदानकफदोष मेदोरक्तादिदूष्याणां सन्निपाते प्राग्वृद्धिमत्वाच्छ्लेष्मा प्रकोपमापद्य क्षिप्रं शरीरे विसर्पति । शरीरशैथिल्याद्विसर्पंत्स आदितो मेदसा संसृज्यते । मेदसोऽपि ततः पूर्वं बहुधा वृद्धत्वान्मेदोगुणैरनेकधा समानगुणवत्वादसौ कफः सर्वात्मना मिश्रीभूय मेदो दूषयन्दुष्टेन मेदसा सहितः शरीरजक्लेदमांसाभ्यां मिलति । ततश्च तयोरप्यतिप्रवृद्धचरत्वात्कफः स्वमेदोभ्यां दुष्टान्मांसात्पूतिमांसपिटकाः संभावयति । शरीरजक्लेदन्तु तावताऽप्रकृतिभूतः कफः मूत्रत्वेन परिणमयति । मूत्रत्वेन परिणतः क्लेदः श्लेष्ममेदोभ्यामुपहितो वङ्क्षणाऽस्थिप्रभव-

मूत्रस्रोतसां मुखान्यासाद्य वर्तमानं कफं प्रतिरुध्य श्लैष्मिकैर्गुणैर्वैषम्यहानिवृद्धियुक्तैर्युक्तो बहिर्निस्सरत्यतिमात्रम् । तथा चोक्तं चरकेण—

'त्रयाणामेषां निदानादिविशेषाणां सन्निपाते क्षिप्रं श्लेष्मा प्रकोपमापद्यते' इत्यारभ्य 'वैषम्यहानिवृद्धियुक्तैः' इत्यन्तम् ॥

एवमेव पित्तदोषोत्पादकनिदानादिसन्निपातेऽपि पित्तं मेदादिकं प्रदुष्य स्वकैर्लक्षणैर्मूत्रं बहु निस्सारयति ॥

वातदोषप्रकोपकनिदानैर्वातदोषः प्रकुपितः कफपित्तयोः क्षीणयोः शरीरे विसर्पन्वसामादाय मूत्रद्वारमभिपद्य वसा मेहम्, मज्जानमादाय मज्जमेहम्, लसीकामादाय हस्तिमेहम्, ओज आदाय मधुमेहञ्च जनयति । एवं विंशतिप्रभेदा भवन्ति ॥

तत्र कफादिदोषसमुत्थानां भेदानां नामानि तु तत्तदृषीणां भिद्यन्ते ॥ तथा हि—

'ते खल्विमे दश प्रमेहा नामविशेषेण भवन्ति । तथा उदकमेहश्चेक्षुमेहश्च सान्द्रमेहश्च सान्द्रप्रसादमेहश्च शुक्लमेहश्च शुक्रमेहश्च शीतमेहश्च सिकतामेहश्च शनैर्मेहश्च लालामेहश्चेति' 'क्षारप्रमेहश्च कालप्रमेहश्च नीलमेहश्च लोहितमेहश्च मञ्जिष्ठामेहश्च हरिद्रामेहश्च इति । 'वसामेहमभिनिर्वर्तयति' 'मज्जमेहमभिनिर्वर्तयति, हस्तिमेहिनमाचक्षते' 'तदा मधुमेहिनं करोति' इति चरकाचार्यः ॥ तत्र कफादुदकेक्षुसुरासिकताशनैर्लवणपिष्टसान्द्रशुक्रफेनमेहा दश साध्याः ।' 'पित्तान्नीलहरिद्राम्लक्षारमञ्जिष्ठाशोणितमेहाः षट् । 'वातात्सर्पिर्वसाक्षौद्रहस्तिमेदाः' इति सुश्रुतः ॥

अत्रोदकेक्षुसान्द्रशुक्रसिकताशनैः क्षारनीलरक्तमंजिष्ठाहरिद्रावसाहस्तिमधुमेहानां साधारण्येऽपि, चरकोक्तसान्द्रप्रसादमे-

हस्थाने सुश्रुते सुरामेहः। शुक्रमेहस्थाने पिष्टमेहः शीतमेहस्थाने लवणमेहः, लालामेहस्थाने फेनमेहश्च— कालमेहस्थानेऽम्लमेहः। मज्जमेहस्थाने सर्पिर्मेहश्च पठिता इति सुव्यक्तो मतभेदः॥

अपि च हरीतस्तु 'जलप्रमेही रुधिरप्रमेहः पूयप्रमेहो लवणप्रमेहः। तक्रप्रमेहो खटिकप्रमेहः शुक्रप्रमेहः कथितः पुरस्तात्। स्याच्छर्करामेहो वसप्रमेहो रसप्रमेहोऽन्यघृतप्रमेहः। पित्तप्रमेही कफमेहिनश्च मधुप्रमेहीति विभावयेच्च'— इति कानिचिदपूर्वाणि सामान्यानि च नामान्यपूर्णमुक्तवान्॥

माधवश्चोदकेक्षुसान्द्रसुरापिष्टशुक्रसिकताशीतशनैर्लाला—क्षारनीलहरिद्रामंजिष्ठरक्त-- वसामज्जक्षौद्र (मधु) हस्तिमेहानङ्गीकृत्य लक्षणान्युक्तवान्। एतन्मते चरकसुश्रुतमतद्वयाङ्गीकृतनामसंकरो दृश्यते। इत्येवं नामतः सामञ्जस्यं न विद्यते। अपि च सर्वमुनीनामपि वचनस्य प्रामाण्यादिदमित्थमिति न निश्चेयम्। 'स्मृतिद्वैधवत्सर्वमपि प्रमाणम्' इति विजयरक्षितोक्तदिशा सर्वं प्रमाणमेव॥

नन्वेवं सति कथं लक्ष्यलक्षणसमन्वयाच्चिकित्साक्रमसंचलनमिति चेन्मैवम्। 'तत्र येन गुणेनैकेनानेकेन वा भूयस्तामुपसृज्यते तत्समाख्यं गौणं नामविशेषं प्राप्नोति'। 'पित्तगुणविशेषेण नामविशेषाः' 'यथा च नामानि तथैव लक्षणं' 'मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते' इत्यादिप्रमाणतो यथा यथा यस्य लक्षणं तथा तस्य नामेति न लक्षणनैयत्याच्चिकित्साविधिः, किं तु सूक्ष्मधिया स्वयमपि विकल्प्य चिकित्सा विधेयेति बोधनात्। अतो न तावन्मात्रेण संशयप्रसंगः॥

अथैषां पूर्वरूपमाविष्कुर्मः । ननु किमिदं पूर्वरूपम् । यदिदं विचार्यत इति चेत् ॥

पूर्वरूपं नाम येन भाविव्याधिविशेषो लक्ष्यते न तु दोषविशेषः इति पराशरः । 'द्विविधं हि पूर्वरूपं भवति । सामान्यं विशिष्टं च । तत्र सामान्यं येन दोषदूष्यसंमूर्छनाऽवस्थाजनितेन भाविज्वरादिव्याधिमात्रं प्रतीयते न तु वातादिजनितत्वादिविशेषः, तत् विशिष्टं यथा— उरः क्षतादौ लिङ्गान्येव वातादिजान्यव्यक्तानि- इत्यादिविजयरक्षितः । 'प्राग्रूपं त्रिधा दृश्यते । किंचिच्छारीरं किंचिन्मानसं किंचिच्छारीरमानसं चेति' इत्याद्यरुणदत्तः ॥

यथाकथंचित् भेदवत्त्वेऽपि, व्याधिसामान्यस्याव्यक्तांकुरावस्था प्राग्रूपमिति प्रतिभाति ॥

तादृशं चाऽस्य 'जटिलीभावं केशेषु माधुर्यमास्ये करपादयोस्सुप्ततां दाहं मुखतालुकण्ठशोषम्पिपासामालस्यं मलं च काये कायच्छिद्रेषूपदेहं परिदाहं सुप्ततां चाङ्गेषु षट्पदपिपीलिकाभिश्शरीरमूत्राभिशरणं मूत्रे च मूत्रदोषान्वितशरीरगन्धं निद्रां तन्द्रां च सर्वकालम्' इति चरकोक्तलक्षणमेव भवतीति । सुश्रुतादिभिस्त्वेतदेवासंपूर्णमुक्तमपि पूर्वमुन्यभिप्रेताङ्गीकारो दृश्यते । यथा— जटिलीभावः केशानां वृद्धिश्च नखानाम्' इति चकारेणानुक्तान्यपि तत्तत्पूर्वरूपाणि ज्ञेयानि इत्यभिप्रायकत्वाच्चरकोक्तानामन्येषामपि संग्रहः । चरकानुक्तानाम् 'वृद्धिश्च नखानाम्' इत्यादीनां चरकेऽपि 'निद्रां तन्द्रां च सर्वकालम्' इत्यत्रत्य चकारेण समुच्चयो ज्ञेयः ॥

एवमेव 'दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः । दाहश्चिक्कणता देहे तृट् स्वाद्वास्यं च जायते ॥ इति वदतो माध-

वस्यापि चकारेणानुक्तसमुच्चयोभिप्रेत एवेति दृश्यते ॥ उक्तं च विजयरक्षितेन । 'अत्र चकारात् सुश्रुतोक्तकेशजटिलीभावनखाति वृद्धी बोध्ये' इति ॥

एतेषां प्रमेहभेदानां लक्षणान्यपि नामविशेषवदन्योन्यं भिद्यन्ते मुनीनाम् ॥

( शिष्टमग्रे )

॥ श्रीः ॥

## ॥ धीमान् जामाता ॥

( पूर्वतोऽनुवृत्तम् )

---

सङ्घशः समवस्थिता अन्ये जना रे बालिशशिरोमणे, चाण्डाल दयानभिज्ञ, कृतान्तकिङ्कर, जननीगर्भभारभूत, ब्राह्मणाधम, रासभकुमार, किमिदमकृथा इत्यादिगालीशतैर्धिक्कुर्वन्तस्तं भर्त्सयन्ति स्म । सपदि स्वप्रमाणगणं प्रादर्शयन्मिलितेभ्यः सर्वेभ्यः । न तस्य कोप्युपयोगः समजनि । तदुदीरितमवमत्यैव सभे यथात्मबलं विविधया हस्तोपचारपूजया तं समभावयन् । किं मां ताडयथ किं कठिनतरैर्मुष्टिभिः कुट्टयथ सा पत्नी किल मे, पतिरहं तस्याः, स्वामी, भर्ता, पालकश्च दयितश्च धवश्चाहमेव नान्यो मयि जीवति भवितुमर्हति । सत्येवं हितं वाऽहितं वा तस्याः कर्तुमस्ति मे सर्वथाऽधिकारः के नाम यूयं मां ताडयितुमित्यवोचत्सूरिमूर्खः । पुनश्च संजातरोषा बान्धवास्तदितरेऽपि मिलिता जना मुष्टिभिराहत्य गच्छ मूर्ख, पुरः पन्थानमाकलयन् मा भाषस्व नेष्याम स्त्वां राजान्तिकं योजयिष्यामश्चापुनर्दर्शनशासनेन त्वामित्यादिवाक्प्रपञ्चेन, भीषयन्तः सगलहस्तं निष्कासयन्तश्च तं प्रतस्थिरे ॥

पुंडरीकस्तु (साभिमानं) उदारः कल्पः प्रचलत राजसमीपं किं नोररीकरोति कलत्रे पत्युरधिकारं महीपतिः येन वयं दण्डार्हा भवेमेति प्रत्युत्तरयन्सावेगं सर्वेषां पुरः प्राचलत् ॥

पुंडरीकेण साकं सर्वे निशीथिन्यां नृपनिकेतनमभिप्रस्थिताः । राजवीथ्यां सर्वत्र शान्तिसाम्राज्यमेव प्रसृतमासीत् । सारमेया अपि सशङ्कं निद्रति स्म । न चिराय प्रयातास्ते राजान्तःपुरद्वारमाजग्मुः । विनाऽनुमतिं महीपतिसदनाभ्यन्तरं प्रवेष्टुमशक्नुवंतस्ते द्वारोपान्त एवातिष्ठन् । परं जामातृमणिः पार्श्वस्थितान्सायुधानपि रक्षापुरुषान्पश्यन्नकुतोभयं सजवमन्तःपुरांतरं तथा प्राविशत् । यथा कोलाहलमन्तरा प्रतिबद्धुं न प्रभवन्ति द्वारकक्ष्यारक्षिणः । चेत्कलकलवरं शृणोति भूवसुधावल्लभस्तदा ध्रुवं करालकालतुलोऽभिक्रुध्यत्यस्मानिति विचिन्त्य, जागरूका अपि रक्षिणस्सरभसं गच्छतं तं न प्रत्यषेधयन् । अप्रतिहतगमनः स सुधीः शयनागारं भूपतेराससाद ।

अनितरसुकरमणिदीपदीपिते क्रीडाभवने, जांबूनदविरचितमंचास्तीर्णायाममृतफेनपटलपाण्डुरायाम्, शय्यायामासीनाया अरुणाधराकिरणकोमलपल्लवलास्यहेतुभिर्वदनांबुजपरिमलोद्गाहिभिः श्वाससमीरैः हरनयनदहनदग्धं स्फुलिङ्गशेषं मदनमिव संधुक्षयन्त्या, अच्छाच्छदुकूलदृश्यमानकोमलोरुमूलाया, निजवपुषि विहितपदं यौवनमेव कृतार्थयन्त्या, राकानिशाकरोपमाननाया राज्ञ्या उत्संगमेवोपधानीकृत्य, सुखं स्वपिति स्म पृथिवीपालः । तत्र वातायनायाताः पवनतनया वहन्ति स्म मन्दं मन्दम् । प्रधाननिद्रानिदानं स्तब्धतैव समन्तादवर्तत । दृष्ट्वैतत्सर्वमभीतचेताः पुण्डरीको मञ्चमधिरुह्य राजमहिष्या अन्यांके निधाय मूर्धानं निद्रांगनारतिसमागमसुखेनैव लोचने मीलयामास ॥

सा तु मेदिनीदयितसुंदरी विस्मयसाध्वसस्तिमितमानसा चिंतयांचकार, यद्यहं प्रबोधयामि महीकान्तं नूनं स तदा निद्राभङ्गाभिक्रुद्धोऽस्नेहदर्शी नेष्यति मां यमक्षयम्। सर्वश्रुता हि संधाऽस्य 'यो मां स्वापसुखात्प्रच्यावति स वध्य,' इति। यद्यबोधयन्ती तूष्णीमातिष्ठे स्वयमेव स्वापांते संवृत्तमेतदवलोक्योग्रशासनो मरणदण्डेन युनक्ति माम्। हा! उभयतः पाशरज्जुः! किं करवाणि! क यास्यामि! कं देवं शरणमुपैमि! का गतिः! ध्रुवमहं जीवितसंशयमापन्नास्मि। किं मृत्युरेव मर्त्यनेपथ्यधारी निहन्तुं मामिहागत्य स्वपिति? उत जन्मान्तरचीर्णदुष्कृतराशिरेव मानुषाकृतिः प्राणैर्मां वियोजयितुमत्रायातः? अथवा दुर्भागधेयविलसितमिदं मे मन्दभाग्यायाः? आहोस्वित् असहमानया सपत्न्या कयाचित्कृतं दुश्चेष्टितमेतत्? हा! हतास्मि किं विधास्यामि! को हि नाम कुर्याज्जीविताकाङ्क्षी एवम्। केन वाऽनेन भवितव्यं कथमेनं दुरात्मानं न रुरुधुः द्वारपालाः? नास्ति किल दुष्प्रवेशे परुषपूरुषरक्षितेऽस्मिन्प्रवेशसम्भावनापि मानवानाम्। किं केनचिदवतीर्णेन दिव्यपुरुषेण भाव्यम्, कथमेतत्सङ्घटताम्, नात्र विद्यते निदानं नाम दिविषदवतारस्य कोयं प्रत्यासन्नप्रायमरणस्तरुणः (अवलोक्य) ब्राह्मण इव दृश्यतेऽनेन यज्ञोपवीतेन हा! कष्टम्! वृथा पतिष्यति पातयति च मामल्पावशिष्टायुःशेषो वैधेयवर्यो द्विजन्मा क्रूरतरकालकरालदंष्ट्रान्तराले। कथमनेनाज्ञशिरोमणिना ब्राह्मणेन समं जीवामि जगति। क उपायः कथमिदं स्वप्नेप्यसंभाव्यमापतितम्। अयि वसुधे किं वितरसि जीवितदक्षिणाम्। बत त्वमपि सपत्नीव मे हा! हतास्मि न कोप्यत्र मां त्रातुं न जननी न जनको न बन्धुवर्गः। हा! अम्ब कियदस्ति वक्तव्यं किं करोमि कःशरणं कमाह्वयामि।

नाद्यावधि कोप्युपासितो देवः सभक्त्युन्मेषम् पारलौकिकप्रवादेऽश्रद्दधानया गत्वरविषयलोलुपया दुर्भाग्यया मया । येनाहं स त्रायते मामापदीति तमेव ध्यायन्ती किंचिदधिगतजीविताशा निवसामि । हा । भावि मरणमपि दुरपवाददूषितं भविष्यति । किमिदानीं विधेयम् । अकीर्तिरप्यार्तिजनन्याताराधिपतारकं स्थास्यति दुरदृष्टानुगृहीताया मम । न जातः सुतोऽपि परलोकवासिन्यै दातुं जलाञ्जलिम् । अयि घृणागन्धविधुर विधातः, वद केन वा दुष्कर्मणा दशामीदृशीमापन्नास्मि येनाहं जन्मान्तरेऽपि तादृशं कर्म करिष्यामि । किं नु सत्यं न प्रभविष्यति प्रमार्ष्टुं कोपि त्वदीयां ललाटलिखितां लिपिम् ? । कथं पितामहो भूत्वा फाले व्यलिखः दुर्वर्णपङ्क्तिमीदृशीम् । कालमेतावन्तं यादृशं सुखमन्वभवं तद्द्विगुणितं न हि न हि शतगुणितं दुःखमिदमचिन्तितमापतितम् । कोऽस्य प्रतीकारः किमियं यातना निरपाया भवेत् । हा ! कं नु शरणमुपैमि ? हा ! श्रुतः किल बहुवारमदत्तावधानयापि मया पौराणिकानां मुखतो महत्यामापादि भक्त्या परिचिन्तितः परमकारुणिको भगवान् लक्ष्मीरमण आगत्य पालयति भक्तवर्गमिति । हन्त सर्वथा तमेव शरणं व्रजामि । अयि भो चराचरगुरो, सर्वव्यापिन्, देवाधिदेव, सकलशुभाशुभकर्मसाक्षिन्, लक्ष्मीपते नारायण, निष्पापां दूनामापन्नामबलामनाथामशरणां गोपाय मामिति ॥

चिन्तयन्त्यामेव तस्यां महता भवनाभ्यन्तरमापूरयता स्वापशब्देन पुण्डरीकस्य प्रबुद्धो नृपतिः पाणिगृहीत्या वामाङ्के सधैर्यं मूर्धानं विन्यस्य प्रसुप्तं तमैक्षत । क्रोधताम्राक्षः स राजा शयानस्य तस्य मस्तके यावदात्मबलं मुष्टिना प्राहरत् । सशीर्षग्रहणमुत्तस्थौ

जामातृदेवः । रे रे मानवाधम श्वपाक ब्रूहि तावत् यावन्न वियुज्यसे प्राणैः किमर्थमकृथा अवज्ञामेनां ममेति प्रस्फुरिताधरं कोपातिशयवेपमानगात्रयष्टिरवादीद्धरणीनाथः । भार्यामुखदिदृक्षया स्वगृहतो गमनमारभ्य संवृत्तं वृत्तं स्वपाण्डितीप्रदर्शनपुरस्सरं सर्वमाचचक्षे धीमान् जामाता । प्रतीक्षन्ते त्वां भार्याबन्धवो मे बहिरिति चाकथयत् । तदाकर्ण्य धराधरो बहिर्द्वारमगमत् । तान्सर्वान्समीक्ष्य तद्व्याहृतं सर्वं तथ्यमाकलयामास । आस्तामेतत्सर्वं कुतस्त्वं मम महिष्या वामाङ्के अशेथा इति कोपकम्पितस्वरं साधिःक्कारशब्दमभणत्क्षोणीकान्तः । तदुपश्रुत्य साधु ! साधु ! साधीयान्प्रश्नः पृच्छ मामेवं सम्यगुत्तरयामीति सानन्दं प्रतिब्रुवन्प्राह पुण्डरीकः 'यथा राजा तथा प्रजाः' इति निखिलजनपूजनीयं वचो मामेवं कर्तुं प्रावर्तयदिति । तच्छ्रुत्वा मेदिनीदयितो विगतकोपः प्रहस्य तस्मिन्नुदितदयः पण्डितमूर्खं मा पुनरेवं कार्षीरिति निर्भत्स्य समेषां तद्बन्धूनां यथागतं गन्तव्यमित्यादिश्यापूर्वं नरपशुमेनं कतिपयदिनानि निजनिकेतने सुखं वसेत्याज्ञापयत् अतिक्रान्तेषु केषुचिद्दिवसेषु गमयामास धाम तदीयं पृथिवीपालः तं पुण्डरीकमिति ॥

मुद्गूविठ्ठलाचार्यः । (गलगली)

॥ श्रीः ॥

## ॥ गोविन्दसूरिः ॥

[ पूर्वतोऽनुवृत्तम् ]

---

गुरूत्तमविरहासहनो गोविन्दगुरुः श्यामायमानेन मुखेनापाण्डुरैरङ्गैस्तनीयस्या च गात्रयष्ट्या विमनायमान इव यदा भग-

वता श्रीमद्रामानुजमुनिना समवालोकि तदा दयार्द्रहृदयेनाभ्युनुज्ञातो-ऽभूत् वेङ्कटाचलं गत्वा गुरुवरमासेव्य सत्वरमेव काञ्चीं प्रत्यावर्तितुम् । तथेति च सपरितोषं समागत्य गृहबाह्यवितर्दिकामातस्थिवांसमेनं श्रुत्वा नाभ्यनन्दद्गुरुवरः । वत्सलया धर्मपत्न्या विनिवेदितोऽपि नैव संजहर्ष ॥

निष्कासय तमुन्मत्तमनात्मज्ञं जडं शठम् ।
विक्रीतायाः स्वयं धेनोर्ग्रासं को वा प्रदास्यति ॥

इति च प्रत्याचख्यौ । सुमहता च परिदेवितेनापराधक्षमामभ्यर्थयता गोविन्दगुरुणा सकृदुपसेवनमात्रं याचितः कृपया तदनुमेने । श्रीपादोदकं च विततार । स्वस्थहृदयश्च प्रत्याजगाम पटुतरगतिः पवित्रं काञ्चीनगरम् । निवेदयामास सकलमुदन्तं गुरोर्गृहे वृत्तं गुरवे । श्रीमान् लक्ष्मणमुनिश्च समश्लाघत गुरुराजस्य वैखरीम् ।

अथ क्रमेण श्रीमतो भगवतो रामानुजाचार्यस्य श्रीरङ्गस्थलमधिवसतः सकलमपि कैङ्कर्यमाचरन् क्षणमात्रमपि तमविरहन् तत एव हेतोः 'तदीयपदच्छाया' महतां व्यपदेशमासीदन्ननितरसुलभामन्तरङ्गपरिकरप्रथामधिजगाम ॥

कुलाभिवृद्धिकामया जनन्याऽसकृदनुनाथितोऽपि नैव प्रावर्ततासौ जायायाम् । अथ विदितवृत्तान्तेन गुरुवरेण 'आश्रमधर्मेऽप्रमत्तं वर्तितव्यं किल' इति सूचितोऽपि यथापुरमेव तत्राप्रवृत्तिमातन्वानः ॥

वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥'
इति प्रमाणं सूचयता

'श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते ।
आज्ञाछेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥'

इति भगवतो वचनं चावबोधयता गृहस्थधर्माननुस्मारितोऽपि गुरुणा वैराग्येणैव वर्तमानः, पृष्टश्च किमिदमिति

'परमपुरुषप्रत्यासत्त्या विविक्तपदं न मे
क्षणमपि भवत्यार्यो धर्मो विविक्तसमाश्रयः ।'

इति विज्ञापितः 'यद्येवं सर्वथा जितकामोऽसि, तर्हि तदर्ह आश्रम आश्रयणीयः' इति बोधितः प्रव्रज्यामासिषेवे ॥

पारिव्रज्येऽप्यस्य नाम गोविन्दगुरुरित्येव । व्यावहारिकी समाख्या तु 'एम्बार्' इति । श्रीमतो भगवतो रामानुजाचार्यस्य 'एम्बेरुमान्' इति व्यावहारिकं नाम । तदेव नाम प्रथमं गुरुणास्य समादेशि ।

'तन्नामवहनं चेति दास्यमेतच्चतुर्विधम् ।'

इति गुरुनामवहनस्य दास्यलक्ष्मतया परिगणनेऽपि महासात्त्विकोऽयं पामराणां साम्यप्रतिपत्तिर्भवति ततोऽपि सङ्कुचन्यदा तन्नानुमेने तदा कतिपयाक्षरच्युतकेन नाम तदन्यथयित्वा समादेशि ।

सुगृहीतनाम्नः श्रीवत्साङ्कमिश्रसूरेरात्मजातौ श्रीपराशरभट्टार्यव्यासभट्टावयमेवाध्यात्मविद्यामशिक्षयत् । अयमेवमुपश्लोक्यते । यथा—

'रामानुजपदच्छाया गोविन्दाह्वानपायिनी ।
तदायत्तस्वरूपा सा जीयान्मद्विश्रमस्थली' ॥ इति ।

एतद्विरचिततया प्रथितानि मुक्तकानि पद्यानि कानिचन यथा—

‘न चेद्रामानुजेत्येषा चतुरा चतुरक्षरी ।
कामवस्थां प्रपद्यन्ते जन्तवो हन्त मादृशाः ॥
पुण्याम्भोजविकासाय पापध्वान्तक्षयाय च ।
श्रीमानाविरभूद्भूमौ रामानुजदिवाकरः ॥
तृणीकृतविरिञ्चादि निरङ्कुशविभूतयः ।
रामानुजपदाम्भोजसमाश्रयणशालिनः ॥’

गोविन्दगुरुरयं स्त्रीणामसाधारणं लक्ष्म किमिति स्वसब्रह्मचारिणं पर्यन्वयुङ्क्तेति प्रथते ॥

श्रीशैलपूर्णसदने किङ्करवृत्तिमातिष्ठन्नेष गुरुवराय सज्जितायां शय्यायां स्वयमुपनिपत्य तत इतो विलुठ्योत्थितस्तदात्वे तद्दृष्टवतः कस्यापि निवेदनेन ‘वत्स किमेवमाचरः? मदीयायां शय्यायां शयितस्य ते नूनमनतिपात्यो धर्मद्रोहः’ इति पृष्टः, ‘सत्यं जाने । सज्जोऽस्मि नारकीर्यातना अनुभवितुम् । यथा तथा वाऽपि भवान्यहम् । श्रीमन्तो निद्राभङ्गमन्तरा सुखं शयानाः परमं मे मनसस्तोषं मोक्षादधिकमाधास्यन्ति । तल्पे मत्कुणमशकादिसद्भावासद्भावावास्तरणस्य कोमलता । तदभावौ च परीक्षणीयौ । अन्यथा भवतां सुखहानिः स्यादिति मयैवमाचरितम्’ इति प्रतिपाद्य गुरुवरं समतोषयत् ॥

श्रीरङ्गस्थले च कदाचित् देवालयात्प्रतिनिवर्तमानोऽन्तर्गृहं गीतानि गायन्त्याः कस्याश्चन वारविलासिन्या गृहबाह्याङ्कणे सुचिरमवस्थितः । श्रुत्वैतन्नितरामेव समुद्विग्नेन भगवद्रामानुजमुनिना ‘किमेवमन्याय्यमाकलितम्’ इत्यनुयुक्तः ‘श्रीमदीयदिव्यगुणापदानोपवर्णनपराणि गीतानि क्वाऽप्यन्तर्गृहं समाकर्णितानि । तन्निर्वे-

शरसो न मया परित्यक्तुमपारि । अद्य तदवसितम् । अथाद्य भगवतो गुणवर्णनं गातुमुपक्रान्तम् । अहमधुना श्रीमदीयं चरण-कमलमासेवितुं कृतत्वरः समागमम्' इति विज्ञापयामास ॥

कदाचिच्च सब्रह्मचारिभिर्गोविन्दगुरुरयमभिष्टुतः स्वयमपि 'सत्यं सत्यम्' इति सशिरःकम्पमभ्यनन्दत् । न्यवेदयंश्च ते तमर्थं श्रीमद्रामानुजाचार्यसन्निधौ । 'नैतन्न्याय्यम्' इति च तेनान्वयु-ज्यत । 'सत्यं जनोऽयं स्तूयत इति चेत् कृतमनेन चिरं बिल्वानो-कहारोहणं गङ्गाधराय नीराहरणं भसितानुलेपनमित्यादिकमेव किल मदीयं चरितं श्लाघितं भवतीति यदधुना परमपावनाः पुण्यत-मापदानास्तत्रभवन्तो महान्तः साधुवादमारचयन्ति तदिदमखिलं श्रीमतां शुभानुध्यानस्य श्रीशैलपूर्णगुरुवरकरुणापरीवाहस्य चैव वै-भवमभिष्टूयत इति किं वा युक्तं दासेनानेन गुरुस्तोत्रावसरे मौने-नासितुम्' इति विनीतं न्यवेदयत् ।

एवमीदृशान्यस्य रमणीयानि परःशतानि सुभाषितानि सम-योचितानि धर्म्याणि च यशस्यानि चानुश्रूयन्ते । तानि च विस्तर-भयान्नात्र प्रस्तूयन्ते ॥

गुरुरेषः काञ्चीपुरासन्ने मधुरमङ्गलग्रामे समवातरत् । भग-वद्रामानुजाचार्येभ्यः पूर्वमेव परमं पदं प्रापत् । पञ्चसप्ततिं वत्स-रानेष प्राकृतं मण्डलमध्यवसत् ॥

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।

इति गायति भगवान् । तथा निजपरिजनायुधादीन्यपि चाव-

तारयतीति स्मर्यते । तदसौ श्रीपतेरादेशेन भूमाववतीर्णः इत्यैतिहासिकाः ॥

—— * ——

॥ श्रीः ॥

## ॥ देशबान्धवगोपालकृष्णघोक्ले वियोगानुतापः ॥

—— * ——

धर्माय संपद्विनयाय विद्या
वाञ्छा स्वदेशोद्धरणाय नित्यम् ।
सदोपकाराय मनश्च यस्य
वन्द्यः स घोक्ले विबुधो नरेषु ॥ १ ॥

राज्याङ्गेषु यमाहुरेकपुरुषं धीरं प्रशान्तं बुधाः
यस्मिन्दानदयादिसुन्दरगुणाः सन्तीतरैर्दुर्गमाः ।
यस्यैकस्य वशंगताऽतिगहना वाणी सुधावाहिनी
स स्वर्लोकमपास्य बान्धवजनानस्मांश्च घोक्ले गतः ॥ २ ॥

घोक्लेनामकभानुमत्यधिगते मुक्तिं विहायावनिं
म्लानिं यान्ति मुखानि भारतभुवां पद्मानि दुःखैर्यथा ।
कृत्याकृत्यविचारणाविरहिता लोकाश्च कोका यथा
देशक्षेमकराश्च कार्यनिवहाः शान्ता हि यज्ञा यथा ॥ ३ ॥

घोक्लेनामन्दयाशालिन्! न्याय्यं किं? तव चेदृशम् ।
सोदरान्नः परित्यज्य गन्तुं लोकान्तरं हठात् ॥ ४ ॥

घोक्ले! भारतसागरेन्दुमख! भोः क्व प्रस्थितस्त्वं सखे!
माता ते विलपत्यनन्यगतिका साध्वी सदा मेदिनी ।

पश्येमं जनमादरेण विकलं दुःखे च मग्नं स्वकं
अन्याय्यं तव मातृदेशविभवे मन्दादरत्वं सुधीः ॥ ५ ॥
किं? यातोऽसि सुरेन्द्रमन्दिरमितो वादाय जीवेन भो
यातः किं? कमलापतेश्च सदनं नेतुं स्थिरां नः श्रियम् ।
वेत्तुं राजकलां सभां प्रचलितो वाणीपतेः किं सखे?
नोचेद्भारतसोदरेषु तव भोः कोपस्य किं कारणम् ॥ ६ ॥
मातर्मेदिनि! हा! तवाद्य तनयो घोक्ले गतो धीनिधिः
तेनान्यं सदृशं कथं नु? तनयं पश्येः सुधाभाषिणम् ।
कोवान्यस्तव भाविनीं गुरुगतिं प्रेक्षेत? धीरोऽनघः
कश्चान्योन्यविवादसङ्कुलपरे कालेऽधुना रक्षकः ॥ ७ ॥
हे देवेन्द्र! तवालयं प्रचलितो घोक्ले सतामग्रणीः
त्वं चामुं विनयान्वितो निरुपमं संपूजयार्घ्यैः स तम् ।
नोचेत्त्वामिह भारतीयसुजना निन्दन्तु पूजां विना
भूयासुर्द्विजपुङ्गवाश्च विमुखा वेषु प्रकोपैर्युताः ॥ ८ ॥
सत्स्वन्येषु नराधमेषु भुवने स्वार्थाय धावत्स्वहो
स्वार्थत्यागपरायणः सुचरितः सद्भावनाभासुरः ।
सौम्यः सुन्दरमन्दहासवदनो भाग्यं परं नो भुवः
दुर्बुद्धे! यम! पाप! केन? सहसा घोक्ले त्वया संहतः ॥९॥
भो भो भारतसोदराः! शृणुत मे दुःखं विना प्रार्थनां
योऽस्मद्देशकृते सदा सुविदितः स्वार्थं परित्यक्तवान् ।
तस्योदारगुणोज्वलस्य सरणिं संश्रित्य वर्तामहे
तेनात्मा परितुष्यतेऽस्य विदुषो लोकान्तरे संस्थितः ॥ १० ॥

**काशीभट्ट सुब्रह्मण्यशास्त्री ।**

॥ श्रीः ॥

# ॥ श्रीमती कमलकुमारी ॥

---*---

शारद ऋतुः, मङ्गलतरः कृष्णेतरः पक्षः, व्यतीतः प्रथमयामात्मको निशायाः समयः, प्रसन्नानि दिगन्तरालानि, विकसितप्रसूनपरिमलवाही वाति मन्दं मन्दं शीतलो मलयजो मारुतः, अच्छतमे नीलवर्णभासुरे नभःकेलिमन्दिरे विहरति भगवान् पीयूषभानुरात्मनः पीयूषमयैः करैर्जगच्चक्रमानन्दयँस्तारादारैः साकं स्वैरम् । नृत्यन्ति स्वच्छतराम्भति सरसि सानन्दं कुमुदानि विकसितानि, स्वर्गापगापयःफेनपाण्डुरवितानभासुरे कुशलरविवर्मप्रभृतिविरचितानुत्तमालेख्यभूषिते विलासमन्दिरे सानन्दनिर्भरं मृदुतरतूलमये सुवसनविरचिते शयने लावण्याधरीकृतमाररमणीभिर्नववधूभिर्नवनवा रतिक्रीडाः क्रीडं क्रीडं परिश्रान्ता निर्भरं परिरभ्य ताः प्रसुप्ताः सुखं विलासिनः । आप्रभातमाचसायं कृषिकर्मपरिश्रान्ताः कृषीवलाः कम्बलवृत्तगात्रा वशीकृता निद्राङ्गनया गाढम् , वनचराः स्वाः स्वा दरी आश्रित्य स्वैराचारपरिश्रान्ता प्रसुप्ता अनुभवन्ति विश्रान्तिसुखम् । पतत्रिणोऽपि निजेषु नीडेषु निजशावकैः साकं सुखमासेवन्ते निःशब्दम् निद्रानन्दम् । आदर्शतलामलसलिलाः स्रोतस्वन्त्यः शनैः शनैः प्रवहता समीरणेन समुत्थितैश्चलद्भिस्तरङ्गपोतैर्मधुरतरं निनादं कुर्वन्त्यः प्रवहन्ति; किम्बहुना, अखिलमप्येतत् भगवतो मायामयं ब्रह्माण्डमण्डलमुच्चैस्तरंशान्तिसाम्राज्यसिंहासनसमारूढमिव भासतेस्म ॥

प्रशान्तबहुले समयेऽस्मिन् तरुणिम्ना समाक्रान्तसकलावयवः

कोऽपि रजपूतवीरो गगनङ्कषानेकशाखाशिखरैर्महीरुहैर्नीरन्ध्रिते गिरितरङ्गिणीस्रवंत्याः परिसरे मन्दमारुतान्दोलिताँस्तरङ्गान् सकौतुकं क्षणं वीक्षमाणः क्षणं किमप्यन्वेषयन्निव सञ्चरतिस्म। कृतवीरभटाकल्पस्य तस्य सुन्दरतरं भासुरं वदनारविन्दमपृष्टमपि कथयतिस्म तदीयमनितरसुलभं पौरुषम्, जगद्विस्मयावहां मतिमत्ताञ्च। इतस्ततः पर्यटन् स रजपूत्तयुवा कमपि पुंमासं गाढं परिरभ्य विस्मृतस्वपरभावां मनागिव परित्यक्तबालभावां कामपि कमनीयतमां कामिनीमपश्यत्। एतद्विलोकनसमकालमेव मतिमतोऽपि तस्य हृदयं प्रतिपत्तिशून्यं संवृत्तम्, पादौ स्तम्भ इव कुण्ठितावभूताम्, चेतनापरित्यक्तमिवासीद्गात्रम्, क्षणेन च ततः सर्वं तद्वपुः क्रुधा सन्तप्तं सकम्पञ्च, निःसृता रदनासन्दष्टाधरादसृक्, प्रादुर्भूताश्च खरतरखदिराङ्गारप्रजलद्भ्यां नयनाभ्यां स्फुलिङ्गकणाः। कटौ लम्बमानात्कोशात्सरभसं निशिततरं खड्गं समाकृष्य करेण (क्षणंविचिन्त्य) पुनःकोशे तं निवेश्य स तरुणवीरः (उच्चैः साक्रोशमकरुणञ्च) तां सुन्दरीं साधु साधु कमलकुमारि? साधु बाढं त्वमसि योग्या तस्य भूवल्लभस्य स्नुषात्वमधिगन्तुम्। यः पुनरेतदखिलमपि भुवनमण्डलं धवलीकुरुतेस्म शरच्चन्द्रचन्द्रिकाचारुतमेन कीर्तिकदम्बेन, यश्च पवित्रतमेऽम्बेरान्वयसिन्धावध्यगच्छत्पीयूषभानुरिव जन्म, यस्य च निदेशमवनतेन शिरसा मालिकेव धारयति सामन्तचक्रमित्यब्रवीत्॥

पाठकमहोदयाः? या किलासीदनेनास्पृष्टकरुणालवेन वचसा तस्याः सुचरितायाः दशा, न तां वर्णयितुमेषा मे लेखनी प्रभवति। सत्यं तत्खलु महोदयाः? यदुदीरयन्ति विचक्षणाः, नूनमन्धीभवन्ति प्रणयपिशाचिकावशीकृतचेतसां स्त्रीपुरुषाणां नयनानीति। नखलवजा-

नात्सा प्रणयान्धीकृतविलोचना तत्र समागतं तं रजपूतकुलप्रसूतं युवानम् । तरुणोऽपि नाम नावालोकयदेतं सः, यो हि कमलकुमार्याः सुकृतैकसुलभाभ्यां सुकुमारतराभ्यां बाहुपाशाभ्यां दृढं विनिबन्धोऽविन्दत मन्देतरमानन्दम् । पाठकवराः ? आस्तामेतत् । दीयतामितोऽवधानम् । अग्रे किमासीत्तस्याः सुन्दर्या दशेति लिखत्येषा पापा लेखनी । महाभागाः ? निशम्य तानि परुषतमानि भाषितानि कम्पमानगात्रयष्टिः साऽभवत्किंकर्तव्यतामूढहृदया । यदि प्रतिभयं खड्खडिति गर्जन्ती विद्युदविदर्कितं निपतेत्पार्श्वे, अथापि नाम सुकुमारीयमेवं भूयात्कातरा । तदनु सा स्वबाहुसम्बद्धमुन्मुच्य पुरुषं मनागिव पश्चादपसरन्ती बाष्पाविले नयने कथमपि विस्फार्य भीतभीता यावद्विलोकयति, तावदासीन्नेत्रयोः पात्रमात्मनो जीवितेश्वरो मानसिंहनामा शौर्यराशिः श्रीमान्नजपूतवंशप्रदीपस्तरुणः प्रस्फुरत्पावकप्रज्वलल्लोचनयुगलो मूर्तिमान् कोप इव स्थितः । अपरत्र च सव्रीडं शिरोऽवनमय्य स्थितः कोऽपि यवनवीरः स्वबाहुपाशमुक्तः । निरीक्षमाणा चैतत्सुचरितकुलकलङ्कायमानमतर्कितोपनतं सभयं संभ्रान्ता सहसा मोहवशीकृता न्यपतद्भूतले । हा हन्त किङ्कुर्यात्साऽविज्ञातकुटिलभावाऽबला । पाठकप्रवराः ? बाढं खल्वयं प्रतिभयतमः समयः समापतितः ॥

प्रायः प्रियवाचकवरेण्यानां हृदयं सर्वथा संशयपिशाचिकासमाक्रान्तं भवेत् । कोऽयं मानसिंहनामा शौर्यराशी रजपूतकुलप्रसूतो युवा, केयं लावण्यनिर्जितकसुमसायकसुन्दरी सुन्दरी कमलकुमारी, कश्च कमलकुमार्या गाढमालिङ्गितो यवनयुवा ? कथञ्चैषः प्रतिभयतम उपनतः कालः ? इति ! शृणुत ॥

अस्ति समस्तसर्वंसहामण्डलमण्डनायमाने स्वस्तिनिकेतने आर्यावर्तप्रदेशे सर्वाङ्गहृदयङ्गमोऽम्बेरनामा विशालतमो विषयः । तत्र च समाक्रान्तरोदःकुहरेण यशः पटलेन विराजितः श्रीमान् सुगृहीत नामधेयः भूपालचूडामणिर्यशस्विसिंहनामा राजा मानवेन पथा परिपालयति स्म प्रजाः प्रजाः स्वा इव । तस्य च राज्ञो रूपे कुसुमधन्वा, प्रतापे वियन्मध्यहंसः, सङ्गरे धनञ्जयः, वितरणे राधेयः, विद्यासु सुरगुरुः, क्षमायां क्षमा, गभीरतायां रत्नाकर, इन्द्रियनिग्रहे गाङ्गेयः, सकलगुणशेवधिः सत्यवाक् मानसिंहनामा तनयोऽभवत् । स राजनन्दनोऽकार्यकरणेन निजपित्राऽम्बेरभूपतिना निर्वासनदण्डेन दण्डितस्य कस्यचिद्रजपूतवीरस्य सकलकलाविशारदां लावण्यसारसमुदायसदनं गुणवतीं कमलकुमार्यभिधां कन्यकां कामयते स्म तदीयगुणगणवशीकृतस्वान्तः । एतामेव च यवनवीरोप्येको लावण्यमोहितः प्रायतत स्वायत्तीकर्तुम् । अथैकदा रजपूतकुमारो मानसिंहो विजने कमलकुमार्या साकं महान्तं समयं सम्मन्त्र्य किमपि सङ्केतमचिन्तयत् ॥

अथ तस्मिन्नेवाहनि सा तरुणी व्यतीते निशिथिन्या आदिमे यामे पूर्वकृतसङ्केतानुसारेण गिरतरङ्गिणीनाम्नीं स्रोतस्वतीमगच्छत् । तत्र बृहत्तरशिलातलमधिष्ठाय तरलतरतरङ्गमाले तरङ्गिणीजले प्रतिबिम्बितस्य निशानायकस्य लीला विलोकमाना सानन्दमुपाविशत् । करतले तस्यास्तदा व्यराजतार्धविकसितानां नवमालिकाकुसुमानामर्धगुम्फिता माला । पार्श्वयोः शिलातल एवार्धोन्मीलितानि नवमालिकाकुसुमान्यनल्पान्यासुः । एकदा सा सुन्दरी तरङ्गिण्याश्चलतां तरङ्गाणां मञ्जुलेन निनादेन निजं कलकण्ठकूजितमधुरं

स्वरमेकीकृत्य श्रोतृश्रवणासेचनकं निजजीवितेश्वरगुणगणसूचकं किमपि मधुरतमं गायति स्म पद्यम्। एकदाऽस्मनोगुम्फनपाटवेनावाहिता बध्नातिस्म नवमालिकामालिकाम्। एकदा च गगनचत्वरे तारकाविलासिनीभिः साकं सविलासं विहरन्तं चन्द्रमसं विलोमयति स्म सतृष्णम्। एकदा च वियत्तलभासुराणि सङ्ख्यातिगान्युडूनि गणयित्वा गणयित्वा विफलमनोरथा श्राम्यति स्म। एकदा च शिलातलादुत्थिताभिमुखीनं पन्थानमवेक्षमाणा निराशेव निःश्वस्य तरलहृदयोपाविशति स्म तत्रैव शिलातले। एवमबलाजनसहजेन तारल्येन समाक्रान्तं स्वीयं हृदयं कथमपि निगृह्य करकमलकलितां तां मालां समाप्य निपुणं निर्वर्ण्य च न्यदधात् मनागिव मन्दं हसन्ती सा पार्श्वे आत्मनः॥

पाठकप्रवराः! महता परिश्रमेण निगृहीतमपि नवनीतपेलवं तस्या हृदयं पुनश्च वशीकृतं तरलतापिशाचिकया। उत्थाय पुनरवालोकयत्सांमुखीनमध्वानं सा। परं नास्या मनोरथमहीरुहः फलित इति तदीयमकथयद्विच्छायं वदनपुण्डरीकम्। एवं भग्नमनोरथा सा दीर्घमुष्णञ्च निश्वस्य यावदुपविशति तावदश्रूयत कुतोऽपि सावेगमभिपततस्तुरङ्गमस्य खुरपुटोत्थितः शब्दः। तदात्व एव दर्पणतलभासमानयोः कपोलयोरकासिष्ट मधुरतरं स्मितम्। सानन्दनिर्भरमुत्थिता च सा क्षणं क्षणदावल्लभं विलोकयन्ती प्राक्रमत पुनः स्वपरिचितं पद्यं मधुरं गातुम्। वल्लकीनिनादं न्यक्कुर्वता तदीयकण्ठभवेन गीतेनाखिलोऽपि स प्रदेशो गीतमय इवाभासिष्ट। गानलोलुपा व्यस्मार्षीदात्मानमपि सा। न्यपतन् तदा तदीयनयनाभ्यामश्रूणि मुक्ताफलानीव, पुलकिता गात्रयष्टिः,

विकसितं वदनपद्मम् क्षणं संवृत्ता तस्याश्चित्तवृत्तिर्योगारूढचेतसो योगिन इव । अल्पीयसैव कालेन सन्निकृष्ट एवाभवत्स तुरगखुरपुटजः शब्दः । तदा तु सा बालिका सरभसं शिलातलादवतीर्य तुरङ्गमादवतरन्तमेव तं युवानं 'कोऽयं समागतः? किं जीवितसर्वस्वं मे मानसिंह एवायं? आहोस्विदपरः कोऽपीति मनसाप्यविचारयन्ती प्रमोदजलभर पूर्णे नयने निमील्यैव नूनमयं मे जीवितेश्वर एवेति निश्चित्य प्रियसमालिंगनोत्सुकाभ्यां बाहुपाशाभ्यां निर्भरं निबध्य तदीयमसिञ्चच्छीतलेनानन्दाश्रुपूरेण विशालतमं वक्षः । अत्रान्तरे तत्र समागतो गिरितरङ्गिणीपरिसरे सञ्चरमाणो मानसिंह इति विदितमेव वाचकमहाशयानाम् । सर्वथा तर्कितं स्यात्कमलकुमार्या बाहुपाशसंसक्तो कुटिलमतिर्यवनवीर इति पटुतरमतिभिर्वाचकमहोदयैः । नूनं प्रियमहोदयाः? स एवायं दुरात्मा। आस्तामिदम् । आगच्छथ । मोहात्कमलकुमारी प्रतिबुद्धा नवेति विचारयामः

अथ व्यपगतायां कियत्यामपि कालकलायां मनागिव प्रतिबुद्धाविज्ञातकौटिल्यलेशा सा सुकुमारी निजाविवेकभवं सहसोपनतमपराधं मनसा विचिन्त्य हा हन्त हतास्मीति उच्चैस्तरं क्रन्दनेन जनमनो विदारयन्ती सहसा पुनर्मोहमुपगता निश्चेष्टं निपपात भूमौ । ईदृगवस्थामिमां वीक्ष्य स यवनवीरः सातिशयं विव्यथे चेतसि । मनागिव संवृत्तः कुपितोऽपि । परं मोहितां तां समाश्वासयितुं न प्रभवति स्म । प्रज्वलत्कोपानलप्रतप्तस्य मानसिंहस्य प्रतिभयतमं लोहितं वदनम्, खरतरखदिराङ्गारसदृक्षं नयनयुगलञ्च वीक्ष्य साध्वसेन यवनवीरस्य गात्रयष्टिः कम्पमाना संवृत्ता । विलीना धीरता, संभ्रान्तञ्चासीद्धृदयम् । पाठकप्रवराः? यवनवीरोऽपि नाम नास

साधारणः पुमान् । निजप्रचण्डभुजदण्डनिर्जितसपत्नमण्डलो वीरपुण्डरीक एवाभवत् । परं पराङ्गनासङ्गसम्भवदोषेण सकलमपि तदीयमजनि विनष्टं धैर्यम् । तत्रैव स्थित्वैतदवेक्षमाणस्य मानसिंहस्यापि विचित्रासीद्दशा । यां किलामन्यत मानसिंहः प्राणेभ्योऽपि गरीयसीं प्रेयसीं, सैव पुनः कमलकुमारी परं पुमांसमालिलिङ्गेति बाढं दोदूयते स्म । कियान्वा समागतः स्यात्तस्य कोपः, कर्मणानेनेति तर्कयन्तु वाचकप्रवरा एव । कोपसमाक्रान्तहृदयो मानसिंहः, साध्वसवशीकृतहृदयोयवनवीरश्चोभावपि परस्परं मूढाविव क्षणं वीक्षमाणावतिष्ठताम् । अवसरेऽस्मिन् तत्रैव महीयसा पादपेन प्रच्छन्नमूर्तयश्चत्वारोऽश्वारूढाः भटा महता जवेन समागताः । तान् निजान् सहचरान् विलोक्य प्रहृष्टो यवनवीरः सक्रोधावेशं सगौरवं सस्मितं च मानसिंहमैक्षत । परं मानसिंहो मनागपि साध्वसलवेनाप्यस्पृष्टो यथापूर्वं सदर्पं तं विलोकमान एवासीत् ॥

अथ मानसिंहो युद्धसन्नद्धान् तान्मत्वाऽकुतोभयं निशिततमं निजं चंद्रहासं सरभसं कोशान्निष्काश्य स्वयमप्यायोधनाय सज्जोऽभवत् । यवनवीरोऽपि मानसिंहकरतले सौदामिनीव स्फुरत्प्रभामण्डलं खड्गं विलोक्य सावेगमश्वमारुह्य सहचरैः साकं कोशादात्मनः खड्गं करेणादाय मानसिंहसंमुख आसीत् । एवमेकत्र खड्गमात्रसहायः पदातिर्मानसिंहः, अपरत्र तुरगारूढाः पंच सज्जीकृतायुधपाणयो यवनवीरा इति विषमतरं आयोधनं प्रवृत्तम् । तत्र यवनवीराः वयं पञ्च, मानसिंहस्त्वेक एव, सम्पराये पुनर्नकथमपि सम्भवेत्पराजयोऽस्माकम्, निरायासञ्च जित्वैतम्, सर्वथा जयलक्ष्मीसनाथा भवेमेति निश्चित्य युयुधिरे ।

(क्रमशः ।)

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ९. ] नलवर्ष ज्येष्ठमासः । [ संचि. ३.


## सुभाषितानि ॥

अनुकूलां विमलाङ्गीं
कुलजां कुशलां सुशीलसंपन्नाम् ।
पञ्चलकारां भार्यां
पुरुषः पुण्योदयाल्लभते ॥ १ ॥

क्षते प्रहारा निपतन्त्यभीक्ष्णं
धनक्षये वर्धति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति
छिद्रेष्वनर्था बहुली भवन्ति ॥ २ ॥

प्रभुर्विवेकी धनवांश्च दाता
विद्वान्विरागी प्रमदा सुशीला ।
तुरङ्गमः शस्त्रनिपातधीरो
भूमण्डलस्याभरणानि पञ्च ॥ ३ ॥

॥ श्रीः ॥

# ॥ पाणिनिः ॥

अनादिनिधनं ब्रह्म साक्षात्कृत्य दिवानिशम् ।
आनन्दार्णवनिर्मग्नं तन्नमामि मुनित्रयम् ॥

यः खलु शाश्वतिकं शब्दज्योतिः प्रकाश्य पदे पदे तत इतः स्खलतो लोकान् सानुकम्पमनुजग्राह तस्य भगवतः पाणिनेराचार्यस्य तमसावृतं चरिततत्त्वं प्रकाशयन्तः सर्वे वयमात्मनः कृतकृत्यतां सम्पादयामः । तस्य खलु विज्ञानराशेराचार्यस्य चरितजातं गुहायां निहितं परब्रह्मतत्त्वमिव दूरदर्शिनामपि दुरूहमेव दरीदृश्यते । बहवो विद्वांसः किल बहुधा वर्णयन्तो विवदन्ते । तत्र लघुत्रिमुनि-कल्पतरोरभीष्टार्थवितरणे शक्त्यभावेन कल्पतरुत्वमेव दूरापास्तमिति निश्चिन्वन्ति विपश्चितः । कथासरित्सागरोऽपि कुल्यायते खल्वाचार्य-चरितचर्चायाम् । मोक्षमूलभट्टाचार्यप्रभृतीनां पाश्चात्यानां निबन्धेषु शशशृङ्गायन्ते खलु युक्तयः । कैश्चिद्वैयाकरणैराचार्यस्य महिमानु-वर्णने कृतेऽपि चरितार्थो न चर्चितः । एवमत्र महति सङ्कट सङ्कुला वयं कमपि नूतनं पन्थानमाश्रित्य कोऽयं पाणिनिराचार्यः, कस्मिन्काले समुत्पन्नः, कतमं जनपदमलञ्चकार, कुतस्तस्य तादृशं शब्दविद्यारहस्यज्ञानसम्पादनपाटवम्, कश्च तस्य त्रयोदश्या संबन्ध, इत्यादीन् विषयान् निपुणं निरूपयामः ॥

'दाक्षीपुत्रस्य पाणिनेः' इति शिक्षावचनेन दाक्षीनाम्न्यां कस्याञ्चिदुत्पन्नोऽयमिति स्फुटमवगम्यते । पिता चास्य पाणिनो नाम कश्चिन्मुनिप्रवर इति शक्यमभ्यूहितुम् । तथा हि— पणिन्

शब्दादण्प्रत्यये परे भसंज्ञायां प्राप्तं टिलोपम् ‘गाथिविदथिकेशिगणिपणिनश्च’ इति सूत्रेण निषेधन्नाचार्यः पाणिनशब्दं व्याकरोति। तस्यापत्यं पाणिनिरिति च निश्चप्रचम्। ‘भणपणिनजशास्त्रे तातङः स्थानिनौ कौ’ इति नैषधीयः प्रयोगस्तु प्रामादिकः। न खलु पणिनशब्दः पाणिनीयः। महर्षेः पाणिनात् सुशीलायां दाक्ष्यां कृतावतारोऽयं वैयाकरणकुलगुरुरिति निर्विवादम् ॥

तूदीशलातुरेति सूत्रे शलातुर इति कस्यापि जनपदस्य नाम निर्दिष्टवानाचार्यः। पाणिनिपर्यायतया शालातुरीयशब्दमसकृत्प्रयुङ्क्ते भगवान् भाष्यकारः। अतश्च शलातुरनामानं जनपदं स्वजन्मना पवित्रीकृत्य प्रथयामास पावनचरितः पाणिनिरिति धीरो निश्चयः ॥

आचार्यस्य कालनिर्णये प्रवृत्ता विद्वांसोऽपि कमपि निश्चयमप्राप्य कुण्ठितमतिगतयः केचिदर्धादेव प्रतिनिवृत्ताः। केचन कमपि कालं निर्दिशन्तोऽपि युक्तिवचनैः साधयितुं न प्रभवन्ति। वयन्तु तत्र प्रवृत्ताः सम्प्रति यावच्छक्यं पश्यामः ॥

तत्र प्रथमतः किंचिदिदमवधारणीयम्— सत्स्वप्यैन्द्रचान्द्रादिषु प्राचीनव्याकरणेषु लौकिकालौकिकभाषासाधारणीं सरणिमाश्रयन् खलु नूत्नं व्याकरणं रचयामास पाणिनिः। तत्र मन्त्राणां ब्राह्मणानां ब्राह्मणकल्पानामितरेषां वैदिकग्रन्थानां च विलक्षणान् प्रयोगान् व्याकुर्वन्नाचार्यः किमिति पौराणिक्यां भाषायां तूष्णीकतामवलम्बते? किन्न पुराणानां प्रामाणिकत्वमभिमतं स्यादाचार्यस्य? किं वा पुराणशब्दानां संस्करणे समादर्तव्यो महान् क्लेशः? न हि न हि लौकिकीं भाषामननुसरन्तः प्रयोगाः पदनियमवैकल्यादिनिबन्धना विरलविरलाः

खलु दृश्यन्ते । ते च पञ्चषैरेव सूत्रैः संस्कर्तुं शक्यन्ते । एवं स्थिते वस्तुनि कुतो नाम पुराणगान् शब्दान् व्याकरणस्मृतिविषयान् न कृतवानाचार्यः ? अतो मन्यामहे पुराणोत्पत्तेरपि प्राचीनः स्यात्पाणिनिरिति । पुराणेतिहासादयो ग्रन्था नैव पाणिनेः काले वबृतिरे । अतो न तेषां शब्दान् सञ्चस्कार । स्वैरसंचाराः पुराणकर्तारो महर्षयस्तावदपाणिनीयानामपि शब्दानामार्षत्वात् साधुत्वमभिमन्यमाना नैव वैयाकरणमार्गमशिश्रयन् । विश्रामादीनां महाकविप्रयुक्तत्वात् साधुत्वं काव्यमार्गेऽपि दृश्यते खलु । पुराणकालादाचार्यस्य प्राचीनत्वादेव सोऽयं नवव्याकरणार्थवेत्तेति रामायणोक्तिरुपपद्यते । ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् । सारस्वतं चापिशलं शाकलं पाणिनीयकमिति नवव्याकरणानि तत्त्वनिधौ परिगणितानि । एवं च पाणिनीयस्य वाल्मीकिरामायणात् प्राचीनत्वं स्पष्टमेव । वैदिकपौराणिककालयोरन्तराले भवः पाणिनिरुदात्तादिस्वरानुगृहीतया वैदिक्या वाण्या स्वकृतमष्टकं पपाठेति नातिदूरमिदं विमर्शकानाम् । अन्यथा खल्वष्टकस्य सस्वरपाठे न कापि गतिरुपपद्यते । स्वादृतां भाषां वैदिकीं जानन्नाचार्यस्तत्र तत्र लुप्तविभक्तिकैः पदैः सूत्राण्युपसीव्यति स्म ॥

अपि च वैदिककालस्यान्तिमदशायामुत्पन्नेषु मण्डलब्राह्मणोपनिषदादिषु पाणिन्युपज्ञाद्वर्त्मनो रेखामात्रमप्यनुल्लङ्घमानं शुद्धं संस्कृतमुपलभ्यते । तेनापि वयमस्माकमाचार्यस्य पुराणेतिहासकालात् प्राचीनत्वमनुमिनुमः । किं च संस्कृतस्य संस्कृतत्वं पाणिनीयव्याकरणसंस्कृतत्वादित्यभिप्रयन्ति सूरयः । 'तस्मात् संस्कृता वागुदपद्यत' इति वैदिककालान्तिमग्रन्थेषु संस्कृतत्वेन व्यपदि-

श्यते गैर्वाणी वाणी । तेन चास्माकमाचार्यस्य पुराणकालादर्वाचीनत्वसिद्धान्तप्रवादः समुन्मूलितः ॥

अपि च 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति श्रूयते । इतरेषां व्याकरणानां लोकभाषामात्रोपयुक्तत्वात् पाणिनीयस्यैव वेदाङ्गत्वमित्याशेरते हि विद्वांसः । तथा च तस्याः श्रुतेरुत्पत्तिकाले पाणिनीयं व्याकरणं विरचितमासीदिति निश्चप्रचं खलु चर्चकमहाशयानाम् ॥

किं च 'पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् । सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किंचन' इति पराशरोपपुराणप्रामाण्यबलेन च पुराणकालात्प्राक्तनत्वमाचार्यस्य वीरवादं वदामः । इदं पद्यं पश्चात्तनैर्लिखितायोजितमिति नवीनचरित्रकाराणां प्राणभूतया लिखितायोजितपरिभाषया नेदं पराशरेण कृतं पुराणमिति मूलकुठारपरिभाषया वा विवक्षितार्थसाधने न किल विपश्चितामभिनिवेशः ॥

'यस्काच्च गोत्रे' इति सूत्रयन्नाचार्यः स्वस्य यास्काचार्यादर्वाचीनत्वमवधारयति । पाणिनेराचार्यस्य चरमे वयसि कृतावतारो भगवान् बादरायणः । अन्यथा खलु 'पारशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इति सूत्रे पाराशर्यग्रहणं नोपपद्येत । महाभारतादयो ग्रन्थास्तु पाणिनेः परमपदवीप्राप्त्यनन्तरमेव बादरायणेन निर्मिताः स्युरित्यस्माकं मतिलतायां प्रफुल्लः सिद्धान्तः ॥

पाश्चात्याः खलु वैदिकग्रन्थानां चतुःसहस्रवर्षदेशीयत्वं स्थापयन्ति । न तत्र वयं कामपि युक्तिं पश्यामः । अस्मत्प्राचां मतमनुरुन्धाना वयमस्य कालेयस्य युगस्यादौ वेदाः सर्वे प्रकाशिताः परमकारुणिकैरिति सिद्धान्तं पुरस्कुर्मः । अनया युक्त्या किल वेदानां

पञ्चसहस्रवत्सरीतः प्राक्तनत्वं निश्चेतुं शक्यते । तत्र प्रथमतः सहस्रं वत्सरा मन्त्रब्राह्मणोपनिषदाद्यर्थं विनियुज्यन्ताम् । वैदिकस्य कालस्यान्तिमदशायां पाणिनेरपि कालोऽवश्यमनुमन्तव्यः । तथा च चतुःसहस्रवत्सरदेशीयत्वं पाणिनेराचार्यस्येति परिणतः किल परमः सिद्धान्तः ॥

क्रैस्तववर्षप्रारम्भात् प्राक् चतुर्थशतकावसाने पाणिनेरवतार इति पूतिकूष्माण्डायमानः पाश्चात्यानां सिद्धान्तो दूरतस्त्याज्यः ॥

यवयवनमातुलाचार्याणामानुगिति सूत्रे यवनाल्लिप्यामिति वार्तिके च यवनपदोपादानात् युरोपखण्डान्तर्गतग्रीसदेशानामलक्साण्डर्नाम्ना प्रथितस्य राज्ञः प्रवेशानन्तरमेव पाणिनिः कात्यायनश्च बभूवतुरिति केषाञ्चिदूहोऽपि शिथिलबन्धो दृश्यते । 'न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः' इति श्रुत्या प्रागेव भारतवर्षेऽस्मिन् म्लेच्छजातिरासीदिति बाढं प्रतिजानीमः । त इमे म्लेच्छा यवनशब्देनोद्दिष्टा इत्यपि न वक्तव्यमिति न खल्वस्ति कस्यचिदाज्ञा । अनया सरण्या नन्दराज्यकाले पाणिनेरवस्थितिरिति प्रतिपादनपरायणः कल्पतरुरपि समूलमुन्मूलितः खलु ॥

पाणिनेः पश्चाद्बहोः कालात्परं व्यवहर्तॄणां दोषाद्भाषायामुत्पन्नान् विकारान् साधूकुर्वन् भगवान् कात्यायनो वार्तिकपाठं पपाठेति तत्त्वचिन्तयेव पाणिनिकात्यायनयोर्भिन्नकालत्वं यत् सिद्धान्तितं पाश्चात्यैस्तन्न विपश्चितां चर्चासहं प्रतिभाति । वार्तिकैः संस्कृतानि बहूनि लक्ष्याणि पाणिनेः प्राचीनैः शाकटायनकातन्त्रादिव्याकरणैः संस्कृतपूर्वाण्येव पश्यामः । 'न पदान्ताट्टोरनाम्' इति पाणिनिः सूत्रयामास । 'अनाम्नवतिनगरीणाम्' इति वार्तिककारः सङ्कलया-

मास । शाकटायनव्याकरणे च 'न पदान्ताट्टोरनाम्नवती' इति सूत्रितं दृश्यते । 'प्रत्यये भाषायां नित्यम्' इति वार्तिकविहितं कार्यम् 'प्रत्यये' इति सूत्रेण शाकटायनः साधयति । एवम् 'अध्वपरिमाणे च' इति वार्तिकेन कात्यायनोपज्ञत्वेन विज्ञातः प्रयोगः कातन्त्रव्याकरणे 'गव्यूतिरध्वमाने' इति सूत्रेण संस्क्रियते । एवं वार्तिकव्याकृतानां प्रयोगाणां पाणिनेः प्रागेव दर्शनात् पाणिनिकात्यायनयोर्विभिन्नकालकल्पना प्रामाणिकगर्हणामर्हति ॥

असौ चास्माकमाचार्यः पाणिनिर्विद्याग्रहणयोग्ये वयसि गुरुकुलवासमाश्रित्य सावधानमैन्द्रचान्द्रादीनि प्राचीनव्याकरणानि सम्यगधिजगे । तस्य तपोमहिम्ना शब्दविद्यारहस्यज्ञानमिति तावदर्थवादमात्रमित्यस्माकं विश्वासः । शाकल्यादीन् पूर्वान् वैयाकरणान् नामग्राहं गृह्णन् क्वचित् तेषां मतभेदं च निर्दिशन्नाचार्यः स्वस्य तद्व्याकरणज्ञानं स्फुटमेव खल्ववबोधयति । अस्य च विद्यादेशिको भगवानुपवर्ष इति कथासरित्सागरादवगच्छामः ॥

वर्णसमाम्नायं च तीव्रेण तपसा प्रत्यक्षीकृतो भगवान् परमेश्वरः पाणिनये शब्दविद्यारहस्यप्रकाशनार्थमुपदिष्टवानिति पाणिनौ भक्तिश्रद्धाजाड्याल्लोकानां प्रवादः । अयं किल वर्णसमाम्नायः प्राचीनशाकटायनव्याकरणादावनुबन्धायोजने वैरूप्यमापन्नोऽपि वर्णराशिरूपेणोपलभ्यत एव । तत्र हि—

अइउण्, ऋऌक्, एओङ्, ऐऔच्, हयवरलञ्, ञमङणनम्, जबगडदश्, झभघढधष्, खफछठथट्, चटतव्, कपय्, शषसअं, अः ≍क ≍पर्, हल् इति पठ्यते ॥

ऋक्तन्त्रव्याकरणे च 'इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं

ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्राय इन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्यः ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते न भुक्त्वा न नक्तं प्रब्रूयात्, ब्रह्मराशिः' इति वर्णसमाम्नायस्य पाणिनेः प्राचीनत्वं मुक्तकण्ठमुक्तमास्ते । अत एव कातन्त्रव्याकरणेऽपि 'सिद्धो वर्णसमाम्नायः' इति सूत्रितम् । एवं चायमकारादिर्वर्णराशिराचार्यशिष्यपरम्परया पाणिनेः श्रोत्रगोचरीभूतः । तत्र विशेषतस्तावदनुबन्धानाचार्यः स्वबुद्धिकौशलेन यथायथमायोज्य क्वचिदप्यविचालनीयं दृढप्रतिष्ठं व्याकरणं प्रातिष्ठिपत् ॥

एवमाचार्यो गुरुकुलवासेन विद्यामधीत्य सर्वश्लाघनीयं सर्वाभिलषणीयं च बुद्धिवैशद्यं सम्पादयामास । तस्य च विज्ञानं कीदृशमिति परीक्षते स्म भगवान् भाष्यकारः । आह च वृद्धिसूत्रे भाष्ये—प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावाकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म । तत्र वर्णेनाप्यनर्थकेन न भवितव्यं किं पुनरियता सूत्रेणेति । अनेन पाणिनीये वर्णस्याप्यानर्थक्यं नास्तीति महिमातिशयो मतिप्रौढिमा च पाणिनेः स्पष्टमुपदिष्टः ॥

इत्थं गुरुकुलवासक्लेशमविगणयन् पाणिनिरनवद्यां विद्यां सम्पाद्य व्याकरणस्य शरीरमष्टकं धातुपाठादिकं च व्यरचत् । पातालविजयाख्यं काव्यं च प्रणिनाय । व्याकरणशिक्षां च शिष्यानशिशिक्षत् । एवमयमस्माकमाचार्यो भगवान्पाणिनिर्वैयाकरणाधिराज्यपदवीसिंहासनमधिरुह्य संप्रत्यपि यशःशरीरेण जीवन्नस्माकममन्दमानन्दं तुन्दिलयति ॥

स चासौ पाणिनिस्त्रयोदश्यां देहत्यागं चकारेति कृत्वा ततः

प्रभृति तस्यां तिथौ व्याकराध्ययजं न कुर्वन्ति वैयाकरणा इति गुरुशिष्यपरम्परया सम्प्राप्तः सम्प्रदायः सम्प्रत्यपि वरीवर्ति । पाणिनिकात्यायनयोः परस्परं शापेन कैवल्यप्राप्तिरिति प्रतिपादयन् कल्पतरुरधिष्ठानोचितावलम्बायोगान्नाश्रयणीयः । एवमयं पाणिनेस्त्रयोदश्याश्च मिथः सम्बन्धो वैयाकरणकुले सुप्रसिद्धः । सचैकोदिवसः सदयमामाचार्यस्य स्मरणार्थं मृष्यतां वैयाकरणैरित्यास्तां विस्तरः ॥

कलिना म्लापितो धर्मो येन सम्प्रति पोष्यते ।
सोऽयं मूलकभूपालः शतं वर्षाणि जीवतु ॥

के. एल्. व्यासरायशास्त्री ।

॥ श्रीः ॥

# ॥ गैर्वाणीनिवेदनम् ॥

---*---

गीर्वाणपुङ्गवगणेन समावृतः स
ब्रह्मा मुनीशसनकादितनूभवैश्च ।
राराजते रजनिराज इवोडुबृन्दै-
र्वाणीपतिर्द्युसदसो महितासनस्थः ॥ १ ॥

एकेन देवशुभपृच्छकमाननेन
तत्वोपदेशरतमात्मभुवां परेण ।
अन्येन वेदपाठितारमुतेतरेण
श्रीशारदासरसचाटुवचोविलोलम् ॥ २ ॥

यं संततं परिचरन्ति चतुर्दशापि
विद्याङ्गनाः सकरुणेक्षणकांक्षयैव ।

सम्मार्जनादिनिखिलालयकर्मकर्त्र्यो-
ऽहंपूर्विकाकुलधियो नितरां मिथस्ताः ॥ ३ ॥

तं कापि वेधसमुपेत्य महानुभावा
पर्यस्तकुंतलभरा स्तनसीम्नि खिन्ना ।
बाष्पावरुद्धनयना ललना जगाद
म्लानाम्बुजातसुषमाधरवक्त्रबिम्बा ॥ ४ ॥

ब्रह्मन् हतास्मि परिपालय दीनबन्धो
मग्नामिहोद्धर विशंकटसंकटाब्धौ ।
त्रातास्ति कोऽपि जगतीत्रितयेऽपि नूनं
धातारमेनमपहाय नमे भवन्तम् ॥ ५ ॥

आश्चर्यखेदकरुणापिशुनैरपाङ्गैः
सभ्येषु तां युगपदेव विलोकयत्सु ।
लोकाधिपः परमविस्मयवानवादीत्
शोकातिरेककृशपाण्डुशरीरयष्टिम् ॥ ६ ॥

का त्वं शुभे त्वदभिधानमहामहिम्ना
केषां बभूव सफलं जनुरक्षराणाम् ।
वासेन कं सुदति देशमलंकरोषि
कौ वा पुनासि पितरौ जनिना निजेन ॥ ७ ॥

तेजस्विता कथयते किल दिव्यतां ते
शोच्या दशेयमधुना कथमस्पृशत्त्वाम् ।
दिव्यं च भौममपि वा न परित्यजन्ति
प्रारब्धकर्मजनिता विपदो मृगाक्षि ॥ ८ ॥

आश्वास्य सा कथमपि क्षणमात्मचित्तं
गाढं निरुध्य च बलान्निजदुःखवेगम् ।
मन्दं प्रमृज्य करवारिरुहेण बाष्प-
बिन्दून्बहून्सपदि वाचमिमामुवाच ॥ ९ ॥

पद्मोद्भवेन खलु मादृशमन्दभाग्य-
लोकः पुरा परिचितोऽपि नितान्तमेव ।
व्यस्मारि हन्त भवता न हि तद्विचित्रं
सा श्रीमतां प्रकृतिरेव मरालवाह ॥ १० ॥

स्वामिन्नितान्तमिदमेव दुनोति चेतः
याऽसीत्तव प्रणयिलोकगणेषु गण्या ।
अष्टाभिरप्यहह दृष्टिभिरद्य सैव
दृष्टापि न स्मरणमार्गमगाहतेति ॥ ११ ॥

लोकेश किन्नु बहुना दृढमावयोर्यो-
रूपान्तरेण हि किलास्त्यधुनापि योगः ।
तं नास्मरद्भुत भवानथवा विदूरं
पश्यन्ति बान्धवजना विपदाभिभूतम् ॥ १२ ॥

स्पष्टं ब्रवीमि सकलां शृणु सावधानं
कष्टां स्थितिं मम चतुर्मुख तामसह्याम् ।
यां शृण्वतो नयनयोः स्वयमेव बाष्पा-
ण्याविर्भवन्ति भवतः पुलकानि गात्रे ॥ १३ ॥

स्वीया सुधीभिरभिधा न पुरः परेषां
वाच्या, तथापि कथयामि विधेऽधुना ताम् ।

लोके विवेकविकला हि भवन्ति कार्या-
कार्येषु हन्त विपदाकुलिता महत्या ॥ १४ ॥

वाणीमिति व्यवहरन्ति सुरेश देवीं
प्राणेश मां जगति सर्वगिरां गतिं च ।
तामेव ते प्रणयिनीमवगच्छवेदा-
भ्यासैकतान हृदये समपास्य शंकाम् ॥ १५ ॥

द्वैपायनस्तव पिता पुरुषोत्तमांशो
वल्मीकजन्ममुनिराडपितेऽशजातः ।
अन्ये महामहिमशालिमहर्षयश्चा-
मन्यन्त मां परिचरन्त इमां सुमान्याम् ॥ १६ ॥

सर्वाङ्गसुन्दरममन्दरसानुविद्धं
रामायणाभिधरसायनमावितीर्य ।
वाल्मीकिनाम भिषगेष विना प्रयासं
मां पीवरावयविनीमतनोत्कवीशः ॥ १७ ॥

किंचायमेव करुणावरुणालयो मे
शुश्रूषणे प्रयतमानमहाकवीनाम् ।
मार्गं च दुर्गमतमं सुगमं वितन्वन्
लोकं नितान्तमधमर्णममुं चकार ॥ १८ ॥

पाराशरस्य तनयः स समस्तविद्या-
पारङ्गमो मधुरपर्वरसोदयाढ्यम् ।
नाथेक्षुखण्डमिव भूतललोकभाग्यं
श्रीभारतामृतमपाययतांजसा माम् ॥ १९ ॥

तेनामृताशनगिरं मनसाऽकलय्य
मां सर्वदामृतमयीममृतां च कान्त ।
आसं मुदा सुखमयं समयं नयन्ती
स्वप्नेऽपि भाविदुरदृष्टलवानभिज्ञा ॥ २० ॥

हा प्राणिनां सुखमनोरथसंश्रयेण
संजीवतां जगति केवलमब्जयोने ।
आपद्गुणः खलु परापतति क्षणेन
नालोचितोऽपि मनसा तरसाऽनिवार्यः ॥ २१ ॥

देवाधिराजसदृशो मम भोजराजः
सेवासमुत्सुकमनाः सुमनोवरेण्यः ।
यत्कर्मनिर्मलतमं भुवि निर्ममे तत्
वाचामगोचरमये भगवान्विरिंचे ॥ २२ ॥

आश्रित्य तं क्षितिभृतं किल कालिदास-
दण्डिप्रमुख्यकविराजरसालवृक्षाः ।
रूढा अतीवमधुराणि फलानि काव्य-
संज्ञानि चाक्षयरसानि ददुर्धरित्र्याम् ॥ २३ ॥

आस्वाद्य तद्रसममा हृदयालुलोकाः
वेधोऽधरीकृतसुधामधुमाधुरीकम् ।
रामाधरामृतनिपानमहोत्सवाय
तन्द्राकुलाः कथमपि प्रिय नोत्सहन्ते ॥ २४ ॥

आकण्ठपीतमपि तं रसिकावतंसै-
रक्षीणमेव पुनरप्यनुभोगतृष्णाम् ।

उत्पादयन्तमनिशं ननु वर्णयेत्को
निर्वाणसोदरसुखप्रदमञ्जयोने ॥ २५ ॥

भोजाभिधं रजनिराजमसौ कवींद्र-
तारागणः किरणराजिविराजमानः ।
साहित्यनिर्मलविहायसि तं विहारी
संप्रीणयन्वसति चाद्य यशश्शरीरः ॥ २६ ॥

श्रीहर्षबाणजयदेवमयूरभट्टि-
क्षेमेन्द्रभारविमुखा भवभूतियुक्ताः ।
अन्ये महाकवयितृप्रवराः किलात्म-
काव्यामृतेन मुदमादधति स्म मे ते ॥ २७ ॥

एवं क्रमेण धव पण्डितराजसूरि-
श्रीवेङ्कटाध्वरिमुखैः कविसार्वभौमैः ।
ऐधिष्ट मे क्षितितले महती प्रतिष्ठा-
भूपालधेनुमुपवर्ण्य मतिप्रभावैः ॥ २८ ॥

एवं समस्तकवितल्लजसत्सपर्या-
प्रीतान्तरात्मनि मयीश निरंतरं हा ।
अस्पृष्टदुःखकणिकान्यतिवाहयत्यां
क्षोणीतले कतिपयानि च वासराणि ॥ १९ ॥

कालः स मे किल परापतति स्म कान्त
कालोपमः कलिसखः स्मृतमात्र एव ।
यो दन्दहीति हृदयं त्वधुना मदीय-
मिन्दीवरोदरसमाहृतनैजजन्मन् ॥ ३० ॥

सोऽयं निसर्गरमणीयतमाकृतिं मां
गाढं प्रसह्य विनिपात्य महागुहायाम् ।
सान्द्रान्धकारभृति हन्त कृतार्थमेवा-
त्मानं सुरेड्य मनुते पिशुनाग्रयायी ॥ ३१ ॥

तेनैव चोदितमलीमसशेमुषीका
लोका अमी किल ममैव कुदैवपाकात् ।
मां गर्हयन्ति नितरां महिमानभिज्ञा
अज्ञानमोहविवशा अधुनातना हि ॥ ३२ ॥

एते मृतामिति जना अमृताशनानां
वाणीं सतीमपि दृढैःकरणैश्च साक्षात् ।
सर्वत्र हन्त कुटिलैर्वचनैर्नितान्तं
कृन्तन्ति मर्म मम तामरसाक्षसूनो ॥ ३३ ॥

रामाचार्य (गलगली)

(क्रमशः ।)

॥ श्रीः ॥

## ॥ श्रीमती कमलकुमारी ॥

(पूर्वतोऽनुवृत्तम्)

---

मानसिंहस्तु समूलमुन्मूलितमनोरथमहीरुहः सपत्नोऽयं तिष्ठत्यग्रतो मे, कथमपि कृत्वा हन्तव्य एवायं मयेति निश्चित्य परित्यक्तजीविताशो निजाङ्गेभ्यः प्रसृतानपि रक्तबिन्दूनविगणय्यायुध्यत । एवं जीवितं तृणाय मत्वा परस्परं युध्यतां तेषामनल्पो

व्यतीतः समयस्तथापि तत्र जयपराजवार्ताऽपि नाम नासीत् । परं पञ्चभिः साकं युध्यतो मानसिंहस्य बलं शनैः शनैः क्षैण्यमधिगन्तुं प्राक्रमत । ततश्चाचिन्तयच्चेतसि स रजपूतवीरः एवमेव यद्यहं क्षणमेकं युद्धयेय नूनं सम्भवेज्जीवितस्यापायो वृथेति । पुनश्च मनागिव विचिन्त्य सस्मितं विचित्रतमेन संग्रामपाटवेनोपाक्रमत योद्धुं सः । ततो मानसिंहस्यायोधनपाटवं विलोक्य विस्मितास्ते यवनवीरा आलेख्य लिखिता इवासुः । अस्मिन्नेवावसरे स रजपूतवीरः सावेगं समीपवर्तिनमेकं यवनवीरं खड्गेनाताडयत् । तेन विच्छिन्नगात्रः सहसाश्वाद्भूमौ निपतितः प्राणानहासीत्सः। पुनरन्यं वक्षसि दृढं प्रहृत्य निपात्य च तुरङ्गमादधः परासुं व्यदधान्मानसिंहः । अथ परासोर्यवनवीरस्य वाजिनं झटिति समारुह्य द्विगुणितबलोत्साहः स सत्वरमवशिष्टयवनवीराणामुपरि प्रधावयति स्म । खड्गोऽपि नाम तदीयो गगनचत्वरे विद्युदिवाबभास । अन्योन्यखड्गाहतिसंभवा स्फुलिङ्गा दीपयामासुर्दिशामन्तरालानि । ततः परिचितपूर्वो यवनवीरः सर्वथा रजपूतवीरः साधारणो न खलु वीरः, इतरदुर्लभं हि बलमस्य, नानेन साकं युध्यतामस्माकं त्रयाणमपि जयः समागच्छेदिति विचिंत्य तावुभावपि निजसहचरौ विचित्रनेत्रस्फुरणेन प्रोत्साह्य च ताभ्यां सह युगपदेवोद्यतः प्रहर्तुं मानसिंहम् । परं खड्गपातात्पूर्वमेव यवनवीरस्य सहचरयोरेकस्य मूर्धापरस्य सखड्गो हस्तश्च सहसा भूमौ निपेततुः सममेव । ततः सर्वानपि स्वीयान् सहचरान् प्रेतपतिपुरातिथीभूतान् विलोक्य दूयमानमानसः क्रुधा यवनवीरः परित्यज्य जीविताशां प्राक्रमत योद्धुम् । यावच्चायं मानसिंहं शिरोलक्षीकृत्य प्रहर्तुं खड्गं

सावेगमुपरि करोति तावदेवास्ततन्द्रं युद्ध्यतो रजपूतवीरस्य खड्गेन ताडितः स खड्गः खणणिति शब्दायमानो लज्जित इव प्राविक्षद्गिरितरङ्गिणीजलम् । निरायुधस्ततो यवनवीरः सापत्रपं मूर्धानमवनमय्य भूतलनिहितदृष्टिरतिष्ठत्तूष्णीम् । तदनु विलोक्यैवंविधं यवनवीरं मानसिंहः सावष्टम्भं दुरात्मन्? गच्छ, मातःपरमिह तिष्ठ मत्पुरतः, न जातु कुर्वन्ति निरायुधे रिपौ खड्गं रजपूतवीरा इत्यब्रवीत् ॥

एवं निगद्य विरतवचसि मानसिंहेऽश्रूयत सकरुणं विलपन्त्या अबलाया रोदनध्वनिः। मन्दं मन्दं वहतः समीरणस्य मृदुतरेण शीतलेन च स्पर्शेन परित्यक्तमोहा सा तपस्विनी कमलकुमारी चेतसि— अहो कीदृशं मया पापया गर्ह्यतममाचरितं कर्म, अहो मेऽविचारता। हा हन्त, परपुरुषसमालिङ्गनम्, अहह मास्तु तस्य स्मरणमपि, किमपराद्धं जीवितेश्वरेण? अखिलमप्येतदविवेकतायाः फलं सर्वथा, धिगस्तु तस्याः। किमत्र प्रतिपत्तव्यम्? हन्त कथं पुनः परित्यजेन्मद्विषयिणी संशयपिशाचिका सरलहृदयं जीवितेश्वरम्। कथंच स विदध्यादयथापूर्वं मय्यनुरागम्? आमन्त्रयेद्वा यथा पूर्वं प्रणयरसपरिस्यन्दिना वचसा मामन्तिकम्। हन्त हन्त महत्खल्वापतितमत्याहितम्। प्रेष्ठपाठकमहाभागाः? एतत्स्मरणसमकालमेव तदीयं स्विन्नं संहननम्, हृदयं विदीर्णम्, बाष्पाविला दृष्टिः, कण्ठस्तंभिता च संवृत्ता सरस्वती। सगद्गदं रुदन्तीं तामुपागत्य मानसिंहे सक्रोधमुच्चैः पापे रजपूतकुलपांसुले? इति वदति सा सुकुमरी नेत्रे कथमप्युन्मील्य यावद्विलोकयति तावदात्मनः पुरतो जीवितेश्वरो मानसिंहः पार्श्वयो श्चैकतः परासवश्चत्वारो

यवनवीराः पुनरेकतश्च सलज्जमधोमुखं स्थितो यवनवीरः, तस्या नेत्रयोर्गोचरा अभवत् । निपुणं विलोक्य चैतान् पञ्चभिः साकं प्रयुद्ध्य तत्र विजयशालिनं जीवितेश्वरं मन्वना सानन्दं तदीयमसृक्पङ्किलं विशालतमं वक्षः सुकुमारतरबाहुलतिकाभ्यां गाढमालिङ्ग्यानन्दाश्रुपूरेण क्षालयितुमेषाकुटिलहृदया समीपमुपागात् । तदात्व एव मानसिंहः सकोपं करयुगेन निष्ठुरं पश्चादपसार्य दुष्टे रजपूतकुलाङ्गारे ? हा मा अग्रतः कार्षीः पदम्, पश्चादपसर, आकर्णय शान्तेन चेतसा, मदीयानि भाषितानीत्यवदत् । अनाकर्णितपूर्वं कठोरतममेतत्प्रियतमस्य वचो निशम्य खिन्नस्वान्ता तरलिताक्षी मौनमालम्ब्य भीतभीता व्यलोकयत्तम् । अभूच्च तदीयं प्रलयोदितप्रचण्डतरचण्डकरभासमानं वदनं निरीक्ष्य साध्वसेन बलवदाक्रान्ता तदालोकनाप्रभविष्णुर्भूतलनिहितैकदृष्टिः । किङ्कुर्यात्तपस्विनी । भीरुः खलु सा ॥

मानसिंहः— (सावलेपम्) दुष्टे ? अपि स्मरसि । यन्नाम मे पिताऽम्बेराधिपतिस्ते पितरं निर्वासनदण्डेन दण्डयित्वा प्रजास्वस्मदीयासु स न केनापि कस्मिन्नपि क्षुद्रतमेऽपि वा कर्मणि व्यवहर्तव्यः, यदि कोऽपि कदाचिद्व्यहरेत्, सोऽवश्यं देहावसानकरेण दण्डेन दण्ड्येतेत्याज्ञापयामास । परम्, पापे ? केवलं गुणशेवधिर्भवतीति, भवत्याः कृते गुणलुब्धोऽहमनुल्लङ्घनीयामपि पितुराज्ञामलङ्घिषम् । दुराचारे ? महान्तमकार्षमविज्ञातभवत्कुटिलभावः साहसम् । कीदृशं हन्ताचरितं भवत्यानार्यं कर्म । हा हन्त हन्त नूनं विलोक्य भवत्याः कर्मेदं लाजस्फोटं स्फुटतीव मे हृदयम् । मनसापि नाम नाहमचिन्तयं जात्वपि कर्माचरेद्भवतीदं विधमिति ।

एवंविधं नीचसुलभं कर्म विलोकयितुमेव प्रियं सल्लप्यामन्त्रये वा मामिह । अद्य बाढं प्रमुदितमासीन्मे हृदयम् । एवं खलु वक्तव्यं त्वया साकमद्य तथा वक्तव्यं क्रीडीतव्यञ्चैवं ननु तथेति एवमादिभिर्मनोराज्यशतैः प्रमुदितो गन्धर्वनगरमध्यविद्योतमानदिव्यतरः मनोरथभद्रासनसमारूढं मामर्धचन्द्रं दत्वाऽधःपातयः । अलमलम् । भवत्या कृतस्यानार्यस्य कर्मणः स्मरणमपि मास्तु । यतस्तत्स्मृतं ननु मे जनयति रोमाञ्चम् । क्व ते गुणाः गताः । कमलकुमारि? साम्प्रतमाचरितं भवत्या । हा हन्त सर्वथाहमेव मूढः । यतो वृथा भवतीं निन्दामि । कोवात्र दोषो भवत्याः । यस्मिन्नाम वंशे जन्मसहजमनार्यङ्कर्म, तस्मिन् खल्वाधिगतं भवत्या जनुः । पापे? अत एव पिता मे शास्ति स्म निर्वासनदण्डं ते पितुः । अनार्यकुलप्रभवया त्वया सार्धं व्यहरत् सर्वथा हतोऽस्मि । गच्छ, मातः पुरं तिष्ठ मदग्रे, वितरतु भगवानेकलिङ्गप्रभुर्मङ्गलमविरतं भवत्यै ॥

एवं परुषतमानि करुणालवरहितानि वचांस्युदीरयति मानसिंहे सकलमपि गात्रमकम्पत कमलकुमार्याः कातर्येण । नेत्राभ्यां प्रसृता महती बाष्पधारा । नाप्रभवदेकमप्यक्षरं बाष्पपिनद्धकण्ठाद्बहिरागन्तुम् । केवलं दूयमानाऽजानन्ती वक्तव्यं मौनमेव शरणं मन्वाना विच्छायमात्मनो सुखमवनमय्य दिङ्मूढेवातिष्ठत् । मनागिव तनूकृतकोपावेगः सावेगं गन्तुमुपाक्रामत् मानसिंहः । कमलकुमार्यपि गच्छन्तं जीवितेश्वरमनुव्रजन्ती शोकावेगं तनूकृत्य सकरुणं गद्गदेन वचसा नाथ जीवत? सर्वथेयं ते दासी निरपराधा । अत्र प्रमाणमेषा भवदर्थं गुम्फिताऽर्धोन्मीलितानां नवमालिकाप्रसूनानां माला । यद्यपेक्षते जीवितं मे, पृच्छतु

नन्वेतामित्यब्रवीत् । अशृण्वन्नेव वाचमेतां यथापूर्वं स मानसिंहः सरभसं प्रारभत गन्तुमेव । एतत्सर्वं विलोकमानस्तत्रैव वर्तमानो यवनवीरः पवित्रतमं मानसिंहे वर्तमानं कमलकुमार्याः प्रणयं वीक्ष्य पश्चात्तापपवित्रितचेताः निनिन्दातिमात्रमात्मानम् । उदारहृदयेन रजपूतवीरेणायोधने वितीर्णेनात्मनो जीवदानेन द्रवीभूतं यवनवीरस्य हृदयं सौकुमार्यनिधेः कमलकुमार्याः शोचनीयतमां दशां वीक्ष्य प्रकामं द्रवति स्म । पाठकप्रवराः साधूक्तं तत्रभवता कविप्रवरेण श्रीभवभूतिना । 'वज्रादपि कठोराणि मृदूनि कुसुमादपि । लोकोत्तराणां चेतांसि कोहि विज्ञातुमर्हति, ॥ इति ।

अथ यवनवीरः सरभसं गच्छन्तं मानसिंहं निरुध्य सगद्गदं शौर्यराशे रजपूतकुलनन्दन? शृणु, अस्मत्कुलदैवतं स्मृत्वा सत्यं कथयामि नाल्पमप्यत्र विद्यते हि कमलकुमार्या आगः । न खल्वैक्षत स्वप्नेऽपि मां सा अहमेव पुनर्दुरात्मा तदीयसौन्दर्यमोहितः प्रायतं तां वशीकर्तुमनल्पवारम् । विदितमासीत् दृढं प्ररूढं परस्परं भवतोः प्रणयमिति । नाहमुदारमते? मनसाप्यचिन्तयम् सर्वथा संभेदनेन कर्मणा प्राणापाय इति । अद्य पुनर्भवन्तावुभावपि निशायाः प्रथमे यामे व्यतीते समागमिष्यत इहेति चारमुखादाकर्ण्य समायातोऽहमिह । तदैषात्र सुचरिता भवदनुरागसूचकं पद्यमेकं मधुरमधुरं गायन्ती भवत्पन्थानमेव प्रतिपालयन्त्यासीत् । समागतं मां क्रूरहृदयं वीक्ष्य प्रणयमन्थरशून्यहृदया जीवितेश्वरं भवन्तमेवागतमवगच्छन्ती ससंभ्रमं गाढमाश्लिषत् । सर्वथाऽत्र शरणागतबन्धो? दोषो ममैव । कोवा दोषोऽत्र सरलहृदयायाः कमलकुमार्याः? मा कार्षीस्तस्यां स्वल्पमपि कोपं पापस्य वार्तापि नाम न स्पृशति ताम् ।

निरपराधा हि सा। यथापूर्वमेषा प्रेमपात्रीकरणीया भवता। अवश्य-मेषा मदीया भारती भवतानुमन्येत। मा निधाः संशयवर्त्मनि पदम्। एषा निरपराधाङ्गीकृतेति कथय गच्छामि। हुं ब्रूही-त्यवदत ॥

अथ मानसिंहो यवनवीरनिगदितां नीचेतरां वाचमाकर्ण्य परित्यक्तकोपः परं प्रपेदे विस्मयम्। रजपूतवीरस्य कमलकुमार्यां संसक्तं प्रणयं निर्मलतरमवाङ्मनसगोचरमासीत्। प्रसन्नतमेन चेतसा मानसिंहस्तं यवनवीरं सानन्दं बहु बहूपकृतं मन्यमानः सानुरागं वीर? नूनमेषाङ्गीकृता, पूर्वतोऽप्यस्यां ममानुरागोऽधिको निर्मलत-रश्चेदानीम्। नात्र विधेयो द्वापर इति सादरं समाश्वास्य प्रेषया-मास। ततश्च स नवमालिकामालाया एकैकं कुसुमं विलोलतरतरङ्ग तरङ्गिणीजले क्षेपं क्षेपं सकौतुकं सस्मितं चरतां प्रसूनानां चमत्कृतिं मूढेव निर्निमेषं वीक्षमाणायाः कमलकुमार्या अन्तिकं समागतः। विस्मितश्चासीत्कर्मणानेन तस्याः। न विवेद कुसुमक्रीडायामति-मात्रमसक्ता सा तरुणी सनीडं समागतमपि तं जीवितवल्लभम् ॥

मानसिंहः (सकौतुकम्) अये प्रेयसि? किमेतच्चिकीर्षसि। आ-गच्छ, गृहं सुन्दरि? व्रजावः। किमेवं मुग्धेव करिष्यसि। अलमलम् ॥

कमलकुमारी (सस्मितं) जीवित? तितीर्षामि कुसुमानीवैतानि निम्नगातीरे। इच्छामि च सुचिरमस्मिन्महाह्रद उषितुम्। अपि समागच्छति जीवितेश्वरः?। बाधते मामेकाकिनीं भीतिः। नाहमागच्छामि निकेतनम् ॥

न खल्वेवं कदाचिदप्याग्रहं कृतवती कमलकुमारीति विस्मि-

तो यावद्विकिरति दृष्टिं निपुणां तावदेव सा तरङ्गिणी प्रवेष्टुमुद्यतासीत् ॥

मानसिंहः (ससम्भ्रमम्) अलं प्रेयसि? अलम् । मा कुरु साहसम् । एषोऽहमस्मि ते विधेयः । अपसर सुन्दरि? पश्चादपसर

इति निगदन् तामन्वधावत्सः । तदा पस्फार तस्या नेत्रयोः किमपि तेजः दर्पणतलामलयोः कपोलयोराबभास स्मितम् । अलम्, मा गच्छत्वग्रे वल्लभः, तत्रैव तिष्ठतु, स्वच्छतमेऽस्मिन् गाधेतरस्मिन् ह्रदे प्रतिबिम्बितानि नक्षत्रकुसुमानि सङ्गुम्फ्य रुचिरतमां स्रजं निर्माय तया भूषयामि प्रियतमस्य कण्ठम् । इति स्फुटतमं निःसृतानि वदनपुण्डरीकादक्षराणि शृण्वत एवैतान्यक्षराणि मानसिंहस्य कर्णौ प्राविशद्वज्रपातपरुषो झम्पां प्रदाय कमलकुमार्या ह्रदप्रवेशशब्दो दुडुं इति । शब्दश्रवणसमकालमेव दूयमानमानसः सरभसं प्रविश्य ह्रदं तां गवेषयन्नलभमानस्तटं समागतश्चतुर्दिक्षु च क्षुर्निक्षिप्य निपुणं निरीक्षमाणः कुत्रापि तस्या अदर्शनेन संभ्रातः प्राविक्षत्तमेव ह्रदं पुनः । न स ततः प्रत्यागतः पवित्रप्रणयशालिहृदयो रजपूतकुलसिंधुचन्द्रमाः । प्रियपाठकवरेण्याः! पश्यत पवित्रतमस्य प्रणयस्य प्रभावः कीदृश इति । लेखनी पुनरियमस्माकमितः परमेकमप्यक्षरं विलिखितुमप्रभविष्णुः सहसा न्यपतद्भूले ॥

चिदम्बरशर्मा । (बडली)



॥ श्रीः ॥

# ॥ जीर्णमङ्के सुभाषितम् ॥



परित्यज्य परैः स्पर्धां कार्यमार्या विचार्यताम् ।
नानेहा लभ्यते पूर्वं गतस्तु गत एव सः ॥

इयं किल वाणी महानुभावस्य पण्डिताग्रण्यो भर्तृहरेर्वदनारविन्दाद्विनिर्गता पद्यपादरूपा त्रिकालज्ञस्येव ब्रह्मणः कवेः सत्यशासनमिव सकलैरपि सहृदयमहाभागैः सर्वतो विदितचर्येव । कथं नामान्यथा भवतु क्रान्तदर्शनस्य कवेर्महितं मानसपर्यङ्कमविरुह्य मनागिव मानितो मङ्क्षु लब्धपरिमलो वाचा रूपितो बहिरायान् वस्तुविलासः । वाग्मिनां हि वागिव कार्यमपि बाढमैकाधिकरण्यं न व्यभिचरति ॥

पदत्रयगुम्फितैषा खण्डवाक्यभारती मधुरेव करुणेव च वस्तुकथनात्, दारुणेवोर्जस्वलेव च मर्मस्पर्शनात्, कस्य वा चेतनस्य हृदयं हठान्नाकर्षति । हन्त ? मन्यामहे, केचिदानयैव भारत्या मधुरिमाणमाशयस्यास्वदमाना आसते जोषमेव । कतिचिदविष्टकरुणोच्छूनचित्तवृत्तयोऽपि दूरे विमर्शस्य शेरते करुणमेव ; एके च श्रुतिमात्रतोऽसहाया बिभ्यतः कोणे कुहचन विलीयन्ते, अनर्थमेव अपरे च केचन मर्माविधानया कर्शिता अपि प्रतिदिशं प्रतीक्षमाणाः केवलमेव घुर्घुरायन्ते । एवं हि चतुष्टयी चेतनानां दृष्टा न तुष्टये कुहचनापि शताधिकादपि परत्र वा काले सम्पद्येतेति सुदृढं विनैव हेत्वाभासमनुमिनुमः ॥

प्रागेव बहोःकालादमुमर्थं सविपतीसारमिव सम्पश्यतः कवेरस्य हरेः स्वान्ते सन्दानिताः सूत्रिता वा तादात्विका विचारा यद्यपि नेयत्तया निर्देष्टुं शक्याः; अथापि नैकप्रकारैः प्रादुरभाव्यमहमहमिकया तैरित्यूहितुमस्ति सन्दर्भः ॥

इति हस्म कविरान्तरं चक्षुरुन्मील्य सङ्गिरते सारमानुभविकं न वा भाषितेन जीर्यते जरीतव्यं वा नापि चान्यतो ग्राहके वाचके वास्य जीर्णता, किन्तु सुभाषितमङ्ग एव जीर्णं पूर्णमेव । नूनमिदमनुभवस्यैव कपाटमपावृतम् । अनिन्धने खलु समिन्धानेऽप्यग्नावात्मन्येव स्वयं ज्योतिराहूतीक्रियते । अनवकाशे पुनराकाशेऽप्याकाशमानोऽपि नभस्वान् क्रमेण क्षीणगतिररूपमात्मनो रूपं स्फुटमिव निरूपयन्नन्तर्धत्त एव ॥

अहो? बत? तदपि किल काले प्रकृतकविकाले यदि नाम स्युरीदृंशि विलसितानि समाचारस्य, सम्प्रति कीदृंशि तानीति निर्वर्णयितुं न मे लगति मानसम् । तदानीं हि कालेयोऽप्ययमेव कालो नैवं करालतामाविश्चकार; नापि वा जनाः प्रायशः कलुषेण पथा समचरिषत; न वा भूरिशोऽविद्वांसः समभूवन्; न च वा भूपालाः संस्कृततरमतयः प्रातिकूल्यमास्थिषत । एवं सम्भवत्यपि यावत्सम्भवं कारणकलापे समनुकूलेऽपि यदयं महान् पण्डिताग्रेसरः कविः स्वहृदयमास्फुट्य सानुशयमेवमाशंसते, हन्त? तेनानेन कामिवावस्थां नीयन्ते साम्प्रतिकाः सर्वे लोकाः । न हि प्रवहन्त्यां सझङ्कारं सावेगं सहभ्रमीसंलग्नघोरावर्तशतं च निर्झरिण्यां विप्रतिमुखं केनापि शक्यते तरीतुम् । न वा परं पारं प्रयियासुनानेन स्थातुमिहैव युक्तं च । एवं हि उभयतस्पाशया रज्ज्वा दृढं निगलिताः

सः । कुत्र वा गच्छामः, कुतो वा मुच्येमहि कं वा शरणमयाम अयि ? दुर्दैवत ? भिद्यते हृदयं भज शान्ति; इत्येवमर्थयमानाः परमसहायाः क्लिश्नन्ति कतिचिदबुधाः ।

अन्ये पुनः सर्वमपि तत्वं यथा समुचितं कालयतः कालस्यैवैषा कुटिला लीलेति कलयन्तः कठिनकठिनं धीरमात्मानं क्षपयन्तीत्यहो ! चित्रचित्रमेषा प्रस्थितिः । अथवा साम्प्रतमेवैतत् । मत्तो हि मातङ्गः सशर्करेण पांसुपूरेण स्वकीयमुत्तमाङ्गं स्वयमेव स्नपयन् मलिनायते न हि परगन्धं व्याजिघ्रन्नपि व्याघ्रो गम्भीरगर्जनध्वनिमजनयन् वशीक्रियते हन्यते वा ॥

इदं किलात्र महाश्चर्यस्थानमपरम् यदेतैः पूर्वोक्तैः सकलमपि भरं भारवाहणस्य कालस्य समवरोप्य शिरसि न केवलं शय्यते किन्तु समाराध्य वाचाटतां प्रस्थाय कापथेन, निखिलमपि नीयते व्याकुलीभावं सतामपि सतां प्रोत्सहमानं कुलम् ।

एवं हि ते वाचाटन्ति सर्वतो देशेषु-- अयि जाग्रति जनते ? शृणु । समाचर च कार्यम्; भज पूजय च कालमेकं दैवतम; व्यर्थमेव मा प्रयसः ? अखिलमपि खलु प्रतिष्ठितं काल एकस्मिन्नेव कालावशं वस्तु शून्याभिधं हि गृणन्ति सूरयो भूरयः । अस्तु भविष्यत्यनन्तरं श्रेयः स्वपिहि सुखम्; यदि नाम न स्यात्प्रवृत्त्यनन्तरम् ॥

अहो ? नु खलु भो वरमेभ्यः सुतरां मुद्रामेकां भद्रदेवतामभिमन्यमाना वीरमाध्वाः शिलामद्वितीयां रुद्रदेवतां घोषयन्तो वीरशैवाश्च । यदेते दृष्टमेव किमपि दिष्टं मन्वाना श्राम्यन्ति; न पुनरदृष्टमपि कालं करालं चिन्तयन्त्यपि मनसा । न वयं जानी-

मद्दे कस्य वा हेतोः स्वप्नेऽपि तेषां दर्शनपथं न प्रापदखिलमपि लोकं पथ्यं मधुरमिव च दिव्यौषधमुपदेशं दत्वा सुखयन्ती सापि भगवतो वासुभद्रस्य मुखारविन्दाद्विनिर्गता गीतागीतिः । या किल उद्धरेदात्मनात्मानं नात्मानमवसादयेदित्येवं रूपा निपीयते सततं सहृदयैः । किमिति बहुवाचा, कृतं कृतमनुपयुक्तपल्लवितकेन । निश्चप्रचं हि लोके लवणं भक्षयन्तो बाढमुदन्यया परवशाः पिबन्त्यतृप्यन्त एव भूयो भूयस्तोयममेयमिति ॥

इतरे च केचन सुभाषितस्य स्वाङ्ग एव जीर्णतामनुपदमनुपदमनुशयाना इव सम्भेत्य सर्वाण्यप्नुकूलान्यङ्गानि बहुधा प्रयतमाना इव लोके प्रस्तावमर्हन्ति । वस्तुतो न पुनरनुशेरते ते । न वा प्रयतन्ते च । तेषां हि सर्वोपरि तैलमिव तिले प्रथार्जनमुद्दिष्टं न प्रवणं प्रकृतानुगुणं निमित्तमपितु विपरीतमेव ॥

ते किल मधुरं मधुरमिदमालपन्ति बहुशः प्रपञ्चस्य खलु परिवर्तनं हितमवश्यमाश्रयते, सुभाषितमनङ्ग एव पूर्ण न पुनरङ्ग एव जीर्णम् । तद्धितं तत्प्रकृतिषु कामं सञ्चारयत प्रकुरुत कार्याणि, गच्छाम शालाम्, सम्मेलयाम सभाम्, सिद्धान्तयाम नियमान्, इत्यादिभिरनन्तैरितरावर्जयितृभिर्वचोभिः प्रकटय्य पाटवम्, सिद्धप्रतिष्ठा इव जोषमेव मासमेकमधिकं वा ततः सुखमासते । लुब्धकानामेषां वचसि जालके निपतिताश्च प्रथमे साधवः कपोतायिताः सहवर्गमेव क्लिश्यन्तेऽपि शतगुणमेभ्यो माननीयास्ते द्वितीये वर्ग्याः, यत्किल ते स्वमाशयमच्छलमेव प्रतिपादयन्तस्तावता विरमन्ति । ध्रुवमभी रुद्रभूमौ कथावशिष्टस्य बालस्य बन्धूनात्मक्षमैकाकांक्षया प्रतारयतो गृध्रे गोमायौ प्रसूताः

बहुना भाषितेन किम् । विरताः स्मोऽनुपयुक्तात् ॥

कतिधा पुनरीश्वरेण जनाः भिन्नभिन्नमतयः प्रपञ्चनाटकरङ्गे प्रवेश्यन्त इति कस्य वास्ति निर्धारणा । अथापरे किल कतिचन सुभाषितस्येमामवस्थां शृण्वन्त एवाशङ्कं विषीदन्तितमाम् । अहो ! विलसितं दुर्दैवस्य विजयो दौर्भाग्यस्य, अपि नास्ति प्रवितते ऽस्मिन् भुवने पूर्णस्य सुभाषितस्यावस्थानावकाशः । भृशतरं वयं हताः पापीयसा कालेन साम्प्रतं हि बहूनां विदुषामापदोऽस्याः सुभाषितमुन्निनीषूणां भवति कीर्त्यर्जने सन्दर्भः । अस्तु कामं सुभाषितस्य महती जीर्णता, सुभाषित एव वा, नैतावता तथा घूर्णत्यस्माकं हृदयम् यथा खलु तदुद्धाराय प्रयस्यतां प्रशस्तिप्राप्तौ । तदयं नावसरो मौनावलम्बनस्य । वरं जीर्णादपि सुभाषितात्पूर्णमसुभाषितं जीवतां नः । मा च पुनर्विदन् विदन्तः परे लघ्वपि श्रेयः । तदर्थमास्थीयतां यत्नः । वर्धन्तां तदुद्धिधीर्षूणामन्तश्छिद्रम् । तेन हि प्रतीष्टेऽवसरे लब्धान्तःप्रवेशमसञ्चिन्तितमनन्तरायं सफलमिति ॥

अहो बत ! कष्टम् ? कष्टम् ? एतादृशां मत्सरग्रस्तानां पराभ्युदयमसहमानानामपि जन्तूनां सम्पद्यते भूर्निवासाय । कल्पते जीवनं जीवनाय अमीषामङ्गानि करचरणादीनि सदृशमन्यैर्विदधद्भिर्धातापि न समीक्ष्यकारी नूनमेते द्विपादो हिंस्राः सत्वा अलब्धमनुष्यसंसर्गा अपि । विरलविरलं वापि जाग्रत्स्वेतादृशेषु कुतो न भाषितेन जीर्णम्, कुतस्तरां वा दुर्भाषितेनापि न पूर्णम् । इत्युदेति संशीतिरनल्पा । अथवा पर्याप्यत एव हि कण्ठकैर्लघीयोभिरर्याप्नुवाद्भिः सुमनसां प्रतिबन्धुं सञ्चारम् । तदलं क्षोदानर्हेण प्रस्तावेन ॥

अन्येऽपि केचन प्रभवोऽ ( सम्पन्ना राजानो वा ) वश्यमिह लोकयात्रायां तत्तदङ्गनियामका ईश्वरात्प्रतीव राजमानाः सेव्यमानाश्च परैः शक्ता विश्वपीठमध्यासत इति सर्वैः सुविदितमेव । प्रायस्तेषु बहवः कालानुगुणमिव हतदैवतमतानुकूलमिव च स्मयसिंहासनमधिरूढा बिभ्रति स्वकीयां धुरमविधुराः । ते पुनः सुभाषितस्य दशामेनामजानाना इव तदुपरि लेशमप्यनुशयमलभमाना इव च भवन्ति मदान्धाः ॥

इत्थं हि मन्वते ते न वयमीश्वरेण सृष्टाः, न मां प्रासूत माता, नापि वा निमित्तं पिता च? अवतार एव हि मे शरीरम् । भूवासिनः खलु गन्धर्वा अस्मद्रूपाः । शाश्वतमिदं कलेवरं नः, इति ॥

एतादृक्षान् किल संश्रित्य परिवर्त्यते जगदीशित्रा भगवता । त एते सुभाषितस्यापि कथां प्रस्तुतां सम्भूय, कतिभिश्चिदग्रणीभिर्र्हतां सहादरविनयभरं विज्ञाप्यमानाः, प्रकाश्य चिरसंस्तुतां गजनिमीलिकां कम्पयन्तः स्वमुत्तमाङ्गं नन्दन्ति वा निन्दन्ति वेति कथं निश्चीयताम् । ऋते च साहाय्यमेतेषां न पार्यते किमपि सम्पत्तुमिति सुदृढमेव तत्; यतो हि विभक्तमिव पैत्र्यं धनं स्वच्छन्दमनुभावाय दत्तमेतेभ्यो भुवनं वरीवर्ति, कृपालुनापि दैवतेन! कतिपये च गणनीयाः परे तु साधवः सुशीलाः सुवृत्ताः, अतर्कितोपनता अशेषलोकक्षेमङ्करीर्धर्मप्रातिष्ठा अवष्टभ्य, सधर्माणो धर्मपुत्रस्य समस्तैरपि विपश्चिद्भिस्तोष्टूय्यमाना विभान्ति च । विभावर्यामपि हि सत्स्वपि नैकेषु नक्षत्रेषु पूर्णमण्डलो राजा खल्वेक एव चन्द्रमा राजत्यप्रतिपक्षम् । अथापि केवलमुद्धरोत्सृजामेकामेव क्रियामुपयु-

ज्ञानैरल्पाल्पैरेभिः प्रभुभिरनन्ताभोगवितते बृहति भूमण्डले निरन्तरमाक्रामन्त्या अस्याः सुभाषितजीर्णतायास्तावतीं गतिं प्रतिरुध्य न स्नेहपानं सुभाषितस्यार्जितुं शक्यते; इत्यहो हन्त हन्त, अनुकूलानामपि भिषजामचिकित्स्येयं संवृत्ता व्याप्तवती जीर्णता सुभाषिताङ्गम् ॥

अयि भो रसिकरसिका महाभागाः! एतादृशीं किल सुभाषितस्यात्मन्येव जीर्णतां समवलोक्य तत्तदवस्थानभेदेन विकुर्वाणाः पञ्चविधा जनाः समीरिताः । नैकरूपजनतासंपिण्डितेऽस्मिन् भूमण्डले तत इत आहिण्डमानं मनोरथमधिरुह्य कृतयात्रस्य तत्र तत्रापरोक्षमेव निखिलमुद्वीक्षमाणस्यास्य जनस्य परीक्षायां पूर्वोक्तैरेभिर्नूनमूनर्धस्यापि भागस्य नासीदापूरणेति दूरमाकृष्यते परभागेण हठादेष मनोरथः । परन्तु सर्वोऽप्ययमपरो भागः सममेकमेवरूपमवष्टभ्यनिर्वहति लोकस्थितिमिति बाढमपदान्तरमेतस्य गतं रथस्य । सामान्यतः सृष्टेष्वपि प्राणिराशिषु यथा हि विशेषज्ञा मनुष्याः, अतथाभूताश्च पक्षिमृगादयः, तथैव मनुष्येष्वपि तेषु स्वतःसिद्धमपि बोधमुकुरं विमलयन्तः केचन विबुधा, भूयस्तरां कलङ्कयन्तः परे च सर्व एवान्येऽबुधाश्च जाग्रतीति प्रसिद्धेयं प्रकटना । आधारानुगुणं हि भजत्याधेयस्यापि निर्मितिरौचित्यं विश्वसृजः स्थलजलात्मना विभक्तेऽपि महीयसि भुवने कार्योपयोगक्षमं स्थलं भृशतरमल्पमेव । तत्रापि जननिवासार्हाः प्रदेशाः स्तोकस्तोकाः । तत्रापि च विद्वज्जनानुकूलावसतयो विरलविरलाः गणनीयाः किल । निश्चितमबुधा एते विगतबोधा जन्तवो गावः । कृत्यमेषां दैनन्दिनमितरैः साधारणमाहारनिद्रादयः । तत्साधनाय यावतोऽपि पथः स्वयमेव

विरचय्य स्वैरं प्रवर्तन्ते कृत्याकृत्यविचारशून्यमेव कुत्रचिच्चोरणम् कुहचन मारणम् क्वचिद्दारधारणमित्येवमनन्ता मिश्रा अपि हिताः प्रवृत्तयस्तेषां दृश्यन्ते विश्वं किल विरचयितुमनाः परमेष्ठी यदि नास्रक्ष्यत्सन्नियोगशिष्टमर्यादया प्राणिनां क्षुत्तृष्णादीन् का पुनस्तदाभविष्यदेतेषां प्रवृत्तिपद्धतिरिति को वा निश्चिनुयात् । न पुनरेते मूढाः, नाप्येते विद्वांसः, न किलैषां शरीरेऽप्यात्मबुद्धिः, नापि स्वस्वात्मन्यपि शरीरबुद्धिः, किन्त्वनात्मानः, अशरीरिणः, अकृतबुद्धयश्च समं पार्यन्तिकीमवस्थां प्रतिपन्नैः श्वसन्ति परं दृतय इव । जगच्चक्षुषोऽपि भगवतः सूर्यस्य नीरनीलाभ्रपटलीवान्तर्यामिणोऽप्यविशेषमपरैः चित्कलाविशेषस्य बाढमेषामविद्यावृतयः स्थूलस्थूला बाधन्ते प्रकाशम् ॥

सुभाषितस्य जीर्णता दर्शयममीषां कर्णपथं कथं नामाधिरोहतु! अथ वा कथंचिदारोप्य श्रवणसरणिमन्तःप्रवेश्य अनुशोचय्य च शक्यते क्रियासमभिहारेणापि प्रवणयितुमेतादृशां हृदयम् । सुविनेया हि मतयः पुनरेतेषामसञ्जातकण्टकसंसर्गा बालवल्लर्य इव यथोद्दिष्टं प्रदेशम्, बालाः, कुमाराः युवानः, वृद्धाश्च नूनमेते भवन्ति शारीरं भावभेदमवलम्ब्यैव । न तु मानसमपि परिष्कृतिसोपानमधिश्रित्य क्रमशो बुद्धिशय्यामाधिशयानाः । एतादृशैः किल भूयोभिर्जनैरेडिते वा मूकिते वाऽन्धिते वाऽस्मिन्धरातले खद्योतायिताः कतिचिदान्तरालिका बोधबलेनापि सर्वज्ञम्मन्यमानाः परिवर्तन्ते दुर्विदग्धा दुर्जनाः । तमःप्रकाशयोरन्तरापि स्थित्वा तैरेतैः किमिव न सम्पाद्यते स्वाभीप्सितम् । कियदिव न पीड्यन्ते परे विदग्धा अपीति नालं वाचा वर्णयितुम्, पुरतो दंशं पृष्ठतः प्रक्षेपं च रक्षामिवात्मनः शिक्षामिव

चान्येषामाकलयन्तोऽसंशयममी सहचरा दुष्टानां रासभानाम् । किमिति बहुभाषितेन, न स्वयं जानते किञ्चिदपि याथार्थ्येन न वा बुध्यन्ते बोध्यमाना अपि परैः; मन्वते तु दृढतरं स्वानुष्ठाने स्वभाषिते च सुभाषितं सर्वथा पूर्णम् । नैवानलं रञ्जयितुमृते व्यामोहमीशोऽपि । तत्खल्विदमेव तत्त्वं सम्यक् प्रतिफलितमन्तरादर्शे महाशयस्य हरेः कवेरमादिव विनिर्गतं बहिरित्थमुद्घुष्यते--

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥

अयि सुभाषितसुहृदश्चिरञ्जीविनः ! किंपुनरागतमियतानेन प्रबन्धेनेति चिन्तयाम तावत् । तथा हि-- बृहतोऽस्य क्षमातलस्य यात्रायां नियतमर्धाधिकं ततोऽधिकं वा पामराः पान्थाः । अवशेषस्य तु प्रभवोऽल्पज्ञा विज्ञाश्चेति यथाक्रममवरावरस्य त्रयः सञ्चारिणः । तेषु च बहुलबहुलं विनैव सुभाषितं वीवधमटाट्यमानानेनान् समवेतानवलम्ब्य प्रपञ्चोऽप्ययं निर्बाधमिव परिवर्तमानः संपद्यते मोदायैव कालेयानां विलासानाम् ॥

इति पूर्वः खण्डः ॥

---

## अथोत्तरः खण्डः ॥

---

अथ पुनर्निर्वर्णयाम सुभाषितं किमिति । जगदपीदं यदवलम्बितं सद्धजदिव स्थास्नुतां कृतनियममव्यभिचरदेव परिवर्तते । नस्ययेव रज्वा प्रोता वृषा इव जना येनानेनानुबद्धा नीयन्ते नियतमाचारक्षुण्णामेव सरणिम् । यस्यामपि स्पृहयते निस्पृहः समवाप्त-

समस्तकल्याणोऽपि भगवानधोक्षजः । यतः खलु पराजयते भीत-भीत इवानाचारसमाचारः । यस्य पुनरधिकारो विष्णुरिव व्याप्य त्रिभुवनं साधु बिभर्तीव । यत्र च समवेतमिव सर्वं क्षेममक्षीणमुज्जृम्भतेतमाम् । यदपि च प्रभुरिव भृत्यम्, सुहृदिव हितकामम्, कान्ताजन इव कामुकं च सर्वमेव चेतनं शास्तीवाख्यातीव वशयतीव च समन्ताद्विजयते । तदेतन्मन्यामहे सुभाषितं सुभाषितम् ॥

पश्यत महाशयाः? वेदाः, स्मृतयः, पुराणानि, इतिहासाः, काव्यानि च बिभ्रति प्रपञ्चमिति सर्वसंप्रतिपन्नं किल जोघुष्यते । आर्याणां वा नार्याणां च कैस्तवानां माहामदानां वा सर्वेषामेव जनानां स्वस्वमतप्रवर्तकैरीश्वरैरिव पुराणैर्महाशयैः सुष्ठु भाषितं सुभाषितं किमपि पूर्वोक्तवेदपुराणादिरूपं समुन्मीलत्येवेति दृढमेतत् । यदि नोदायिष्यत लेशतोऽपि सुभाषितं ज्योतिर्बाढमन्धितमिदं भुवनमेवाधुना नाद्रक्ष्यतैवमिति शक्यं सिद्धान्तयितुम । यत्खलु नास्त्येव तादृशं ज्ञानम्, यन्नापेक्षते शब्दानुबोधमात्मनः संपत्तौ । तथा हि—

न सोऽस्तिप्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ इति ॥

चित्रं! चित्रं! अवचनावसरेऽपि निगूढमपि वा वचनमपुरस्कृत्य न प्रवर्तते लोकयात्रेति महानयं वितानः शब्दजालस्य, गुणिनमिव गुणः प्रपञ्चं समवयन्नेव लब्धात्मा विराजतेतमाम् । शब्दार्थयोर्नित्योऽभिसंबन्ध इति वदतां चेदमेव परमाकूतं समुन्नेतुं शक्यमूहनानिपुणैः एतादृशस्य बहिःशब्दनाकृतिनो भाषितस्य द्वारीकृत्यान्तरं शब्दनं समुद्भूतस्य विना प्रचारं जना मूका इव,

(क्रमशः ।)

## देशवृत्तान्ताः ॥

प्राचीनार्यवैद्यप्रचारे मद्रमण्डले विशेषतः केरलीया एव महान्तमभिनिवेशमाविष्कुर्वन्ति । प्रायो बह्वीषु पाठशालासु अष्टाङ्गहृदयादिग्रन्थपठनं मुख्यकल्पे निवेशितं दृश्यते । राजकीयानां तु प्राचीनवैद्यप्रोत्साहनं पापकृत्यमिव प्रतिभातीव । किं कुर्मः । मनुजशरीरयन्त्रस्य विशेषज्ञानं विना पारम्परिकीं सरणिमनुसृत्य एकमूलिकाप्रयोगेन वा अन्येन व्यवस्थितौषधेन वा रोगशान्तिं कारयितुमुद्योगमनुतिष्ठन्तः वैद्याः न सर्वथा विश्वासपात्राणि भवन्ति इति आङ्गलभिषग्वरा उद्घोषयन्ति । साक्षात् धन्वन्तरिः स्वयमागतोऽपि एतैः नाभ्युगम्येत भिषक्कोटिषु ॥

श्री भागवते बाणासुरयुद्धे परस्परं ज्वरप्रयोगेण सैनिकानां पीडा समजनीति वादः एतावता कालेन देशान्तरीयैः ऐतिहासिकानां कथानिर्माणकौशलमूलकः इति निश्चितः । अद्य समेधमाने ऐरोपीयायोधने परस्परं सैनिकानुद्दिश्य आकाशे वायुद्वारा विषव्याधिप्रयोगः कर्तुं शक्यते एवेति स्वानुभवेन ज्ञायते ॥

---

# The Sanskrit Journal

OR

## ॥ सहृदया ॥


EDITOR

R. Krishnamachariar, M.A.,

Vidyanidhi.



VOL. XXI.

No. 4—5.





PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM

AND PUBLISHED AT MADRAS.





Registered No. M. 103

विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, 1/3 Ormes Road, Kilpauk, Post, Madras (W).
6. Annual subscription is Rs. 3 only. including postage.

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ९. ] नलवर्ष आषाढमासः । [ संचि. ४.

## सुभाषितानि ॥

नन्दनजन्मा मधुपः सुरतरुकुसुमेषु पीतमकरन्दः ।
दैवादवनिमुपेतः कुटजे कुटजे समीहते वृत्तिम् ॥ १ ॥

नष्टे वारिजविपिने कष्टे नष्टेऽथ मालतीनिकरे ।
तत्किं जीवति लोके मूलमकरन्दबिन्दुना यदलिः ॥ २ ॥

किं न पश्यसि महेन्द्रदिङ्मुखे
शीतदीधितिरसावुदञ्चति ।
मीलितैव नलिनीह माकृथा-
स्तन्मधुव्रत मुधा गतागतम् ॥ ३ ॥

भ्रमर भ्रमता दिगन्तराणि
कचिदासादितमीक्षितं श्रुतं वा ।
वद सत्यमपास्य पक्षपातं
यदि जातीकुसुमानुकारि पुष्पम् ॥ ४ ॥

॥ श्रीः ॥

# ॥ मदीयः स्वप्नः ॥



अयि पाठकमहोदयाः ? शारद ऋतौ, आप्रभातमाचसायं निजाविश्रान्तव्यवसायेन नितान्तं परिश्रान्ते विश्रान्तिसुखमासेविषाविवास्तगिरिशिखरमारोढुमुद्यते भगवति भासांनिधौ, प्रफुल्लप्रसूनपरिमलसुरभितेषु शीतलेषु मन्दं मन्दं वहत्सु मलयमहीधरसंभवेषु गन्धवहनन्दनेषु, कदाचन सायन्तने समये, भवदवसन्तप्तं चित्तं विनोदयितुं ग्रामादासन्नतरवर्त्युपवनभुवि सायन्तनसमीरणासेवमान इतस्ततः संचरन्नासम् । अपश्यमत्रान्तरे क्वापि महतानन्देन गच्छन्तं महान्तं जनसमाजम् । विलोक्य च तं विस्मयवशीकृतान्तरङ्गो झटिति तदन्तिकं गतोऽपृच्छं तत्रैकं पुमांसम् । महाभाग, कुतोऽन्वयमेताबाञ्जनसमाजः ? कुत्रवागच्छति ? प्रकामं प्रमुदित इव दृश्यते, किमत्र निदानम्, इति । तदा स निशम्य मदीयानि भाषितानि बाढं विस्मित इव मां प्रति — अङ्ग न कश्चिज्जानाति भवानिदम् ? अद्य ननु मङ्गलतरो धवलपक्षीयः प्रथमो दिवसः, प्रारभिष्यतेऽद्यप्रभृति भगवान् पीयूषभानुः प्रत्यहमेकैकया कलया प्रवर्धमानः पीयूषासारवर्षिभिरात्मनः करैः सकलमपिभुवनाभोगमामोदयन्निजं प्रकाशनकार्यं कर्तुम्, पश्य इतः कासारे, कथमेताः कुमुदिन्यो जीवितसर्वस्वस्य जैवातृकस्य विरहमसहमाना इव विच्छाया संवृत्ताः, प्रतिपालयन्ति च ता जीवितनिबन्धनस्येन्दोरुदयमार्गम् । नमेऽवसर इदानीमधिकमाख्यातुम्, महीयाञ्जनसमाजोऽयं सङ्गतोऽत्र सकलजगल्लोचनासेचनकस्य चन्द्रमस आदिमां कलां विलोकयितुम्; यदि रोचेत

भवते, भवानप्यागच्छतु ; अतिक्रामति वेला, अहं पुनर्गच्छामीति निगदन् द्रुतपदं गतः । अथ स जनसमाजः सर्वोऽपि स्फुटं भवेद्यामिनीप्रियतमस्यादिमकलायाः संन्दर्शनमिति सन्निकृष्टवर्तिनी-मधित्यकां गन्तुं प्राक्रमत । अहमपि महता कुतूहलेन वशीकृतः सरभसं तामेवाधित्यकां गत्वा तत्रैकां गरीयसीं शिलामध्यातिष्ठम् । अत्रान्तरे प्रादुरासीद्रोदसीभिन्दन्निव महानिन्दुसन्दर्शनकोलाहलस्त-स्मिञ्जनसमाजे । ममापि दृष्टिपथातिथीभूतो लोचने शीतलयां-चकार भगवान् शीतकिरणः। स भक्त्युल्लासमारभत स जनसमाज-स्तदा तं निशीथिनीनायकं प्रसन्नतमेन चेतसा स्तोतुम् । प्रेष्ठाः पाठकवरेण्याः किं कथयामि नूनं स प्रदेशस्तदा निकामं सम्मोद-मय इव शान्तिमय इव भक्तिमय इव चावभासे स जनसन्दोह-स्तदा सन्दर्शनेनेन्दोः संवृत्तो विस्मृतस्वपरभावः । अहो! तस्याः सुधांशोः कलाया हृदयङ्गमत्वम्! हन्त लोकोत्तरं खलु तदीयं प्रशान्तमोजः !! विलोक्य तन्मे प्रसन्नतमं संवृत्तं हृदयम्! प्रमोद-जलपूर्णे नयने ; किमधिक मावेदयामि! आनन्दमन्थरेण? विस्मृता-त्मा क्षणं प्रतिपत्तिशून्य इवासम् । या खल्वघटिष्ट तदानींतना मे दशा, न तां वर्णयितुमेषा लेखनी समर्था ॥

अथ मनागिव गच्छति कालेऽस्तगिरिशिखरमाशिश्रियद्भ-गवान् बालमृगाङ्कः । जनसमाजोऽपि स शनैः शनैः स्वं स्वं सदनं समुपाक्रमत गन्तुम् । सर्वत्र प्रसृता शान्तिः, स्थिरीकृतं गाढतमेनान्धतमसा निरातङ्कं निजं साम्राज्यम्, अश्रूयत च प्रति-भयतमः? कौशिकघटाघूत्कारः सर्वत्र, अथापि नाम नाहं पर्य-त्याक्षं तदधिष्ठितं शिलातलम् । वशीकृतं खलु तदा मदीयं मानसं

चपलतया । विचारतरङ्गा अपि निरायासमन्तरङ्गे पदमकार्षुः । पाठकमहोदयाः प्रशान्ततमः प्रदेशो हि निशायां नितान्तं निद्राया निदानं समेषामिति नैतन्नविदितं तत्रभवताम् । अत्यन्तं दुरन्तचिन्तासन्तानतान्तस्वान्तोऽप्यहं वशीकृतो बलवदभद्रया निद्रयाऽस्वपं तत्रैव शिलायाम् । मनागिवानुभूतनिद्रासुखोऽन्वभवं निम्नलिखितं स्वप्नसुखम् ॥

वाचकवरेण्याः प्रतिभयतमेनान्धतमसेनान्धीभूताः सर्वा अपि दिशो निजप्रकाशविकासेन विशदयन्तं कमपि तेजोमयं पुमांसमेकं पश्चिमेन तामेवाधित्यकामारोहन्तमपश्यम् । प्रशान्तमासीत्तदीयमोजोऽचिराद्दृष्टं चान्द्रमसमिव तेजः विलोक्य पुरुषमेतं बाढं विस्मयाकुलं मे मानसम् । यथा यथा ह्यागच्छत् स पुमानन्तिकं तथा तथाऽधिकाधिकमध्यगच्छत्पोषं तदीयं शमप्रधानमोजः । नूनं प्रियमहोदयाः! नितान्तं नयनासेचनकं तत्तेजः । निरचैषं पुनस्तदा नूनमयं पुमान्पार्थिव इति आगच्छतस्तस्य पुंसः पंथा अपि मदभिमुखीन एवासीत् अत्रान्तरे चिरपरिचित इव मदन्तिकमुपागतः सस्मितं सकरुणञ्च वक्तुं प्राक्रमत ॥

सः— वत्स उत्तिष्ठ, कुतो नु निद्रासि, शृणु मे वचांसि, हितं ते वच्मि, अवहितो विकिर तत्र दृष्टिम् । किन्तु वा भवति दृष्टिगोचरं तत्र ते, यत्र खल्विदानीमेव विलीनमेकं प्रशान्तं ज्योतिः, तात पश्य तदतिक्रम्य, अपि विद्यते किमपि तत्र? निपुणं तावन्निर्वर्णय ॥

अहम्—सविस्मयम् भगवन्? न खलु किमपि वा मे दृष्टिगोचरं भवति तत्र घनध्वान्तसमाक्रान्तनभोमण्डले प्रकामं च-

कासति स्तोकेतराणि तारकापुञ्जानि परम् । तान्येव च मे नयनगोचरणाणि भवन्ति ॥

सः— सवात्सल्यम् जात पश्य वितीर्यते दिव्या दृष्टिरेषाते मया, तया पुनः पुनरेकदाऽवहितो विलोकय? हुं कथय, अपि दृश्यते किमपि ॥

प्रेष्ठाः पाठकमहाशयाः किमपि वा भवतु । उपतता किल तदात्व एव तस्य महात्मनोऽनुकम्पया मे दिव्या दृष्टिः । आबभासे सकलमपि भुवनतलं प्रशान्तप्रकाशमयमिव । तया दृष्टया निपुणं निर्वर्णयतो मम तेन महात्मना प्रदर्शित प्रदेशे सर्वाङ्गहृदयङ्गम एकोल्पीयान्महीधर आसीन्नयनामत्रम् । विलोक्य तं पर्वतं विस्मयस्य परां काष्ठामध्यगच्छम् । प्रतिपत्ति परित्यक्तः क्षणं मूढ इव तूष्णी मतिष्ठम् । तत इदृगवस्थं मां वीक्ष्य करुणारसपरिप्लुतान्तःकरणो मदीये शिरसि निजं वामेतरं पाणिं निधाय मां प्रति सानुरागमब्रवीत्सः ॥

वत्स! श्रुणु, माभूः कातरः । एष लघुतरोऽपि रमणीयतरः पर्वतः सर्वथा भगवता परमेश्वरेण निजनिवासाय कल्पितः । पर्वतोयं सूनमनश्वरस्यानन्दस्य निधानम्, मातृगृहं खलु कलाकुशलतायाः; प्रसवभूमिः स्वतन्त्रतायाः; आवासमन्दिरं च सत्यतायाः; किंबहुना! वार्तापि वत्स, नात्र विद्यते दुःखस्य; न जातु वातिमनागप्यसत्यतासमीरणः, न प्रभवति कलहः पदमपि कर्तुम्, नह्यधर्मस्येहापि समागन्तुम् । नामापि नाम नास्ति खलतायाः, नावकाशो विद्वेषस्य, क्रूरता च पुनर्दूरादेवेतः पलायति । समूलमुन्मूलिता पिशुनता न कोपि पृच्छति द्वैधम्, ये खलु खलजनसुलभा गुणाः

सर्वेऽपि ते निर्वासनादण्डेनेतो निर्वासिता इति चेदुच्येत न तथा प्येषोक्तिर्नातिशयकोटिमाटीकेत । सौख्यसारल्यसत्यतास्नेहसमतादीनामेषप्रधानं निधानम् । मानवेषु वनचरेषु जलचरेषु व्योमचरेषु च न कदाप्यत्र विद्यते भेदभावः । नान्यदस्ति कुत्रापि पुनरीदृग्विधं स्थलं भगवता सृष्टं भुवनत्रये । अहो क्रौर्यं कण्ठीरवस्य । अपि विद्यते तादृक्षः कोप्यन्यो हिंस्रतमो जन्तुः जगति ? परं तात पश्य कथमेष मृगेंद्रोऽत्र सवात्सल्यं मृगशावकैः क्रीडति विहाय स्वजातिसुलभं चापलभावम् । को हि जात भुजङ्गम इव विषमयोऽन्यः कीटः सकलेऽपि भुवनमण्डले विद्यते । हन्त सोऽपि विषधरः परित्यज्य सकलमपिक्रौर्यं कथं वितनुते सर्वैः प्राणिभिः साकं विविधान्विलासान् पश्य । नह्येतावदेव । इतो निक्षिप चक्षुषी, विलोकय मार्जारमूषकावेतौ, कथं विस्मृत्य वैरभावमेकत्र प्रसुप्तावनुभवतो महान्तं निद्रासुखम् । अहो अनुराग एतयोः । अपि वर्ततेऽङ्ग, क्वचिदपीदृशं स्थलम् । नूनमिदं परमानन्दनिदानं रमणीयतमञ्च । न कस्मै रोचेत सर्वाङ्ग सुन्दरमिदं स्थलम् ॥

अहम्— अवश्यमावर्जयेदिदं समेषां चेतांसि । नास्त्यत्र संशीति लेशोऽपि । आश्चर्यं वाऽत्र किम् । नैतद्भवतो वचसैव केवलम् । यदहं साक्षात्पश्यामि साम्प्रतम्, तेन खल्वहमेवं तर्कयामि । ये च श्रूयेरन्नत्रत्यमवाङ्मनसगोचरं विभवम्, तेऽपि नाम सुकृतिनः श्रवणसमकालमेव जीवितापायेनाप्यधिगन्तुं प्रयतेरन् ॥

सः— (सहासम्) वत्स त्वमसि बाढं मूढः । अनितरसुलभमनुत्तमञ्चेदं स्थानं स्थावरजङ्गमानां जगतां सर्गस्थितिप्रत्यवहारनिदानेन भगवता परमेश्वरेण निजनिवासाय निर्मितमिति ननू-

क्तमेव पूर्वम् । यः पुनरेतत्सर्वं सहातलमस्राक्षीद्भगवान् स एव यद्यप्यस्यापि जगतः स्रष्टा, अथापि नाम महदन्तरमेतयोर्जगतोः परस्परम् । यत इयं भूः पुनराधिव्याधिपुरःसरैः परःशतै र्व्यसनैः समाकुला; इदं भागवतं पदं नीरोगतादिभिः सङ्ख्यातिगैः सुखैः पारिप्लुतम् । ~~सुखैः पारिप्लुतम्~~ । इयं खलजनसुलभैर्दुर्गुणैर्दूषितम्, तच्च सज्जनानुशीलितैः सद्गुणैर्भूषितम् । अस्यां भुवि सुरापानसंभ्राता जनाः, पारमेश्वरे पदे च पीयूषपानधन्याः, शाश्वतिको निवासः करालस्य मृत्योर्मेदिन्याम्, वार्ताऽपि नाम नास्ति दिव्ये पदे मृत्योः निवासश्चामराणाम् । एषा खलजनकण्टकिता, तच्च पवित्रीकृतं भगवता भूतभावनेन जगदीश्वरेण निजनिवासेन तात, कथमीदृग्विधं पदमधिगन्तुं न कामयेयुर्जनाः । सर्वेऽपि नूनमिह वस्तुमहमहमिकया प्रयतेरन् । परं न पदमिदं सुलभं समेषाम् ये हि परः शतव्यसनाहता अपि स्वकुलक्रमागतपवित्रतमाचारानुष्ठानेन यावदायुः क्षपयन्ति कालं, त एव निरायासं सुकृतनिःश्रेणिकयाधिरुह्योन्नतमिदं पदं मुच्यन्ते महतो जननमरणदुःखात् ॥

अहम्— भगवन् येन पथा गच्छन्नधिगच्छतीदं पदं मानवः । कच्चित्तं पन्थानमुपदेक्ष्यति मे भगवान् ?

सः— वत्स, आकर्णय, कथयामि तं मार्गम्, यः पुनरखिलानपि लोकान् सृजति, ततः पालयति, प्रतिसंहरति चान्ते, तस्य भगवतः प्रसादनमेवानुत्तमो मार्गः परपदप्रतिपत्तये ॥

अहम्— आर्य कथं स भगवान् सर्वव्यापी सर्वज्ञः सर्वशक्तिमान् सर्वेश्वरः प्रसादनीयः, कथं च लभेत भवदुपदिष्टः पन्थाः पामरैः ? उपाया वा तत्र के ॥

**सः—** वत्स ? उपायाः पुनस्ते वक्तुं श्रोतुञ्च सुलभाः, अनुष्ठातुं बाढं दुष्कराः । ते च उपायाः कथ्यते ।

'सत्यतायां महीयानादरः सर्वदा, जीवितापायकरेऽपि समये समापतितेऽनङ्गीकारोऽसत्यतायाः'

'पराजयो निजशरीरजातानां षण्णां रिपूणाम्'

'प्रशमो हि कुलव्रतम्'

'सर्वभूतेषु विनीतभावोऽनुकम्पा, समबुद्धिश्च'

'अचिन्तनं मनसापि परद्रव्यपरयोषिताम्'

'परावर्तनं दूराद्दुर्वासतादुर्व्यसनेभ्यः'

'सज्जनानुशीलितेन पथा सञ्चरणम्'

'स्वकुलोचितकर्मणां निष्कामबुद्ध्या सविस्रम्भमाचरणम्'

'गुरुजनेऽवदाततमा निश्चला भक्तिः'

'स्वधर्मे परमो विश्वासः, गच्छत्स्वपि प्राणेष्वनाश्रयणं परधर्मस्य'

'अव्याजनिर्मलभक्तिभरावनतेन चेतसाविश्रान्तं चिन्तनं भगवतः'

एता एव त उपायाः, एतान् हृदये निधायावहितो यः परमेश्वरपदमार्गं मार्गयति तस्य नूनं सुलभः समार्गः । वत्स ? वक्तव्यं मनागिवावशिष्टं किमपि । तदपीदानीमेव कथयामि ! यथा यथा ह्याचरेत्स्वकुलक्रमागतधर्माचरणेऽनादरं मानवः , तथा तथा तस्य भागवतमिदं पदमतिमात्रं भवति दुर्लभम् । ये च दुरात्मानो दुर्व्यसनदुराचारमिथ्याभाषणादिस्वायत्तीकृता प्रविचलन्ति धर्म्यात्पथः, न ते कदाचिदपीदमध्यगच्छेयुः शाश्वतिकं परमात्मनः पदम् । न जातु

समापतिष्यति तेषामभ्युदयकालः, सुखसमीरणशीतलस्पर्शोऽपि न स्यात्तेषाम् । आयुरप्यध्यगच्छति क्षैण्यम्, न प्रसीदति मनागपि तेषु भगवान्, सुलभश्च भवेन्निरयमार्गः किल तेषामन्ते । विषमतरमनुभवेयुर्महान्तं कालं निरयवासम् । वत्स ? मा विस्मर कदाचिदप्येतत् ॥

वाचकवरेण्याः ? एवं निगदति तस्मिन्नपार्थिवे पुरुषे सहसाऽहं संवृत्तः प्रबुद्धः । परितो दिक्षु त्यक्षिपं चक्षुषी असकृत् । किं तत्र । सर्वोऽपि स प्रदेशस्तदा तमोमय आसीत् । न तत्रासीत्स दिव्यः पुरुषः पर्वतोऽपि नाम स सुन्दरतरो नाभवन्नयनगोचरः । अहो हन्त स उपदेशः । यस्येदानीमपि मयि लोकोत्तरः परिणामः । निरचेषं तदानीमेव वर्तितव्यमवश्यं मयैतदुपदेशानुसारेणेतः परं सर्वदेति । महाभागाः ! दिव्यतर एव स उपदेशः । ततोऽहं समागतः प्रसन्नमनाः समाप्य तादात्विकं सकलमपि यथोचितं कर्म सुखमस्वपम् । ततो महत्येव प्रभाते पुनः स दिव्यः पुरुषो निद्राङ्गनया गाढमालिङ्गितं मां स्वप्ने समागत आज्ञापयामास । वत्स ! उत्तिष्ठ प्रसन्नं मे मानसं ते निश्चयेन । अवश्यमुपहर्तव्यः स्वप्नोऽयं कस्यैचिद्वृत्तपत्रिकायै इति । ततोऽहं सरभसं शयनादुत्थाय निर्वर्त्य च वैभातिकं कर्म स्वप्नोऽयं यथावद्विलिख्य सहृदयासहृदयवाचकमहोदयेषु निवेदनीय इति निश्चित्य प्रेषितः । अयि सोदरि सहृदये ! अपि रोचेत ते सहृदयवाचकेभ्यो मदीयः स्वप्नः ? यदि रोचते प्रकाशयतु भवतीति प्रार्थयमानः सहृदयविधेयः ॥

बड्ली श्रीचिदम्बरशर्मा ।

*

॥ श्रीः ॥

# ॥ जीर्णमङ्के सुभाषितम् ॥



(पूर्वतोऽनुवृत्तम्)

अन्धा इव, बधिरा इव च, किं बहुना सर्वेन्द्रियविकला इव न पारयन्ते ज्ञातुं ज्ञापयितुं वा कथमपि किमपीति विवादानाघ्रातोऽयं विषयः। एवमपरिहरणीयस्यावश्याभ्युपेयस्य च शब्दनस्य यथातथमुपयोगानुपयोगाभ्यां भूषितदूषिताभ्यां सुभाषितदुर्भाषिते संजातावतारे भवत इति सर्वथा भवत्ययं पिण्डितोऽर्थः॥

स्वरतो वा वर्णतो वाप्यस्खलितः समस्तोऽपि सुमनसां मनोहारी शब्दः सुभाषितमेव। स्वरो नाम स्वर्यमाण उच्चार्योच्यमानोऽर्थः। वर्णश्च शब्दनरूपम्। आभ्यां यथाविधि नित्यसम्बद्धस्य शब्दस्य प्रवृत्तिरेव सुभाषितमिति तु पार्यन्तिकोऽर्थः॥

एतच्च नाम सुभाषितं केवलबाह्यं केवलान्तरमुभयरूपं चेति त्रिधा विभागमर्हति। केवलशब्दे केवलार्थे शब्दार्थयोरुभयोरपि च सुघटितं सौन्दर्यमवष्टभ्य कृतविभागेष्वेषु यथाक्रमसुत्तरोत्तरमुत्तमोत्तमं भवति। प्रथमं तु हृदयस्याधिष्ठातुराक्रामन्त्येवाधिकारं स्वयमधिष्ठाय च वाचेन्द्रियेण केवलं वितानितो वाग्विलासः श्रुतिमधुरतामात्रेण सुभाषिताभासतया गण्यते सुभाषितकोटौ॥

अथ पुनरेतावता क्रमेण लक्षितलक्षणस्य सुभाषितस्य तत्र तत्र देशेषु कालेषु मतेषु भाषासु च भिन्नभिन्नरूपस्य बहुलतया वक्तुमशक्यत्वात् क्वचिज्जीर्णताया अनुपलम्भाच्च आर्याणां देवभा-

षासंम्पृक्तस्यैव तस्य प्रस्तूयते कथा, या किल देवभाषा हितकारीव प्रसूः स्तनन्धयानां जन्मभाजां क्षीरमिव मधुरमधुरं पथ्यं तथ्यं च तत्वोपदेशं प्रसुवाना मुकुलितमिव पङ्करुहकोरकं हृदयं समुन्मीलयन्तीव दिनकरीया दीप्तिः प्रकाशयन्ती विज्ञानप्रदीपं प्रदीप्य दृढमुद्धाटयन्त्यान्तरं चक्षुरद्वितीयम्, यस्यां च क्वचित् सकलजगन्नियामकभगवदेकप्रमाणा वेदाः; कुहचन व्यतियानमिव सम्भावितस्य लोकस्य नीतिसीमायिताः स्मृतयः, कुत्रचित् वीराधिवीरभक्ताधिभक्तादिमहापुरुषचरित्रवर्णनया कर्तव्याकर्तव्यकार्यपरिपाटिं परिगणय्य प्रत्यक्षयन्तः पुराणेतिहासाः, क्वापि चिराभिलषितपरमानन्दपदप्राप्तिप्रदर्शकवेदान्तवनसञ्चारे समुत्प्रेक्षितदुर्घटपदार्थग्रन्थिमपनुद्य सौकरीं वितन्वन्ति वेदाङ्गानि विचित्रविचित्राणि शास्त्राणि, कुत्रापि दुर्ग्रहमपि स्वप्रतिभाननुगुणमपि विरसाभासं हितोपदेशं बालानां शर्करोपलिप्तमुखमिव कटुकौषधं सरससरसमेव हृदयं सञ्चारयन्ति रामणीयकभाञ्जि काव्यानि क्वचन मन्त्रशास्त्राणि, कुहचित् तन्त्रशास्त्राणि, इत्याद्यनन्तानन्तैरङ्गैर्बहोः कालादारभ्य कृतभूरिसञ्चारैरिव विस्पष्टं दृश्यमानाऽतिवृद्धतापि सर्वेषां महते मोदाम सम्पद्यते । अपि च वाक्यस्य वा पदस्य वा वर्णस्य वा यत्र क्वापि कोणे विश्राम्यन्त्यो महत्यः शक्तयोऽपि नैवमन्यासां भाषणमिति सुप्रसिद्धमेतत् । महामन्त्रादिषु पृथक् पृथगचां हलामपि फलानुमेयमूर्जस्वलत्वमनितरसाधारणमनपलपनीयं च परमं धनमस्या एकस्या एव । लब्धजनुषां जनानां न केवलमपि तु जन्तूनामेव निखिलानां तं तं मानसिकं भावविशेषं यावत्सम्भवमनुभावयन्निव, पुरतः प्रवर्तयन्निव, सर्वतो वाग्वितानो-

ऽपि नूनमेतदीयमेवानर्घं भागधेयम्। अपरश्चायमितरभाषाभिः स्पृहणीयः सुदुर्लभश्च सर्वोत्तरो गुणः कण्ठरवेणोद्घाटनीयः—— यदेषा देवभाषा गुरुकुल इव पावने प्रवेश्य कृतसंस्कारेव प्रमदा पाणिनीये शब्दयन्त्रे मुद्रितनिजसीमा सती न मनागपि व्यभिचरति, पतति, उन्नमति, सर्वथा विकुरुते वा। अतो हि गृणन्ति युक्तमेव संस्कृताख्ययैनां सर्वेऽपीत्यलं पल्लवितेन ॥

वस्तुतश्चिन्त्यमाने तत्वे नास्त्यस्यां तादृशं भाषितं यन्नामासुभाषितं भाषितम्। अधुना पुनर्विनोदायेव परं सम्पद्यमानं भाषितं सुभाषितं मन्वानानां मतं दूरे गतमस्य विमर्शस्येति सुभाषितरूपनिरूपणादेव सुबोधं बुधानाम् ॥

अयि रसिकाः पण्डिताः! एवं समभिलषितसकलगुणपरिपूर्णेनापि देवभाषासुभाषितेन यदिह जीर्णं तत्कस्य वा कठिनकठिनेनापि चेतनस्य हृदयेनापि सहसैव न जीर्णम् ॥

अथवा साम्प्रतमेवैतत्। यत्किल देवभाषायाः सर्वाण्यपि तानि तान्यङ्गानि बहुदूरं कृतसञ्चाराणीव क्षीणक्षीणानि स्थविराणि जातानि, तदिदं भवति ध्रुवमपावृतमिव कवाटं जराप्रवेशस्य। यदपि च विना सोपानक्रमं युगपदेव दृढमवृत, महती सौन्दर्यपुष्टिरेनाम्। यच्चापि परमस्याः पातिव्रत्यमितरलोभनीयं सुरभिलमिव प्रसूनमखिलेष्वङ्गेषु भूषितं वासयतीव सहृदयान्। द्वयमिदमपि कथं नाम काले यस्य कालस्य दृष्टिपतितमनर्हं तदीयस्य कवलस्य चिरं जागृयात्? अहो बत मान्याः! नूनमेनेनामृतेनापि मृतं सुभाषितेनेति हतहताः स्मः सर्वे वयं तदेकोपजीविनः। अथवा नायमपराधः परकीयः। यदेषा देवभाषा, असुभाषितस्य (असूनां

भाषितस्य) कथामपि न स्पृशति । तत्कुतो भवतु जीवितमस्याः ? इति च न च खलु वेदितव्यं केवलफक्किकाप्रौढिरिति ॥

यथार्थतश्च भाषायामस्यां पुरुष कारक-लिङ्ग-विभक्तिवचन-प्रयोगप्रमुखैरतिदुर्घटैरध्वभिर्दुष्प्रवेशायां भूयोभूयः प्रयस्यतामपि तत्र तत्र स्खलितमुदाहरन्त्यां च कथमिव बहवोऽध्वानीना उपलभ्यन्ताम् । न हि जनाः सन्ततचिन्तितार्थसमर्पकं पापौघविध्वंसिनमपि सर्वेश्वरविग्रहं प्रसन्नमाधिगर्भगृहमधिष्ठितं द्रष्टुमुत्कण्ठापरवशा अपि गोपुरोपगोपुरद्वारादिप्रवेशसरणिषु प्रकाशमन्तरा केवलयैव हस्तामर्शसंज्ञया बहवः प्रविशन्ति क्षेत्रमिति नायमपरिचितो नूतनोऽर्थः । आघट्यापि स्थूणासु प्रतिहत्यापि द्वारेषु निधायापि पदं बलिशिलासु भक्त्युद्रेकनिगलिता इव कतिचिदस्यामेतस्यामपि देवभाषायामधुनापि न च खलु नैव प्रविविक्षवः प्रविशन्तो वा दृश्यन्त इति तु न पर्याप्तं साधनं लोकोपयोगिसंव्यवहारस्य केवलयुक्तिमात्रसिद्धपरमाणुवत् ॥

अवधत्त सहृदयाः ! निपुणं पश्याम ! क नु खलु श्रुतयः ? क वा स्मृतयः ? कुत्र वा पुराणानि ? क्वचन वेतिहासाः ? क्वचन वा काव्यानि ! कष्टमेव नष्टं खलु सुभाषितम् । अथ वा न सर्वात्मना नष्टम् ॥

सङ्गीते श्रुतिरर्थसंभृतविधौ नित्यं स्मृतिः प्राक्तने
सर्वत्रापि पुराणतेतिहसितेष्वद्धेतिहासोऽपि च ।
काव्ये दैत्यगुरौ तु काव्यमहिमा वाणी च पद्मासने
नो नष्टं निखिलं सुभाषितमपि स्थानान्तरालम्बनात् ॥

न वा अंशतोऽपि नष्टम्? दृश्यते किल सुभाषितं पूर्णमन्यत्र । तथा हि--

श्रुतिस्मृतिपुराणेतिहासकाव्येषु सन्ततम् ।
श्रुतिस्मृतिपुराणेतिहासकाव्यानि जाग्रति ॥

अयि मान्यमहाभागाः! मैवं मनागपि मंसत यत् लेखकस्यास्य कासौ क्रूरता! केयं कठिनता हृदयस्य! कीदृशीयमपरितृप्तिः पूर्णेऽपि कुम्भे! यदयं साहसिको लेखको देवभाषायां पूर्वापेक्षया सर्वालङ्कारभूषणमुपादाय, धृत्वा च सर्वसहृदयमनोहारि ललितललितं रूपं नवीनामिव द्वितीयां सृष्टिं नीतायां मुद्राप्य देशाद्देशान्तरं प्रहित्याटाट्यमानायामेतस्यामेतावतीमसहिष्णुतां प्रकटयति निर्लज्जमिति । तथ्यमेव विचारयामः । बाह्ये पुना रूपे निखिलसरसजनसौकर्यं सम्पाद्य सञ्चरति न कोऽपि विवादगन्धः, प्रत्युत परिबृंहिता तुष्टिरिति मुक्तकण्ठमेव पुनः पुनरुद्घोषयामतमाम् । परन्तु अयं मे महान् विषादः, यावतापि परिष्कृतेन बाह्येन रूपेण सारमिवान्तरं निष्पिष्य वितानितेनेव रीणतत्वेन सम्पाद्यते विजयः, इति । 'जीर्णमङ्गं सुभाषितम्' इति सहसैव द्रावितेन मनसा द्रवता तु कविसार्वभौमस्य चेतनेन तदानीमुभयमपि सम्यगेव दृष्टमदुष्टमेवेति सुतरां प्रतीमश्च, किमिति बहुभण्यते । सु-भा-षि-तं, इति पृथक् शब्दस्वरूपावयवे, प्रत्येकं वर्णस्य शक्तिरिति स्फोटमर्यादया तत्तदंशार्थे च द्वयमपि शब्दार्थयुगलात्मकं सुभाषितमङ्ग एव जीर्णमिति निःशङ्कं वदाम । न हि नैके जनकाः प्रादुष्षन्ति बहवः सुभाषितस्य! न वा पालका अवतरन्ति! विना च जनकमन्तरा च पालकं विरलविरलं तत्र तत्र भूकोणेषु श्वसितीव दीर्घदीर्घं सुभाषितं पालयतां सदयं

सानुशयं सधैर्यं च सर्वैरित्यर्थये मुख्यमर्थं सर्वान् सुहृदः सहृदः ॥

भोः मान्याः ! पुनः पुनरालोचनायां चिन्तयत हन्त हन्त कनुवैतन्निवेदयाम । स्वनग्राहियन्त्रमुखेनापि श्रावितमनुरूपितं पुरुषसूक्तमन्यद्वा सुभाषितं देवभाषायाः फल्गु मन्वानाः श्रुत्वोपहसन्ति बहवः पण्डिता अपि कृतप्रतिष्ठाः, प्रत्युत बुक्कनं वा शुनाम्, रोदनं वा गोमायूनां मङ्गलमिव मञ्जुलं मत्वा तुष्यन्ति चोच्चैः । एवमवस्थां प्रपन्ने सुभाषिते तदेकसंश्रया वयं कुत्र गच्छाम? क नु कथं च वा जीवाम? न खलु मङ्क्षु नङ्क्ष्यन्तीं मातरमरक्षतां श्लाघितं जीवितं नः । तदिहावश्यमवसेयः कश्चिदुपायस्तदुद्धारायेति विदाङ्कुर्वन्तु विद्वांसः ॥

देवभाषासुभाषितोद्धारोपायः ।

आदितः सर्वत्रापि ग्रामेषु नगरेषु च तत्रत्यैस्तत्रत्यैर्देवभाषाबन्धुभिः सन्नद्धकङ्कणैर्व्युत्पन्नानां प्रवचनशीलानां च व्युत्पित्सूनां रुचिमतां च काचन गणनपट्टिका सम्पादनीया । पृथक् पृथग्युगपद्वा यथासौकर्यं बह्वः सभा उद्घाट्य समस्ता अपि लोकोपकाराय सम्पद्यमाना विषयाः शास्त्रीया लौकिका वा ललितां वाग्भङ्गीमङ्गीकृत्य सम्यगुपनिबन्धनीयाः । एवमनुभवे तु माधुर्या एतदीयायाः, अथ को नाम मुञ्चतु ग्रहमेतत्सुभाषिते ? को वा विरज्यतां सन्नपि ज्ञानी? इति विचारयन्तु सन्तः । अथ समवधानपुरःसरं विज्ञाय कार्यमुखेन रोगस्वभावं चिकित्सतो वैद्यवर्यस्येव गतिमवलम्ब्य विरागमन्येषामवगत्य सकारणं तत्परिहाराय प्रयतितव्यम् । अस्यां च देवभाषायां तर्कव्याकरणादिशास्त्रार्थपठने पाठने वा साम्प्रतमाश्रीयमाणा रीतिः कस्य वा नासाम्प्रतं प्रतिभातु सम्पथसञ्चारिणः? तथा

हि पदार्थस्वरूपनिरूपणकाले विहायावच्छिन्नावच्छेदककञ्चुकं शुद्धमेवार्थस्वरूपं न केऽपि प्रतिपादयन्तीत्यहो! कर्कशकर्कशेयं तर्कसरणिः कं वा चेतनं विमुखयितुं नालम् । किञ्च वृथैव व्याख्या-प्रव्याख्या प्रप्रव्याख्यकोलाहलेषु निमज्योन्मज्य चासकृदुत्तिष्ठासूनामेषां कण्ठक्षोभेण परं शिष्टं न स्पष्टमपि हृदयमन्तेवासिनामिति हन्त! हन्त! शोच्यशोच्यः पठनपाठनप्रकारः प्रवेशेऽपि पाश्चात्यानां शिष्यत इति विषीदामस्तमाम् । व्याकरणे च सूत्राणामनुगतमुचितं चार्थं परित्यज्य पदमुत्तमाङ्गं वा छित्वा यथाकथंचिन्निष्पिष्य तेभ्य एव सूत्रेभ्यः स्वेप्सितमर्थं सम्पादयितुकामानां परखण्डनैकदत्तदृष्टीनां व्याख्याकापथेन प्रवेश्य शिष्यानन्धयन्तोऽपि वैयाकरणा नूनमन्धा एव अतः समुत्सृज्य दूरत एव विषमविषमा व्याख्यातॄणां भीषणसरणीः, विज्ञाय च शास्त्राणां परमं तात्पर्यम्, उपलक्ष्य च गन्तव्यं स्थानम्, मन्दं मन्दं नीत्वाभिमुख्यं रुचिशालिनः कार्या बाला व्युत्पित्सवः । परमार्थतः कार्यसारस्य केवलं वर्मैव किमप्येषा भाषेति सामान्यतो निर्विवादम् न हि भवति ग्रहो जनानामपहाय सुगमं मार्गं प्रवेष्टुमन्यत्रेति सर्वानुभवश्च ॥

के. साम्बशिवशास्त्री ।



॥ श्रीः ॥

# ॥ श्रीरामोदन्तः ॥*

---

## बालकाण्डः ।

श्रियं देयात् राम-भूयं प्राप्तो यः स्वः सदा महत् ।
कार्यं निष्पाद्याऽविशत्स्वां सर्वलोकाश्रयां तनुम् ॥

अस्ति कोसलेष्वयोध्या नाम प्रतीतविभवा नगरी । तत्र दशरथो नाम राजराजोपमः कश्चन राजाऽऽसीत् । पाकशासनतेजाः स शासदपि सागरमेखलामिलामन्त्यऋणशोधकस्य सद्य एव दुःखध्वान्तापहस्य सुताख्यस्य ज्योतिषोऽलाभान्नाऽतृप्यत् । अथ गच्छति बहुतिथे काले दूयमानमानसः सभूजानिः करारविन्दनिपातितवदनो निःश्वस्येत्थमचिन्तयत् ॥

सन्ततिर्हि पूतान्वयसम्भवा परत्रेह च भवति सातायः । विशुद्धवृत्तेस्तपोदानादिसम्पन्नस्याऽपि मम तया विहीनस्य कुतस्सुखम्? स खलु भाग्यवान् पञ्चजनः, यस्स्वाङ्कतले शयानमात्मजं सिन्धुरिव कुमुदिनीनायकमसकृद्वदने मन्दहासेन चुम्बति । कदा वा कुसुमिता इव लताः द्रक्ष्याम्यात्मजाङ्काः प्रियाः । कदा च मदङ्क उत्तानशयस्सुतो विलोक्य राकाचन्द्रमसमागच्छागच्छेत्याह्वयन्मामानन्दयिष्यति । कदा च मङ्गलमूर्तिस्सकलजनानन्दको मङ्गलदीप इव भविष्यति मम शोकतमोपहः । कदा च

---

*कथेयं अतिरमणीयया गद्यसरण्या लिखिता वाचकमहोदयानां महान्तं हृदयोल्लासमंकुरयतीति सहृदयया समाद्रियते ॥

स्फटिकमणिमये कुड्ये विलोकयन्निजं प्रतिच्छन्दकं विशङ्कया-ऽपरशिशोस्समाजिघृक्षिष्यति ॥

एतादृशान्विलम्बितफलान्मनोरथानाम्रेडयन्स धरातुराषाट् ऋष्यशृङ्गाख्यो मुनिः पुत्रकामेष्टौ सिद्ध इति स्वपुरोधसो वसिष्ठा-दुपश्रुत्य सद्य एव वारविलासिनीभिस्तं स्वपुरमानाययामास । विज्ञातनृपाशयस्स च कर्मठस्तस्य सुतानुबन्धं कर्म यथाविधि कर्तुमुपाक्रमत ॥

अत्रान्तरे पौलस्त्योपप्लवमसहमाना नान्यच्छरणं भगवन्तं पङ्कजनाभं विनेति निश्चिन्वाना वृन्दारका घर्मातुराः पान्थाः छायावृक्षमिव तमभ्यगमन् । अवाप्य च सुरस्वन्तं योगनिद्राव-साने प्रसन्नावलोकनैस्सौखशायनिकान् भृग्वादीन् पारिकाङ्क्षिणः समनुगृण्हन्तं विलोक्य भगवन्तं लक्ष्मीजानिमर्थ्याभिः स्तुतिभि-रित्थं तुष्टुवुः ॥

ओं नमो भगवते शक्तित्रयेण चराचराणां सृष्टिस्थिति-लयान्वितन्वतेऽविक्रियाय कारणविग्रहाय परस्मै पुंसे तुभ्यम् । हे नारायण! योगिनोऽभ्यासाद्विषयान्तरेभ्यो निवर्तितेन मनसा हृत्कमले ज्योतिःस्वरूपेण विराजमानं त्वां मोक्षार्थं ध्यायन्ति । त्वय्येव चेतो विनिवेश्य सर्वाणि कर्माणि तुभ्यमेव समर्प्य वीतरागाणां त्वमेव हि साधनं विमुक्तये इति ॥

अथ कुशलानुयोगेन व्यञ्जितानुग्रहाय तस्मै त्रिदशा दुष्प्रवेशाद्राक्षसमहारण्यात्साध्वसमित्थमावेदयामासुः ॥

देव! लङ्काधिपती रावणो नाम तपोभिर्बहुभिरब्जयोनिं समाराध्य तदनुग्रहाल्लब्धवर इदानीं समस्तलोकविनाशनायो-त्थितः केतुरिवाऽतीवाऽस्मान्पीडयति । एष पुरन्दरोऽपि तदनु-

प्रह्वाकांक्षी सुरलोकभवानि मन्दारप्रमुखानि प्रसूनानि सप्रश्रयमन्वहमस्मा उपाहरति । किञ्च, दूतमुखाद्विज्ञाततदागमा दिक्पालका यदाऽभवन्कान्दिशीकास्तदारभ्य श्रियोऽपि महाप्रतापं तं सिषेविरे शरणम् । किं बहुना ? समस्तप्राण्यन्तकोऽप्यन्तक एष तदाज्ञाप्रतीक्षः संयोज्य वदने पञ्च शाखमन्वहं तद्द्वारमधितिष्ठति ' इति ॥

एतादृशं निशम्य दिवौकसां समावेदनं वेलासन्नपर्वतरन्ध्रानुनादिना विडम्बितसिन्धुध्वनिना मनोहरेण स्वरेण भगवानवादीत् ॥

हे वृन्दारकाः! मा खलु भूत् भवतां विषादः तत्करस्थं विचार्यताम्, यद्भवद्भिरिदानीमभीप्स्यते । शरणागतानां रक्षार्थकः केवलं हि मम दीक्षापरिग्रहः । स हि मूढो राक्षसोऽवगणय्य मनुष्यान्दैवसृष्टेः परमवध्यत्वं विधातारमयाचिष्ट । सोऽहं पुत्रीयतः पङ्क्तिरथस्य राज्ञो मनोरथं पूरयितुकामो धरातले दाशरथिर्भूत्वाऽतितीक्ष्णैर्बाणैस्तदीयोत्तमाङ्गारविन्दसञ्चयं करोमि पुरा समरभूदेव्याः पूजार्हम् ॥

इत्थं शतमखप्रमुखान्बर्हिर्मुखान्समाश्वास्य नवाम्बुदाभस्स भगवान्सद्य एवान्तरधात् । वृन्दारकाश्च धरातले निजकार्योद्यतस्य नारायणस्य साहाय्यकरणाय गुरुमिवाऽन्तेवासिनस्सुग्रीवादिरूपेण तमन्वयासिषुः । अथ तस्य धरावलरिपोः काम्यकर्मावसाने स्वर्णभाजनगतं पयश्चरुं परमपुरुषस्याधिष्ठानात्स्वेनापि दुर्वहं पाणौ कृत्य ऋत्विजो विस्मापयमानः कोऽपि तेजस्वी पुरुषः पावकात्प्रादुरासीत् ॥

प्राजापत्यप्रापितं चरुसंज्ञितं तद्वैष्णवं तेजः सुधामिव सुराधिपो धराधिपोऽत्यानन्दभरितः सप्रश्रयं प्रत्यगृह्णात् । को वावमन्यत आगतमनर्घं दुर्लभं रत्नम् ? अनेनैव कथिता भवन्ति तस्य महाराजस्यानितरसाधारणा गुणाः । यतोऽचीकमत तस्मिन्कुक्षिस्थाखिललोकोऽपि नारायणः प्रसूतिम् । कौसल्या मान्या कैकेयी प्रियेति च तयोरेव तदन्नं प्रथमतः क्षोणीपतिर्व्यभजत् । विदितनृपाशये ते अपि स्वभगिनीं सुमित्रां स्वार्धांशाभ्यामयोजयताम् । क्रमेण महिष्यः परिणतशरकाण्डापाण्डुरेण मुखकान्तिमण्डलेनाखण्डचन्द्रमिव दिशा माघवनी निजोदरेऽर्भकाकृतेः परिणाममभ्यदधुः । समीरणान्दोलिततरङ्गमालागतः प्रतिमाचन्द्र इवैकको ऽप्याश्रितवत्सलस्स परमपुरुषस्तासां गर्भे बहुधा व्यरुचत् । अथ शुभे मुहूर्ते राज्ञोऽग्र्यमहिषी कौसल्या लोकाभिरामं श्रीरामं कैकेयी पूर्वजनिदेशनिरतं भरतं सुमित्रा सलक्ष्मणं निखिलशत्रुघ्नं शत्रुघ्नं च प्रासोषत । तदा दिशः सर्वाः प्रसेदुः । रूपाजीवाश्च सनर्तनं जगुः । सुखश्रवा मङ्गलवाद्यध्वनयोऽपि विजजृम्भिरे । पपात च नभसः प्रसूनवृष्टिः ॥

इत्थं सर्वमेव शुभशंसकं बभूव । क्रमात्पुरोधसा वसिष्ठेन कृतसंस्कारास्ते कुमाराः साङ्गान्वेदानध्यैषत । तेषां सहजातं विनीतत्वं हुताशानां तेजो हविषेव शिक्षयावर्धत । सौशील्यसौभ्रात्रादिगुणजुष्टास्ते परिपूतं स्वकुलं मन्दारादय इव द्युलोकममलमलसकार्षुः । तुल्येऽपि तेषां सौभ्रात्रे वातोऽग्निमिव रामं लक्ष्मणः शत्रुघ्नश्च भरतं प्रीत्या समन्वगाताम् ॥

कुमारा विनयादिभिर्गुणैर्विनीताः शिष्या गुरुमिव गुरुमा

नन्दयामासुः। अन्वहमुदयमासादयद्भिस्तैः समं सन्तोषोऽपि राज्ञः समैधिष्ट ॥

अथ विश्वामित्रो नाम ब्रह्मर्षिर्मारीचादिभी रक्षोभिरभ्याहतनिजयागकृत्यस्तत्परिरक्षायै रामं वरीतुकामो दशरथमभ्यागात्। महाराजोऽपि मधुपर्कपाणिः सप्रश्रयं समर्च्य मुनिं तन्निदेशेनोपविष्टः सादरमभ्यधात् 'भगवन्! अपि कुशलं समाधेः? अवलोकनात्तत्र भवतः कारणमिव कार्यान्मम पूर्वसुकृतमनुमीयते। सफला मदीया जन्मवत्ता। यद्दुरासदः पुण्यस्वरूपो भवान्मम लोचनगोचरी भवति। तत्कथय प्रार्थयमानाय मह्यं यदर्थमागमनमत्र भगवतः। करिष्याम्यनुगृहीतः सद्य एव' इति॥

हृष्टरोमा मुनिर्ध्यानस्य माङ्गल्यमभिधाय राजन्! वने नः सप्ततन्तून्मारीचादयो रक्षोगणा विघ्नन्ति। तत्कृते परन्तपं रामं सत्वरमनुजानीहि इत्याख्यत्। समाकर्ण्य मुनिवाक्यं 'यदि नानुसरेयं महर्षेर्निदेशं क्रुध्यन् विप्रवह्निर्मदन्ववायं दहेत्। यदि चानुजानीयां तदनुगमनाय रामं यास्यन्स सशोकं मामतीव सन्तापयेत्। किं करोमि, इति दोलायमानस्वान्तोऽसहिष्णुश्च सुतविप्रयोगं नृपो मुमोह ॥

अथ कृच्छ्राल्लब्धसंज्ञं प्रभो! ऊनषोडशवर्षः सलक्ष्मण एष बालो रामः किं कर्तुं शक्नुयात्? कियत्यस्य समरार्हता? शत्रुश्च बलीयान्। कृच्छ्रलब्धं कुमारं नैव दास्यामीति वदन्तं नृपं क्रोधारुणमुखः कौशिकः प्रत्युज्जगार 'राजन्! न युक्तमिदं राघवाणां यत् प्रतिश्रुत्याऽकरणम्। मिथ्या प्रतिश्रवस्त्वं सुहृद्भूतः सुखी भव' इति। तदनु गाधिसूनुं रोषपरीतं विलोक्य मह-

र्षिर्वसिष्ठः राजन्! प्रतिज्ञाय वचनमकुर्वतो हि स्यादिष्टापूर्तवधः। मा कृथाः शङ्कां रामस्य युद्धायोग्यतायाम्। न हन्ति किं कण्ठीरवपोतो मदमत्तान् वेतण्डान्? साध्यते हि सर्वं कर्म पराक्रमेण। कृतास्त्रो भवतु न वा रामः। जातवेदसामृतमिव गाधिसूनुना गुप्तमेनं न कोऽपि शक्नोति प्रधर्षयितुं समरे। प्रहिणु कुमारं सत्वरमेवेत्यभ्यधात्॥

अथ वसिष्ठवचनात्संजातविस्रम्भो भूमिपतिः महर्षे! क्षम्यतां मदीयः स दोषः शिष्यस्येव। न कदाचिदपि विफला भवेत् प्राणप्रणयिनामप्यर्थना रघुकुले। अतः सलक्ष्मणं रामचन्द्रं भवत्करे लोहभाजने सम्पदमिव लोको निक्षिप्य निर्भीकोऽस्मीदानीम्। पृष्ठगौ क्रियेतां कुमाराविल्यगादीत्॥

अथ कृतस्वस्त्ययनो लक्ष्मणानुचरो रामः प्रणम्य पितरौ ताभ्यां प्रयुक्ताशीः कौशिकमन्वयासीत्। तदा वादकाः कलनिनादं मङ्गलवाद्यान्याजघ्नुः। पक्षिणश्चाऽनूकूलरवेण तस्य कल्याणं शशंसुः। बाहुश्च दक्षिणः सीताप्राप्तिफलशंसी पुस्फोर॥

अथ पथि राक्षसान् जिघांसुना गाधिसूनुनाध्यापितबलातिबलाख्यमन्त्रौ तौ वनसञ्चारिणावपि तदुपदिष्टविद्याप्रभावान्निजमातृसमीपवर्तिनाविव नैव मम्लतुः। शैशवाच्चपलापि तयोर्गतिरस्फुटार्भकवाणी पितरमिव मुनिमानन्दयन्त्यतीव चकाशे॥

क्रमेण चातिक्रम्य सरयूमार्गेण त्र्यम्बकनिटिलाम्बकदग्धस्य मदनस्य तपोवनं मलदकरूशाख्यदेशविशेषपरिसरं प्राप्तयो राघवयोर्गाधेयः सुन्दभार्याया अभिधाय वृत्तान्तं पुरुषादिनीयं हन्तव्या त्वयेति राघवमादिक्षत्। निरास्थच्च पाकशासननिहतां

वैरोचनीं भार्गवेण कृत्तशीर्षां रेणुकां च दृष्टान्ततया निर्दिश्य तस्य वधूवधविचिकित्साम् ॥

तदनु सुकेतुसुतां ताटकां मुनिनिदेशाद्धन्तुकामो रामो निजधनुर्हुंकृतिभिस्तद्वनं बधिरीचकार। बहुलतमी कान्तिः सा भीतभीता सहसैव सह कौणपसार्वभौमवीरलक्ष्म्या व्यकम्पत। तथापि प्रेरितेव स्वसाहसेन प्रादुर्भूय रामान्तिके पप्रच्छ 'अयि सुकुमाराकृते! कस्त्वं? कं समलङ्करोषि वंशम्? कोऽन्यस्तव पार्श्ववर्ती? किंनिमित्तं वा विजनेऽस्मिन्प्रदेशे धनुष्पाणिः समागतः? अहो! त्वदन्यः कोऽपि मया दृष्टो नैतावन्तं कालं प्राणीत्' इति ॥

निशम्यैतद्दाशरथिर्विहसन् दुर्भगे! किमनया जिज्ञासया? नैव स्यान्मादृशानां निष्फले कर्मणि प्रवृत्तिरेतादृशी। अवेहि मां साधुजनोपद्रवकारिण्यास्तव निधनाय समागतं कृतान्तमेव। 'न हन्यादबलां वीरः' इति सन्दिहानः कालमेतावन्तमवलम्ब औदासीन्यम्। नासामर्थ्येन साध्वसेन वा। पश्येदानीमिति प्रलयरुद्र इव प्रकुप्यन्बाहुयष्टिमुद्यम्य स्ववधायाऽऽयतीं विलोक्य तां सहसैव सह पत्रिणा स्त्रीवधलज्जाममुञ्चत्। साऽपि सद्य एव कृतान्तनिशान्तागन्तुर्बभूव ॥

अथ दाशरथिः सुन्दवधूवधसन्तुष्टेन गाधिजेन विश्राणितं भृशाश्वोपज्ञं जृम्भकाद्यस्त्रमन्त्रजातं परया भक्त्याग्रहीत्। तच्च रामसंसर्गात्समीरसख इव समीर योगादतीवादीपिष्ट। क्रमेण चातिक्रम्य पावनं वामनाश्रमं गाधिनन्दनस्य तपोवनमासाद्य तत्रातिथ्यचणैर्महर्षिभिः कृतामर्हणां राजपुत्रौ प्रत्यगृह्णाताम् ॥

तदनु राघवाज्ञया तपोधना यज्ञियैर्द्रव्यैर्यागक्रियां प्रास्तु-

वन् । विज्ञातक्रतुकृत्यारम्भा यातुधाना मारीचादयो रक्तकसुम-स्थूलैरक्तबिन्दुभिर्वेदिमुपाघ्नन् । अथ वेदिरुधिरसमुक्षितां वीक्ष्य संभ्रान्ता याज्ञिकाः श्रीरामं प्रापुः । वीराग्रगण्यो दाशरथिर्निर्भीक एव प्रावृषेण्यपयोवाहाकारान् मूर्तिमतोऽन्तराय सञ्चयानिव भास-मानान् रात्रिञ्चरान् दृष्टिगोचरीकुर्वन् तत्र प्रधानं ताटकेय मवादीत् । दुर्मते! क्षपाट! साम्प्रतमसाम्प्रतमेष ते यत्नः । किमर्थं कन्दमूलफलाशिनः स्थण्डिलशायिनः साधून्पीडयसि? बुद्धिहीना वनजाता अपि हिंस्रकायान्न द्विषन्ति किं नोदेति परम-साधुषु तेषु ते दया? जहाहीमां विपरीतां बुद्धिम् । किमर्थं गवे षयसि यमसदनमार्गम्? सद्य एव विरम दुष्कृत्यादस्मात्' इति ॥ एतादृशमवगणय्य निजवचनं अयि! मास जात! सत्सु लोके धर्मवादनिरतेषु बहुषु किं सर्वज्ञ इव प्रलपसि? धर्म एव राक्ष-सानां प्राणिहिंसनम् । नास्त्यधिकारोऽस्माकं वेदवृत्ते । यदि ने-च्छसि प्रेतराजसदनस्यागन्तुकत्वं पलाय्यतां सत्वरमेवेति क्र-व्यादेऽतिगभीरं वदति क्रोधाक्रान्तस्वान्तो रघुनन्दनः कृष्णसर्प इव निःश्वसन् सद्य एव शैलगुरुमपि तं क्षपाविहारं परिणतप-त्रमिव मानवास्त्रेण समुद्रे पातयित्वा तत्र तत्र मायया विसर्पन्तं क्रूरं सुबाहुनामानं राक्षसञ्चाऽग्नेयास्त्रेण खण्डशो विधायाश्रमाद्बहिः पतगेभ्यो व्यभजत् ॥

अथ क्रमाद्यज्ञकर्मणि विहितेऽस्मिन् मुनिभिः स्तूयमानो राघवो नितरां व्यरुचत् । तदनु सम्भृतक्रतुना विदेहनाथेन निमन्त्रितो विश्वामित्रः शिवधनुःश्रवणसंजातकुतूहलाभ्यां साकं राघवाभ्यां मिथिलां प्रति प्रतस्थे ॥ (क्रमशः ।)

॥ श्रीः ॥

# ॥ कुम्भाभिषेकचम्पूः ॥



एकत्रोत्पलकङ्कणाङ्गदमणीमञ्जीरताटङ्ककै-
रर्धोद्भासिकिरीटहाररशनाक्षौमाङ्गरागादिभिः ।
अन्यत्रोरगशूलकृत्तिभसितास्थिक्षामवक्षोरुहै-
रत्याश्चर्यतनुस्तनोतु सततं वः शंकरः संपदः ॥ १ ॥

शिरसि निहितगङ्गालोकनाज्जातमाना-
मरुणनलिनकान्तिच्छेददक्षायताक्षीम् ।
अनुनयनवचोभिर्नन्दयन्नद्रिजाता-
मवतु करुणया नश्चारुचन्द्रार्धमौलिः ॥ २ ॥

स्वर्लोकादवतीर्य मानवगणश्रेयस्करात्कारणा-
त्प्रायान्मण्डनमिश्रगेहमनघं या भारतीसंज्ञया ।
पत्यौ वादविनिर्जिते सति गुरोर्मार्गं प्रपद्यादरा-
च्छृङ्गेर्यां पुरि नित्यवासरसिका सा शारदा पातु नः ॥ ३ ॥

अद्वैतमीश्वरोक्तं
श्रुत्वाथ मुहुर्विमर्शयितुम् ।
शृङ्गेरीमठमाश्रित-
मीडे श्रीरत्नगर्भगणनाथम् ॥ ४ ॥

अद्वैतभाष्यमनुगृह्य दयामयेन
येनास्मदान्तरतमः परिभूय भूयः ।

मार्गे प्रयातुमनघं नयनं वितीर्णं
तस्मै नमोऽस्तु गुरवे गुरवे गुरूणाम् ॥ ५ ॥

श्रीकृष्णक्षितिपालसंनिधिमहाविद्वान्विधेयः सतां
चित्तस्थापितचन्द्रचूडचरणः श्रीरामनामा कविः ।
साक्षाद्दर्शनहर्षविस्मितमतिर्व्यक्तीकरोत्यादरा-
च्छृङ्गेरीनगरे जगद्गुरुकृतं कुम्भाभिषेकोत्सवम् ॥ ६ ॥

क्व तादृशमहोत्सवः क्व नु ममातिमन्दा मति-
स्तथापि जगतीगुरोश्चरणभक्तिरास्ते मयि ।
तदाश्रयबलादहं तदभिवर्णने शक्नुयां
समुद्रमपि तारयेदधिगता यदि स्यात्तरिः ॥ ७ ॥

श्रीमच्छंकरदेशिकेन्द्रविहितां पीठीमलंकुर्वतः
श्रीमद्भूगुरुचन्द्रशेखरगुरोः पादस्तवायोद्यतम् ।
वर्ण्योत्कर्षविभावनान्मम परानन्दावलीढं मनः
साहित्योपनिषद्रहस्यसमुपन्यासाय संनह्यति ॥ ८ ॥

अस्ति कर्णाटदेशोऽयं स्वस्तिदः सर्वदेहिनाम् ।
यस्ततारोग्यभाक्सह्यमस्तके संनिवेशितः ॥ ९ ॥

यत्र खलु,

एलालतालिङ्गितगन्धवृक्षैः
पूगद्रुमैर्नागलतोपगूढैः ।
मरीचिकालम्बितमातुलुङ्गै-
राराममाला नयनाभिरामाः ॥ १० ॥

कावेरीकपिलातुङ्गभद्राद्याश्च सरिद्वराः ।
भुक्तिमुक्तिप्रदाः पुण्या यत्र लोकान्पुनन्त्यहो ॥ ११ ॥

संपत्कुमारश्रीकण्ठप्रमुखा यत्र देवताः ।
स्वस्वक्षेत्रेषु पुण्येषु सांनिध्यं कुर्वते सदा ॥ १२ ॥

वर्णाश्रमाचाररता वसन्ति
यत्रार्धकोटेरधिकाश्च लोकाः ।
वेदेषु शास्त्रेषु च यत्र दक्षा
विभान्त्यनेके विबुधाः प्रसिद्धाः ॥ १३ ॥

ग्रामैः श्रोत्रियसात्कृतैर्नृपवरैरात्रेयगोत्रोद्भवैः
सत्रैस्तत्परिकल्पितैः प्रतिपथं यो मूर्तधर्मायते ।
नादेयाम्बुपवित्रितैर्नवनवैर्हृद्यैस्तटाकैर्वृते
यस्मिन्भान्ति फलोन्मुखानि सततं शस्यानि सस्यान्यपि ॥

ग्रामे ग्रामे सुरचितपथैस्तत्र तत्र प्रदीपै-
र्द्वेधा जाड्यप्रशमनपरैर्वैद्यशालैर्विशालैः ।
न्यायस्थानैर्नवनवकृतैर्वारियन्त्रैर्विचित्रै-
र्नित्यं स्तुत्यं निरवधिसुखं यत्प्रजाः प्राप्नुवन्ति ॥ १५ ॥

यः श्रीकृष्णनृपालपालनवशात्प्रायो नदीमातृको
विद्युच्छक्त्युदयैः सुधूमशकटैर्वृत्तान्ततन्त्रीगृहैः ।
पत्रप्रापणमन्दिरैश्च विविधैः प्राज्यैः सुवर्णाकरै-
र्वाणिज्यैः कृषिभिर्धनाधिपतिभिः सद्धार्मिकैः शोभते ॥

कण्वाश्रमे महत्या कावेरीसेतुबन्धनक्रियया ।
यत्प्रभुसचिवौ कुरुतः सर्वान्विन्ध्यान्विजित्य सौराज्यम् ॥ १७ ॥

तस्मिन्देशे स्वगुणविभवैः सर्वदेशावतंसे
श‍ृङ्गेरीति प्रथितमनघं पत्तनं प्रत्नमिन्द्धे ।
यस्मिन्पूर्वं भुवनविदितः शंकराचार्यवर्यः
पुण्यं क्षेत्रं तपस इति संचिन्त्य यत्नादवात्सीत् ॥ १८ ॥

अपि च,

वैभाण्डकिः प्राक्स्वयमृश्यश‍ृङ्गः
स्वारिम्ञ्शिवैक्यं शिवमर्थयित्वा ।
सत्त्वप्रधाने यदुपान्तभागे
निवासमेवाश्रयते न मुक्तिम् ॥ १९ ॥

समन्ततो यस्य विभण्डकर्षेः
प्रसादतो द्वादश योजनानि ।
सदातनैः पुष्पफलैः समेता-
न्यरण्यबृन्दानि समृद्धिभाञ्जि ॥ २० ॥

दृष्टिप्रचारे सति दृश्यमान-
मरण्यमासेचनकं समन्तात् ।
यत्र स्थितानां यतनं विनापि
प्रसन्नमन्तःकरणं करोति ॥ २१ ॥

तुङ्गासरित्तुङ्गतरङ्गमाला-
तरङ्गिते यत्र चिरं वसन्तः ।
अद्वैततत्त्वं परिबोध्य लोका-
नाचार्यपादा बहवोऽन्वगृह्णन् ॥ २२ ॥

दिव्याम्भोभिर्दिवसमखिलं दीर्घधारं पतद्भिः
कुल्यातुल्यां दधति च दशां यत्र निम्नाः प्रदेशाः ।

बीजावापः कणिशलवनं कर्षणं चेति यस्मि-
न्कृष्यारम्भः सुलभसुलभः कर्षकाणां त्रिधाभूत् ॥ २३ ॥

इयं खलु सकलनराधिपसमभ्यर्चितधरागुरुसमाश्रयनिराकृतपराश्रया स्वस्वधर्मनिरतसमृद्धिमत्पुरजनपरिपूरितगृहमालिकया चराचरविधायकपरापरवस्तुपरिशोभितं शृङ्गगिरिशिखरं परीत्य वर्तमाना दक्षिणपूर्वोत्तरवाहिनीरूपेण परिसरपरिसरदुत्तुङ्गतरङ्गसंगततुङ्गानदीपरिवृतप्रान्तप्ररूढनानानोकहनिवहकोमलकुसुमराजिरजःपातसुरभीकृतसकलप्रदेशा विशाले विशुद्धे च दाक्षिणे महति चत्वरे विविधशिल्पविचित्रितविद्याशंकरदेवतायतनमुत्तरेण पुरस्कृत्य शारदायतनमुत्तरतः प्रकाशमानेन वेदघोषमुखरीकृतेन वेदान्तविद्याविहारभवनेन भुवनेश्वरीकक्ष्यासंनिहितकक्ष्यान्तरसमभ्यर्च्यमाना, चन्द्रमौलिरत्नगर्भगणपतिप्रमुखदेवतादर्शनोत्सुकनिरीक्षकजनसमीक्ष्यमाणकक्ष्यान्तरपरिशोभितेन परमहंसपरिव्राजकाचार्यपरम्परानिरन्तराधिष्ठितेन च महता मठेन परिशोभिता, मठोत्तरद्वारमारभ्य दक्षिणादुत्तरतः प्रसृतया दीर्घदीर्घया चागण्यपुण्यपरिपूरितापणगणपरिष्क्रियमाणया विपणिवीथिकया विराजमाना, श्रुतिरवमुखरितपटुतरवटुजनसमवबोधनोचितश्रौतस्मार्तविधिविचारणतत्परपवित्राग्निहोत्रिजनपरिष्क्रियमाणगृहवेदिकासनाथा, सायंप्रातः शारदादर्शनकुतूहलात्ससंभ्रमभ्रमत्पुरपुरंध्रीपदपङ्कजलग्नमञ्जुमञ्जीरशिञ्जितारावपरिपूरितनभोविभागा, माध्यन्दिनपूजासमयसमाहन्यमानभेरीशङ्खपणवानकढक्कातूर्यवीणावेणुमृदङ्गादिविविधवाद्यघोषनिरन्तरीकृतनिखिलदिगन्तरा, कलिराजशासनवशंवदतया निर्निरोधप्रवृत्तपशुहिंसापरद्रोहादिक्रूरकृत्यभाजनानि प-

राणि पुराणि निरीक्ष्य त्रस्यन्ती कलेर्दृष्टिपथादात्मानं गोपयितुं क्वचिदरण्यभागे निलीय निर्भयं निवसन्तीव विभाव्यमाना, वाराणसीप्रयागकाञ्चीप्रमुखमहापुरीभिरजय्यतां प्रदर्शयितुमिव वनदुर्गनदीदुर्गगिरिदुर्गमध्यमध्यासीना, राकेव सकलकलापरिपूर्णद्विजराजमण्डलविराजिता, नदीपुलिनमिव परमहंसपरिशोभिता, सशालापि विशाला, सचित्रापि विचित्रा, शृङ्गेरीपदाभिधाना च विजयते श्रीगुरुराजधानी ॥ २४ ॥

अस्यां खलु,

तर्कोदर्कमुदञ्चयन्स्ववचसा मीमांसकान्मोदय-
न्प्राप्तं व्याकृतिशास्त्रवादकलहं माध्यस्थ्यतो मन्दयन् ।
वेदान्ते विहरन्नलंकृतिविदः सद्यः समुल्लासय-
ञ्शास्ता राजति चन्द्रशेखरगुरुः सर्वज्ञतां दर्शयन् ॥२५॥

उभयतो भयतो रहिताश्च ते
भुवि नता विनतासुतकेतनम् ।
सकलया कलया परिमण्डितं
भजनतो जनतोषकरं च तम् ॥ २६ ॥

यद्वाग्झरीनवनवोदितयुक्तिवीची-
कोलाहलैर्वहति चेद्बुधपान्थवर्गः ।
आलम्ब्य मौनतरुमाः स्मरति स्वकार्था-
स्तं चन्द्रशेखरगुरुं प्रणतोऽस्मि नित्यम् ॥ २७ ॥

मुखमाहुरहो शिवंकरं
कर एवास्य तु कर्णतां गतः ।

स्वगतामिव वारयन्भिदां
स्वयमास्ते गुरुपादतां गतः ॥ २८ ॥

अरुणो द्विजराट् सुमङ्गलः
स बुधश्चापि गुरुः कविस्तथा ।
गजमन्दगतिः सदुत्तमो
ध्वजतामेति यतिर्द्विजान्वये ॥ २९ ॥

मूर्तिः कीर्त्तिरिति प्रथामुपगते ये द्वे विशुद्धे तनू
श्लाघ्ये ते भुवि चन्द्रशेखरगुरोः सर्वैर्बुधैः सर्वदा ।
आद्यां शोषयते तपोभिरितरां तैरेव पुष्णात्यसौ
तद्देहप्रियतास्ति वास्य तु न वा तत्त्वं न जानीमहे ॥

स एव चन्द्रशेखरभारतीगुरुः परमे तपसि वर्तमानोऽपि सर्वामपि रात्रिमन्तरेवातिविशुद्धमद्वैतमात्मतत्त्वमनुसंदधानः, लोकमर्यादानुपालनार्थं सर्वानपि शिष्यसमूहान्समोहाननुगृह्णानः, त्रिषवणस्नानपरिपूतमात्मीयमात्मानं भस्मरुद्राक्षधारणेन परिपावयमानः, दैनन्दिनप्रणवजपेन प्रतिदिनमखण्डवेदावर्तनेन शारदाचन्द्रमौलिरत्नगर्भगणपतिश्रीचक्रप्रमुखदेवताचक्रसमभ्यर्चनेन प्रदक्षिणप्रक्रमादिना च तत्तत्समयं सफलीकुर्वाणः, अननध्यायेषु दिवसेषु गीतोपनिषत्सूत्रभाष्याणि तर्कव्याकृतिमीमांसाश्च स्वयमेव पटुतरवटुजनान्पाठयमानः, कदाचिदाचार्यगौरवादास्थानदिदृक्षया समागतान्पण्डितप्रवरान् तत्तच्छास्त्रविचारणेन समानन्द्य संभावयमानः, कदाचिदभ्यागतान्महाजनान्परिशील्य मृष्टान्नपङ्क्तिनियमनेन प्रमोदयमानः, कदाचित्पाकशालाधिकृतनिवेद्यमानमाध्यन्दिनमहासमाराधनसामरस्यमनुमोदमानः, कदाचिद्देहधारणमात्रोचितां

प्रसृतिमात्रां भिक्षामाददानः, कदाचिदायव्ययलेखकजननिवद्यमो-नानि निवेदितव्यानि सावधानमाकर्णयमानः, कदाचिन्नानादिग-न्तरागतानि धर्मशास्त्रानुसारेण व्यवस्थापनीयानि विषयान्तराणि विद्वद्भिः सह विवेचयमानः, कदाचिदास्थानाधिपतिभिरालिखिता-नि विज्ञापनाक्षराणि प्रतिलेखनानि च मठाधिकृतेन मुख्याधि-कारिणा सह संमन्त्रयमाणः कदाचिच्छ्रिङ्गगिरिशिखरमारुह्य तद-धिवसन्तं भगवन्तमुमाकान्तमभिवन्दमानः, कदाचिन्निजमठदक्षिण-द्वारादवतरणपथेन तुङ्गामवतीर्य चिरात् प्रतिदिनप्रदीयमान-मठान्नपरिपोषितानां कच्छतलोच्चरन्मत्स्यकच्छपादिजलजन्तूनां पत-नोत्पतनसमारम्भमालोकयमानः, कदाचित्तुङ्गासरिद्दक्षिणरोधःपरि-कल्पितनरसिंहवनीपुष्पवाटीमवगाह्य तत्र निजगुरुश्रीसच्चिदानन्द-शिवाभिनवनृसिंहभारतीस्वामिभिरध्युषितपूर्वाणि सौधपदानि शि-लातलानि तरुमूलानि च दर्शं दर्शमश्रुपूर्णाभ्यां नयनाभ्यां निःश्वस्य परितः परिजनमुखानि प्रेक्षमाणः, कदाचित्सायंतनसमयमन्दमन्द-स्पन्दमानगन्धवहान्दोलिततरुशिखरासु मनोहरासु समीपवनराजिषु शिष्यैः सह पादाभ्यामेव संचरमाणः, काव्यालंकारनाटकनाटिकाप्र-हेलिकाक्षरच्युतकमात्राच्युतकबिन्दुच्युतकच्युतदत्ताक्षरप्रमुखकाव्य-कलापेषु भारतभागवतादिपुराणेतिहासादिषु च सरसपावनैः संलापैः समयमतिवाहयमानः, वन्दारुजनमन्दारः सकलजनानन्दमापाद-यन्विजयतेतराम् ॥ ३१ ॥

संकल्पितुं प्राग्गुरुणैव देव्याः
कुम्भाभिषेकं हृदि चिन्तयन्सः ।

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ९. ] नलवर्ष श्रावणमासः । [ संचि. ५.

## सुभाषितानि ॥

अभिनवनलिनीविनोदलुब्धो
  मुकुलितकैरविणीवियोगभीरुः ।
भ्रमति मधुकरोऽयमन्तराले
  श्रयति न पङ्कजिनीं कुमुद्वतीं वा ॥ १ ॥

आनम्राः स्तबकभरेण पल्लविन्यः
  शोभन्ते कति न लताः परागपूर्णाः ।
आमोदे मधुनि च मार्दवे च तासां
  यो भेदः स खलु मधुव्रतैकवेद्यः ॥ २ ॥

निःशङ्कं गजपतिगण्डदानधारा-
  माराध्य भ्रमर दिनान्यमून्यनैषीः ।
यावन्न स्फुरति करालकर्णताल-
  स्तावत्त्वं नय नलिनीवनीमुपेत्य ॥ ३ ॥

॥ श्रीः ॥

# ॥ भारतीयानां करुणाशालित्वं तत्कारणं च ॥

———*———

भरतखण्डमिदमावासस्थानं प्रभञ्जनातिवृष्टीनाम्, कुलगृहं शीतज्वरमहामारीदुर्भिक्षाणाम्, उद्गमस्थलं मन्त्रतन्त्रगृहबलकृत्यादिवशीकरणविद्यानाम्, रङ्गस्थानं व्याघ्रभल्लूकदन्दशूकशूककीटानामुपद्रवस्य; इति कदाचन दूरदेशीयानां परकीयानां भावनासीत्। परं तु गतशताब्द्यां पाश्चात्यविपश्चितः इतिहासज्ञाश्च परिशोध्य एवं किल निश्चिक्युः—तर्कवेदान्तगणितज्योतिषकाव्यनाटककलाकौशल्यादिसकलविद्यानामुपस्थानं भूमण्डले विद्यते चेत् तत् हिन्दुस्थानमेव। अथापि भरतखण्डं सकलजीवजन्तूनां प्राणरक्षणस्य शरण्यस्थानमिति विज्ञातवन्तो विदेशीयाः विरलतराः। निर्जलाया महाटव्या मध्ये कासारेण कमनीये उद्यान इव प्राणिहिंसा प्राणिपीडनपिशिताशनादिघोरकर्माणि इतरजनपदेषु यथेच्छं प्रचलन्त्यपि भरतवसुधायां सकलप्राणिनः भीतिराहित्यमुररीकृत्य आजठरपरिपूर्तिघासं जग्ध्वा स्वच्छन्दं विहरन्ति। आसुरकुलनाशादूर्ध्वं भरतभूमौ प्राणिहिंसा परपीडनादिघोरकर्मणां न किल पतिता च्छायापि। कुत्रापि प्रविश्य पश्यन्तु भरतवसुमत्यां बाध्यन्ते पशुपक्ष्यादिजन्तवो मानवैः, इति वार्तापि भवतां कर्णपथं नोपगच्छति। अहिंसैव महान् धर्मः, धेनुरस्माकं माता, केदारादिषु परिश्राम्यन्तो वृषभाः अस्माकं नन्दिदेवतास्थानमर्हन्ति। इतरप्राणिभिः साकं कथमस्माभिः दयापरतां समुह्य प्रचलनीयम्? नीतिरियमार्यैः गृहीतैव। तेषां वंशजानामस्माकं कृत्वा शासनं

कोइ 'पशून् हन्तुं यद्यभिलष्यन्ति भवन्तः युगपन्मरणं यथा अधिगच्छन्ति ते तथा हन्तव्याः; नियुज्यमानाः पशवः न हि कठोरतया चालनीयाः' इत्याध्यापनं राजकीयानां किंचिच्चमत्कार मेव जनयति। चक्षुर्विस्फार्याप्यपश्यतां सुरां मितमदिरापानोपदेश इव उपरितनशासनमप्यनपेक्षितमेव। देवताराधनादिधार्मिकोत्सवेष्वपि मदिरारसास्वादनं मुक्तद्वारमाचरितवन्तः। अत एव तेषु मितमद्यसेवनस्य महती स्यात्। अहरहः हत्वा पशून् भक्षयति जनसमुदाये 'यावच्छक्यं यातनामन्तरा हन्तव्याः पशवः, इदमेव पुण्यकरं इत्येतज्ज्ञानोदयः नाधिकचमत्कारमापादयति॥

सावहिति पशूनां रक्षणं विधाय; प्रेमातिशयेन तानवलोक्य सौम्यरीत्या तैः कार्यं (केदारादिषु) कारयन्तोऽपि वयं तेषां पुण्यमेव उपभुञ्ज्महे इत्येव भावयामः किल? निर्जीवियन्त्राणीव प्राणिनो भावनारहिताः इति न खल्वस्माकं मतम्। सुखदुःखादीनां ज्ञानं प्रेमादरस्मारकमन्तःकरणं पशुषु वर्तत इत्यस्माकमुद्घोषयन्ति शास्त्राणि। आत्मरक्षणतोऽपि मूकप्राणिसंरक्षणं पुण्यकरमिति अस्माभिः प्रतीतं वचनं न खल्वद्यतनम्। शिबिचक्रवर्ती क्षुद्रतमस्य एकस्य कपोतपक्षिणः प्राणरक्षणकृते स्वजीवितं दातुं सन्नद्धः। दिलीपभूपः एकधेनोः कृते एकातपत्रे जगतः प्रभुत्वे तुलसीपत्रं विन्यस्य आत्मीयं नूतनतारुण्यतरङ्गितं कान्तं वपुः कण्ठीरवाय आमिषस्य पिण्डमिव उपानेतुं न खलु भयमङ्गीचकार। सर्वमेतत्परोपकारबुद्धेरतिरेकतां समाश्रयतीति इतरे भणंतु नाम। ईदृशाः उदात्तविचाराः नास्मासु सुदृढं प्रतिबिम्बिताश्चेत 'नष्टा शंका हरिणशिशवो मन्दमन्दं चरन्ति, इति कविरभिमान-

पूर्वकं न खलु गायति स्म। परम् 'परदुःखं शीतलम्' इत्येष स्वभावसिद्धो दुर्गुणः दावानल इव प्रसृतः। अनेके पशुपक्षिणां दुःखं न हि गणयांचक्रुः। अनेके तानत्युग्रं पीडयन्ति स्म। ईदृशां जनानां मनःफलके परोपकारबुद्धेः उच्चतमनीतितत्त्वानां सुदृढोत्कीर्णनमन्तरा न खलु गत्यन्तरम्। अयमत्यद्भुतः समाजोन्नतेश्चमत्कारः राजदण्डनभयादस्मासु प्रविष्ट इति वक्तुं न खलु शक्यते। विपुलराजशासनादपि मुष्टिमेयं सुनीतिमयं गृहशिक्षणं वरं न भवति? भक्तिप्रेमदयादीन् अन्तःकरणं प्रसन्नीकुर्वतो गुणान् बलात्कारेण समुत्पादयितुं राज्ञः प्र-प्रपितामहोऽपि न किल शक्नोति। सदयान्तःकरणस्य उगमः समुत्पद्य तस्य सललितप्रवाहः इतररुक्षप्रदेशान् आर्द्रीकर्तुं समर्थो भवेत्। ईदृशप्रवाहस्योगमः भरतरसायामेव विलसतीति भवतां दृष्टिगोचरमापद्येत। व्यक्तिविषयकसदाचारसुविचाराः जानपदोन्नतिश्च यथापेक्षिततत्वमवलम्बितुं अस्माकं गृहशिक्षणमुदारमुदात्तं वर्तते। अत एव आर्याणां सन्ततिः तादृशि क्षणानुसारं सकलजीविराशिषु, तरुलतासु च स्नेहं दाक्षिण्यं दयां च दर्शयति। अत्र भगवान् कण्वमहर्षिरेव प्रमाणम् 'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या नादत्ते प्रियमण्डनानि भवतां स्नेहेन या पल्लवम्' परोपकृतिबुद्धिः, परपीडनासहिष्णुता, 'आत्मवत्सर्वभूतेषु निरीक्षणम्' इत्याद्युदात्तविचाराः अस्मासु अनादिकालतः संलग्नाः। तत्त्वज्ञानशिक्षणम, सत्पुरुषसमागमः, पितॄणां गुरूणां सदुपदेशः, प्रतता सुरूढिः एतेषां समाहारेण अस्मासु संचरमाणो गुणोत्कर्षः न कुत्रापि द्रष्टुमपि लभ्यते अस्माकं जन्मतः पशुषु विद्यमानं प्रेम,

न खलु वयं गोरक्षणसन्धीयानां वाङ्मुखमालामुपश्रुत्य अधीतवन्तः। दयार्द्रतया पेशलीभूतान्यस्माकमन्तःकरणानि प्राणिनां बाधामुद्वीक्ष्य कथं द्रवतां नाङ्गीकुर्वीरन्? एतादृशाः गुणा अस्मासु प्रादुर्भवितुं नैकानि कारणानि स्युः। सृष्टिरचनैवास्माकमेतस्य सर्वस्य अध्यापिका माता। अस्मदीयो देशः समशीतोष्णः। अत्र वयमस्मदीयसौकर्यकृते कृत्रिमोपचारान् न हि कुर्मः। अयं भगवदनुग्रह एवासौ पादपयुतेन नैर्मल्यसुस्मितेन पाथसा संभृताः सरोवरतरङ्गिणीगिरिनिर्झरवापीकूपादयः, जलपानावगाहनादिमहोत्सवानां कृते प्राणिमात्रं निमन्त्रणपूर्वकमाकारयन्ति। बालतृणालंकृतविस्तृतभूप्रदेशेषु गोवृन्दं मेषकदम्बकम्, हरिणसारङ्गयूथम्, यथेष्टं भक्षयित्वा भक्ष्यं विहृत्य जनसमाजाय नेत्रोत्सवं प्रयच्छन्ति। रसालपनससीताफलजम्बीरनीरलनारिकेलप्रभृतयस्तरवः पीयूषोपममुपहारं वितीर्य निरायासमातन्वते लोकस्य क्षुधाशान्तिम्। पद्मेन्दीवरपुण्डरीकादिप्रफुल्लनीरजानि, मल्लिकामालतीसेवन्तिकाप्रभृतयः लतासुमनसः, सहकाराशोकबकुलचम्पककेतक्यादितरुसुममञ्जर्यश्च वनोपवनेषु काननकान्तारेषु च सन्ततं सौगन्ध्यं विस्तारयन्ति। भक्तजनाः अमून्येव कुसुमानि परमात्मनः पादपङ्कजे समर्प्य मुखे मन्दहासं जनयन्ति। अभ्यागतप्रभृतयः मनोहारिणीं कुसुममालां स्वीकृत्य सुखानुभवोद्गारमाविष्कुर्वन्तः सुस्वरेण गृहस्वामिनः आदरोपचारं प्रशंसन्तः तस्मिन् निरवकाशं स्तुतिवर्षमाचरिष्यन्ति। सुकुमारशरीरा युवतयः सौरभ्यगर्भकरंबितानामनेकेषां कुसुमानां मालाः सुन्दरं संग्रथ्य, कचकलापे कण्ठे करेषु च संधार्य अकृत्रिमविभ्रमैः संचरन्त्यः

सविलासं विहरन्तीं वनलक्ष्मीमनुकुर्वन्ति। फलकुसुमावलीनामा-हरणकृते गताः चपलबटवः स्वसमानधर्मवत्या वानरसेनया साकं स्पर्धाम्, रचयन्त इव विरटन्तः डयन्तः विनोदमधिगच्छन्ति। पुरन्दरधनुरिवानेकवर्णसंयुतम्, अस्तशिखरमारुरुक्षोर्भगवतः प्रभाकरस्य कार्तस्वरसमप्रभायां सुन्दरशोभासमन्वितम्, विशालं स्वपुच्छमनेकधा, विस्तार्य आत्मीयकान्तायाः पुरस्तात् स्थित्वा प्रमोदातिशयेन नर्तनम् कुर्वतो मयूरस्य लीलामुद्वीक्ष्य चकिताः काष्ठवाहकाः स्वमस्तकगतं भारं विस्मृत्य मूहूर्तं कमप्यानन्दमनुभवन्ति। दैनिकं कृषिकर्मादिकार्यजातं निर्वाह्य शारदशशिप्रभायां तरुणा उत्साहेन क्रीडन्ति। प्रबुद्धाः प्रातर्वैदिकमुपविश्य संसारसमाचारालापं सामोदमालपन्ति। तरुण्यस्तु मञ्जुलध्वनिना गीतानि गायन्ति। एवं सविनोदं लीलाविलासं निर्वर्त्य भगवन्तं स्मृत्वा सर्वे जनाः सुखं स्वापमवाप्नुवन्ति। प्राभातिकसमये अरुणराजः समागत्य मन्दं जगतः उपरि, रजनीदेव्या समाच्छादितं प्रावरणं उद्घाट्य स्वकरे भासमानं जाम्बूनदवर्णभासुरं करदीपं उद्धृत्य 'कति वा जागृताः, इति पश्यति। सुखस्पर्शं कोमलं सुगन्धमात्मीयम् करं सुप्तानामङ्गेषु मृदुलं विन्यस्य प्रेम्णा तानुत्थापयन्ति। नैकपक्षिणः मधुरं कूजन्तः 'वयमिव यूयमपि समुत्थाय जगत्कल्याकृतुः परमेश्वरस्य स्तुतिं गायत' इत्युपदिशन्तीव। एवं भारतीयानां सृष्टिः नयनाभिरामा आह्लादकरा भूत्वा दृश्यते। समयतया तेषां योगक्षेमानुकूला वर्तते। कदाचित् प्रकृतिदेवता कुपिता भूत्वा अतिवर्षणाशनिमहापूरादिभिः अस्मान् पीडयन्त्यपि स कोपः क्षणिक एव। निरन्तरं जननीयमस्मान्

प्रीत्यैव पोषयति कथंकारमिदं वयं विस्मरामः?

किं त्वतिशीतप्रदेशेषु परिस्थितिः आस्माकीनदेशीयपरिस्थितेरपि भिद्यते। तेषु देशेषु नीरदराजो निरवकाशं वर्षति। वृष्टिहिमादीनां भयात् तत्रत्या जना मन्दिरालिन्दमपि नातिक्रामन्ति। वनस्पतयोऽपि अतिशयितहिमबाधया म्लानतामाश्रयन्ति। पक्षिणोऽपि प्रायः कृतान्तराजधानीं भूषयन्ति। अथवाऽन्यदेशं पलायन्ते। तेषां कलरवस्तत्र न रञ्जयन्ति मनः। तत्रत्या जना निहत्य पशून् शकुन्तान् तेषां प्रावरणादिकं रचयिष्यन्ति। नास्ति गत्यन्तरम्। सस्याधिपतिः सूर्यनारायणः वसन्तभूपतिश्च हिमग्रस्तदेशेषु सहसा दृष्टिं निक्षेप्तुं नाभिलष्यति। मानुषस्य उदरनिर्वाहाय न तत्र फलसस्यादयः। अत एव दग्धोदरस्यार्थे पशुपक्षिमीनादिप्राणिजातं निर्घृणं घ्नन्ति। 'बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति' मानसोत्साहदायकः सूर्यप्रकाशो न तत्र विद्यते। पल्लवकुसुममञ्जरीसत्फलानामभावस्तत्र। कर्णमधुरं कूजन्तः शकुन्तास्तत्र न हि दृक्पथं पतन्ति। अलाभकरेण कष्टसाध्येन कृषिकर्मणा तत्रत्यानां जाठरोद्योगः मनःस्वास्थ्यं भनक्ति। अतस्तत्रत्याविषण्णा विमनस्काः स्वभावतो निष्करुणा भवन्ति। ईदृशेषु स्वार्थं समुन्मूलयितुमसमर्थेषु 'आत्मवत्सर्वभूतेषु निरीक्षणम्' इदं तत्त्वमवलम्ब्य प्रचलन्तो दुर्लभा एव। उष्णप्रदेशेषु सृष्टिरेव पुरतः प्रेम्णोपसृत्य लोकबन्धुत्वस्य सदुपदेशं सादरं करिष्यति सकलप्राणिनस्तत्र लोकसंग्रहार्थं स्वस्वकर्मस्वासक्ता भवन्ति। इति वचनमनादिसिद्धमेव। प्राणिकोटिः, उद्भिज्जकोटिश्च मनुष्यस्य हितसाधिकाबुद्धिविकासकारणी-

भूता इति तेषु प्रदेशेषु निवासितां सुदृढो विश्वासः। पयःफलधान्यवस्त्रप्रावरणमन्दिरकुटीरादयः प्राणिवनस्पतिभ्य एव मानवो विन्दन्ति। न भवति काव्यशास्त्रादीनामुगमोऽपि तेभ्य एव? अत एव प्राञ्चोऽस्मत्पूर्वपुरुषाः तरुलतादीनामाराधनं सत्त्वशालिपशूनां संपूजनमकार्षुः। रविसोमादिग्रहान् ताराश्च मारुतपर्जन्यादींश्च देवतात्वेन भावयामासुः। कश्चन काव्याभिरुचिमान् परदेशस्थः पदं निदधाति चेत् तत्समकालमेव ईदृशविचारभरितमानसो भवति। नात्र संदेहावकाशः प्रशान्तनिशाकाले प्रमीलाधीने जगति, कविमानसविकासं कुर्वाणं शारदहिमकरस्य मोहकं बिम्बम्? प्राणिकोटौ वनस्पतिजातौ जीवकलां संपूर्य जगल्लीलायाः कारणत्वं प्रपद्यमानस्य भगवतः प्रभाकरस्य देदीप्यमानं मण्डलम्, अथ वा नैकविधप्रसूनपरिमलं संकलितमारचय्य जनोपविष्टस्थान एव आनीय, घ्राणतर्पणं कुर्वतो मन्दगन्धवहस्य, आदरभावम्, उत सृष्टिचित्रकारेण वसन्तराजेन नैकविधरङ्गवल्लीभिश्चित्रितं भूपृष्ठस्य शोभातिशयं वा, कलहंसकोकिलकीरशारिकामयूरादिविहङ्गमानां लानानुरूपं गानस्थापकस्य आकाशराजस्य उदारभावं वा, भक्तिपुरःसरमप्रशंसन् मर्त्यः न हि नरपशुः? अथ किम्? अत्र 'मन्दादरंनमहं पशुमेवमन्ये' ॥

उष्णदेशेषु उदरनिर्वाहाय आयतं सृष्टि देवी तु उभाभ्यामपि वरदाभ्यां हस्ताभ्यां वाञ्छितार्थं दातुं सन्नद्धा। विधायकर्षणम् उद्याचेत् यथेच्छसस्य समृद्धिः। छायाश्रयकृते द्रुमस्याधः उपविष्टस्य सव्याने अमृतोपमफलानि निपतन्ति मधुकरास्तु सञ्चित्तं मध्वानास्वादयन्तो दुर्भगान् नरान् गुञ्जामिषेण निन्द-

न्ति घटोध्न्यो धेनवः दोहनकृते गोपिकायुवतीरनुधावन्ति। अमीषु देशेषु सन्ततधारं क्षीरमधुरसाः प्रवहन्ति। नात्र संशयः। सुखिनां स्वभावः सुष्ठु वर्तते। कलहबीजमेव यत्र नोत्पद्यते तत्र मानुषः समाधानवृत्तिमवलम्बते करुणशालित्वमाश्रयति; बन्धुभावाभिलाषी च ज्ञायते। पूर्वकाले भरतखण्डं सुखसंपदा समृद्धं अवरत्येषु सोदरा बुद्धिरुत्कीर्णा। जठरवाससां चिन्तैव विमनस्कतानिदानम्। स्थलसंकोचफलसंकोचास्तित्वमेव अपनोदयति परस्परकण्ठविच्छेदकर्मणि। आदाय विपुलतैव भारतीयानां दयापरता सन्मार्गं दर्शयामास॥

शान्तताभिलाषः स्वातन्त्र्याप्रियता च प्रीत्युत्कर्षस्य पूर्वपीठिकात्वमवलम्बते; रणाभिरुचिमतां दास्य एव सकष्टं जीवतां पुरस्तात् विधीयमानो दयादाक्षिण्योपदेशः लुलायस्य पुरः विधीयमानं वाद्यवादनं स्मारयति। दास्ये सकष्टं जीवन्तं कंचन म्लेच्छं प्रति कश्चन गणकः प्राह अङ्ग! त्वया राज्यं लभ्यते चेत्, किं वा मह्यं प्रयच्छसि? तस्य प्रत्युत्तरमदात्स नीचः 'मदीयसिंहासनारूढदिवस एव त्वदीयमस्तकस्फोटमाचरिष्यामि!' दैववशात् स खलः राज्यं लेभे तथा कृतवांश्च। बहवः श्रुतवन्तः स्युः कथामेनाम्। उन्मत्तेषु समरजीविषु अनियंत्रितराज्ये च कथंकारं करुणाशालित्वं सुदृढं स्थास्यति? नादिरशहेन दिल्यां कृतस्य भयंकरतरस्य मानुषतामतिक्रान्तस्य अत्यद्भुतस्य संहारस्योदाहरणमेकमेवालम्। राष्ट्रे दयापरतोत्कर्षः यदा प्रचलितः तदा अभियोगभीतिरथवा अन्तःकलहदावानलचिन्ता च लेशमात्रमप्यवकाशं न हि विन्देते। व्यक्तिस्वातन्त्र्यबन्धुभावराष्ट्राभि-

माना: ऊर्जितावस्थामापद्यन्ते । तादृशस्थितिमत: उदात्तविषयान् विचारयितुं प्रेरिता भवन्ति । समयावकाशं अनुकूलतां च प्राप्नुवन्ति ऐहिकोच्छ्रेय एव ज्ञानसाधनमूलम् । परं तदुच्छ्रेय एव नास्माकं ध्येयं भवति । आत्मोन्नतिसोपानारोहणसमये सत्यसंधता, न्यायप्रियता, सोदरभावाद्यप्रतिमोपकरणानि भारतीयेषु विलसन्ति । महात्मनां साधूनां सदाचारेण, सुस्पष्टमनुमानितराष्ट्रीयगुणोत्कर्षयोगेन, जगत: नीतितत्वे इष्टतमपल्लवोदय: समभवत् । प्रथमत: 'अहिंसा परममो धर्म:' इतीदं सूत्रमिव वर्तमानं तत्त्वं जनानां लोचनेषु अञ्जनप्रक्षेपेण अन्धकारमुन्मूलयितुं कारणं बभूव । उपरि निर्दिष्टसूत्रे दृश्यमानं शब्दत्रयमेव षड्दर्शनानां सारम् 'Know thyself' 'Righteousness exalteth nation' 'Love thy neighbour as thyself' एतत्प्रभृति परमार्थतत्त्वै: साकं अहिंसातत्त्वमपि सर्वमान्यतामाप ॥

एवं अहिंसातत्वं जगन्मान्यतत्वमद्यापि संभूतम् । अहिंसायां वनस्पतिहिंसापि समाविष्टा । आत्मसाम्राज्ये सकलजीविराशि: समानाधिकारमेव संपादयति । न तत्र प्रधानानां मानुषाणां श्रेष्ठतामानिता: पशव: पिपीलिका: मक्षिका: सकलप्राणिन: स्वायत्तस्वातन्त्र्यवन्त: न ते मानवस्य इच्छानुवर्तित्वमाश्रित्य प्रचलितुं समुत्पन्ना: । इति हिंदुतत्वविदां मतम् ॥

अहिंसातत्वं प्राणिकोटौ वनस्पतिकोटौ च समानव्याप्तिमत् तद्विषयकानिरूपणं 'आचाराङ्गसुत्त' (सूत्र) नामके जैनग्रन्थे सुविशदं कृतवन्त: । ऐहिकजीविताभिमान कृते, वैभवकृते, संपदर्थम्, दु:खवारणाय च मानवो वनस्पतीनां पापं संपादयति

वैभवयुतराजमन्दिराणि निर्मातुं वनोच्छेदमातनोति; प्रियमण्डनः कोरककुसुमानि लुनाति। भेषजार्थं वनस्पतिकदम्बकं पीडयति। केवलं स्वयमेव न करिष्यति, अपि तु अन्यानपि कारयति दुष्कर्माणि। एतेन सुखात् परतरज्ञानाच्च प्रमुच्यते। यथा जननं संवर्धनं मानवानां क्रमः तथा वनस्पतिनामपि। यथा मानवानां ज्ञानप्रज्ञादयः तथा वनस्पतीनामपि सन्त्येव। छिन्ना भिन्ना यथा मानवा दुःख्यन्ति तथा वनस्पतयोऽपि व्यथामाप्नुवन्ति। मनुष्याणां शरीराणीव, तरवोऽपि जरामापद्य शुष्कतां यान्ति। एतज्ज्ञात्वा मुनुष्यस्तेभ्यः पापमयापायान्न कुर्वीत॥

अत एव वयमुक्तिरूपेण, संभाषणरूपेण, व्याख्यानरूपेण च, एवं सनिर्धारं वक्ष्यामः--- कीदृशा अपि भवन्तु प्राणिनः; न खलु ते संहरणीयाः। न पीडयितव्याः; न हि बाधितव्याः न हि संप्राहरं निःसारणीयाः। जनानां प्रवृत्तिमुद्वीक्ष्य वयमेवं तान् विचारयामः 'अपि नाम दुःखं भवद्भ्यो रोचते? उत दुःसहं'? अस्य प्रश्नस्य यथार्थोत्तरमिदमेव। 'सकलप्राणिनां दुःखमसह्यम् अनपेक्षितंभयप्रदम्' इति॥

कतिचन पशून् यज्ञार्थं घ्नन्ति, अपरे चर्मसंग्रहार्थं संहरन्ति; इतरे मांसापेक्षया, केचन शोणितसंग्रहाय, अन्ये तेषां वक्षः इष्टमिति, दशनाः कीकसन्यभिलषाम, इति कालस्यान्तिकं प्रापयन्ति। तेषां पदार्थानामुपयोगोऽस्तु न वा; न ते गणयन्ति। शूककीटदन्दशूकादीन् दशनभयात्, व्याघ्रभल्लुकादीन् 'नरान् संहत्य भक्षयन्तीति ज्ञात्वा कतिचन घ्नन्ति। प्राणिहिंसाकर्तारोऽविचारिणः, न ते पापान्मुक्ता भवन्ति। हिंसनाकर्तारस्तु विचा-

रिण: न ते ऐनसा लिप्यन्ते । ते बुद्धिमन्तः अन्यानपि पापान्निवारयन्ति एवं प्राणिहिंसामूलकपापजातं यो जानाति स एव प्राज्ञ: स एव साधु: !

सृष्टिदेव्या: संदेशोऽयं एतमेव महात्मा कश्चन सिद्धान्तरूपेण निरूपयामास । 'सकलजन्तुषु दयार्द्रभावो दर्शयितव्यः, एतस्मै वचनाय महतीं वितीर्य तत्, धर्मनीतितत्वेषु प्रवेश्य शोभासमन्वितमाचरितवन्तः हिन्दुस्थाननिवासिन एव, नान्ये। सांप्रतं वयमनर्घैरितरैरनेकगुणैर्विलुप्ता तद्विस्मृतवन्त: । तया ह्यन्या वयमिदानीं दुरवस्थां प्राप्ता अपि 'न हिंस्यात् सर्वभूतानि' अथ वा 'अहिंसा परमोधर्म:' इत्यस्माकं महात्मभि: बोधितं तत्त्वमखण्डतया परिपालयाम: । अर्धाशियाखण्डे स्वीयं मतं प्रसार्य अजरामरत्वं संपाद्य परं धाम प्रपन्नो गौतमबुद्धोऽपि प्राणिष्वनुकम्पायुत: स्वकीयात्युच्छ्रितवाण्या इदमेव तत्वं बोधयामास मूकप्राणिषु दया दर्शयितव्या, इति तेन ज्ञानिना बोधितं भावमत्रानुवादयाम:

केचनापि जीवितमपहर्तुं शक्नुयु:, परं तत्प्रतिदातुं न समर्था: । समेषामप्यात्मीयं जीवितं प्रियतममेव, अतस्तद्रक्षितुमतिक्षुद्रप्राणिनोऽपि प्रयतनस्य परां कोटिमातिष्ठन्ते । करुणाशालिनां देशे जीवितं जाम्बूनदमिव वर्तते । दयामूलकमेव दरिद्रप्राणिनां जगत् निरुपद्रवतया, सत्वशालिनामुदात्ततया दृश्यते। स्वीयसंकटसमये देवतां शरणीकुर्वाणो नर: स्वयं मूकप्राणिनां देवतास्थाने वर्तमानोऽपि क्रूरतामाश्रयति चेत् देवतापि कथं तस्मै दयां दर्शयेत्, अस्मिन् जगति सकलजीविन: 'वयं सर्वे

समाना:, इत्यभिज्ञाय प्रेम्णा सदयान्त:करणेन प्रचलन्ति चेत् जगदिदं परलोके नातिक्रामेत् ॥

बुद्धस्य सदुपदेशा आर्याणां मानसे प्रतिबिम्बिता: सकलप्राणिषु प्रेमभाव: समुत्कीर्ण: बुद्धप्रभु: बोधामृतं ददत् यत्र संचचार तस्मिन् गङ्गातीरे पशुपक्षिण: साध्वसं विहाय विहरन्ति। बुद्धस्य तत्वानि आर्याणां स्वभावगुणेषु प्रविष्टानि। एवं दयापरतास्माकं स्वभावसिद्धो गुण:, एवं भवितुं आस्माकीनधर्मनियामका: भगवदंशभूता महात्मान एव कारणतामाप्ता:। सामान्योपदेशकै: ईदृशकार्याणि संभवन्ति? स्मृतिपुराणकारा:, बुद्धादिसद्बोधकाश्च अस्मासु सोत्पीडनं सद्गुणभाण्डागारमक्षय्यं संपूरितवन्त: नैकानि च्छिद्राणि जायमानान्यपि तत्कोशागारं न खलु कृशत्वमेष्यति ॥

पशूनामौषधोपचाराय आर्या: गोशाला: क्रिस्ताब्दात्पूर्वमेव निर्मितवन्त इति वयमितिहासतो ज्ञातुं शक्नुमहे तादृशगोशाला निर्माणक्लृप्ति: प्रथमत: हिंदुस्थान एव जनिमापत्। तस्मिन् समये पुमांस: प्रमदाश्च तासु शालासु पशूनामादरोपचारं सादरं कुर्वन्ति स्म। सर्वमेतत् परोपकारबुद्धे: तन्मयं माहात्म्यम् ॥

पशुपक्षिकृमिकीटादिष्वपि भरतभूमिसंभूता: आर्या: दयां ममतां च धृतवन्त:। हृत्पटले मुद्रितस्य अस्य शासनस्य अनुरोधेनैव मयूरसदृक्षामन्दगतिमन्त: पक्षिणोऽपि बाधाभीतिमधृत्वा स्वच्छन्दं नृत्यन्त: केकाध्वनिना जनवसतिसमीप एव विहरन्ति। नास्ति चेत्, नयनाभिरामं दृश्यमानयस्य तस्य शंकुतस्य चित्रविचित्रपुच्छेषु कुतूहलिनां वाञ्छापूर्ति: तत्पक्षिजातिरेव नष्टप्राया

भवति स्म। धार्मिकाणां गेहेषु बालका अपि पक्षिभ्यः धान्यानि विकिरन्ति। शरावे पानीयं संपूर्य निदधति। शुककपोतकलविङ्काः रिस्रब्धं धान्यं स्वीकृत्य फर्फर्शब्देन उड्डयमानाः जलं पिबन्ति। दृष्ट्वैतत् कारुण्यरससंभृता भवन्तो बालकाः पुरः तारुण्यं वार्धक्यमाप्ताः किं न करुणालवो भवन्ति? न खलु सर्वथा समुदेति तेषु डिंभेषु तत्पक्षिहननविचारः। न हि द्रोहेन अपि तु प्रेम्णा पालयामि इति बुध्या मुग्धः कश्चन डिंभः शुकमथवा चटकं धृतवांश्चेत् तं निषेध्य प्रबुद्धाः पितरः तपस्विपक्षिणं बन्धनमुक्तं कारयन्ति। चौर्येण पयः पिबन्तमोतुं अथवा पुरः उपसृत्य प्रत्यक्षं रोटिकां हरन्तं कपिम् अस्मदीयाः पृष्ठतः अनुधावनेन न तान् प्रहर्तुं सरन्ति। अपि तु उच्चैर्विहस्य तेषां प्राणिनां चौर्यनैपुण्यं चापल्यं च स्तुवन्ति कतिचन जठरपूरणकृते बिलेशयान् कपीन् वा धृत्वा तान्क्रीडयन्तः गृहाद्गृहमटन्ति। तेषां वेदनामसहमाना धार्मिकाः तान् क्रीडयद्भ्यः धनं दत्वा मोचयन्ति॥

उग्रप्रायश्चित्तापमानकरबहिष्कारादिशासनान्यपि अस्मदीयसदाचारकरुणाशालित्वादीन् संरक्षितुं कारणी बभूवुः। गोघातुकस्य विहितं प्रायश्चित्तमवलोक्यते चेत् स हन्ता जीवन्मृतत्वेनालक्ष्येत। बिडालहन्ता काशीयात्रां कुर्यात्। निस्कारणं मक्षिकां हतवन्त माण्डव्यं नाम मुनिकुमारं शूलमारोपयांचक्रुः। प्राणिहिंसकः गोमांसभक्षकश्च राजद्रोहिणोऽपि आततायिनोऽपि निकृष्टतरश्चाण्डालः। अस्मिन् विषये सदयान्तकरणो भारतीयः उग्रशासकः क्षमारहितश्च भवति। प्रसवित्र्यपि एनसा लिप्तस्य पुत्रस्य मुखं नावलोकयति। गोवधमोचनकृते हिन्दवः कलहाय-

माना अन्यजातीयैः साकं स्वमस्तकमप्यपनीतवन्तः। अमी कलयः समुचिता इति न वयमभिप्रैमः; परं कलहोद्देशः सत्यमभिनन्दनीयः। निरुपयोगिजठरगावः अस्मदीयाः सादरं पालयन्ति तादृशान् कतिचन गवाशतेभ्यो विक्रीणते। समाजकलंकीभूता भवन्ति। तान् कियत्या निंदया संयोजयामः॥

धेनुर्गोमातेति ज्ञात्वा गृहिण्यः अहरहः गोशालां संमार्ज्य गोमयजलेन परिशोध्य रंगवल्ल्या अलंकरिष्यन्ति। गृहमेधी गोग्राहमदत्वा न करोत्यन्नग्रहणम्। मूकप्राणिनामुपयोगाय आर्याणां प्रत्युपकृतिरवर्णनीया। भारतीयभूपाः गोवधं कृतवन्तमपराधिनमत्युग्रं शिक्षयन्ति। अनेकेषां हैंदवपार्थिवानां वैजयन्तीषु गोजननी चित्रं विलसति॥

आस्तामहिंसातत्वम्! कतिचन हिंदुवः पिपीलिकानां वल्मीकं मार्गयित्वा शर्करां प्रक्षिप्य प्रत्यागच्छन्ति; सर्पवल्मीकसमीपे क्षीरपूरितद्रोणं विन्यस्यन्ति। झषकुलं भक्षयत्विति अपरे कासारतरङ्गिणीषु भिस्सां तण्डुलाश्च क्षिपन्ति। बुद्धसन्यासी पिपीलिकादीन् प्रचलनसमये कदाचित् संहरेयम् इति शङ्कया स्वहस्ते मायूरपिच्छनिर्मितपेशलशोधिन्या भूमिं परिशोध्य तत्र पादप्रक्षेपणं करिष्यति। रूढौ विद्यमाना अमी आचाराः शिबिदिलीपयुधिष्ठिरादिनरेन्द्राणां करुणादर्शककथाश्च धर्मश्रद्धाया अतिरेकतया दृश्यमाना अपि तेषां तेषां धर्माणां तत्त्वानि तेषां सहृदयानां हृदये सुदृढं प्रतिबिम्बितानीति न तत्रातिरेकतां ते निरीक्षांचक्रिरे। नास्ति खल्वीदृशातिरेकतायां दोषः? इतः परं गुणमवलोकयन्तु— अमी जना हिंसापराङ्मुखत्वं गताः तावति दूरे

हिंसनत: प्रयाता: । पुन: पृष्ठत: सृत्वा हिंसासमीपगमनसंभव-स्तेषां विद्यते ॥

अस्मदीयवाङ्मयेऽपि पशुपक्ष्यादीनां चातुर्यस्य सुज्ञानादीनां च विषये अनेककथा: सन्ति । एतेन तिर्यग्जन्तुषु अस्माकमभिमान: आदरश्चासीदिति व्यज्यते । पशुपक्षिणां संवादरूपेण मानवं नीतिशास्त्रं अध्यापयितुं विष्णुशर्मा नाम पण्डितवरेण्य: कथारूपेण पञ्चतन्त्रग्रन्थमचीकरत् । यथा तासु कथासु नीतिर्विद्यते तथा पशुपक्षिणां स्वभावगुणादिग्दर्शनमपि कण्ठीरवो उदारतया, रासभरायो मूर्खतया, शृगालनायको वञ्चकाग्रेसरतया, वृषभो विश्वासयुततया वर्णिता: । कथासंदर्भ: विनोदयुत: बोधप्रद: बालकानां मानसे पशुपक्षिषु प्रीतिमादरं चोत्पादयति । परं १७ तम:-शताब्द्यां ख्यातिमाप्त: कश्चन डेका नामकस्तत्त्ववित् 'तिर्यग्जन्तव: यन्त्राणीव कतिचन कार्याणि केवलं कुर्वन्ति । न तेषां ज्ञानं वर्तते सुखदु:खादिभवाना अपि न सन्ति' इति स्वशिष्यान् बोधयामास । तदा कश्चन शिष्य: समीपे तिष्ठन्तं कञ्चन शुनकं पादेन प्रहृत्य-- 'अहो! एतस्य दु:खभावनैव नास्तीति भणितवान्, परं पञ्चतन्त्रं पठितवान्, बाल्य एव मूकप्राणिष्वपि चातुर्यं वर्तत इति गृहीतवान् । पञ्चतन्त्रग्रन्थ: अनेकासु प्राचीनार्वाचीनभाषासु परिवर्तित: । पाश्चात्यानां परिचितस्य इसापस्य नीतिजातमपि पञ्चतन्त्रस्य रूपांतरम् । भरतखण्डादन्यत्र ईदृशकल्पितकथानामुत्पत्ति: दु:शका । अस्मदीयं आत्मज्ञानतत्त्वं आस्माकीनकरुणाशालित्वाभिवर्धने कारणं भवति । तिर्यग्जन्तूनामप्यात्मा वर्तते ; कर्मानुसारं व्यतीत्य कतिचन जन्मानि मनुष्यत्वं वि-

न्दन्ते इति अस्माकं शास्त्राणि आचक्षते । एवं क्षुद्रजन्मानि व्यतीत्य मनुष्यत्वमाप बुद्धः इत्यैतिह्यमस्ति । मनुष्यजातेः तिर्यग्जन्तूनां च निकटसंबन्धः संयोजित इति तज्जातिविषयकं बान्धव्यमस्मासु समुत्पद्यते । काचन जनता पशूनां आत्मा न विद्यते इति सिद्धान्तमनुसृतवन्तः । कथमीदृशेषु दया समुद्भवेत्? सांप्रतं तस्यामपि जनतायां मतान्तरमुत्पन्नम् । आनन्दो मोदः प्रमोदः ! ॥

(क्रमशः ।)

॥ श्रीः ॥

## ॥ श्रीरामोदन्तः ॥

[ पूर्वतोऽनुवृत्तम् ]

———*———

तदा गाधिसूनुर्दाशरथये स्वोत्पत्तिवृत्तान्तमभिधाय त्रिपथगानुसारिणाध्वना प्रतिष्ठमानोऽवाप्य भागीरथीं तद्दर्शनकुतूहलिना रामचन्द्रेण पृष्टस्तदुपाख्यानमपि विस्तरेणाभ्यधात् । निशमितगङ्गोपाख्यानेन पुरीं विशालां लोचनगोचरीकुर्वता दाशरथिना कस्येयं पुरीति भूयोऽपि प्रार्थितस्तद्वैभवप्रतिपादिकां मरुदुत्पत्तिकथां विशालोत्पत्तिप्रकारं चागादीत् ।

अथ तदधिपतिनेक्ष्वाकुदायादेन कृतातिथ्येषु तेषु क्रमेण दीर्घतपसो गौतमस्याश्रमं प्राप्तेषु तत्र भर्तृशापाच्छिलाभावमधिगताहल्या पुण्यश्लोकस्य दाशरथेः पादारविन्दरेणुसंसर्गात्सद्यः सुप्तोत्थितेव लोकत्रयसंमोहनकरं प्रतिपद्य निजमतिरमणीयं रूपम्, राघवं तुष्टाव । 'हे! जगदीश! धन्यास्मि त्वद्दर्शनात्, न चेत्त्वदनुकम्पा

केव गतिरीदृशानां पापात्मनाम् । न खल्वाश्रयोऽस्त्यन्यः पाथोजुषां झषाणां विना पाथसा । भगवन्! मायाम्बुधितरङ्गमालासु न मां पातयेः देहि समाश्रयम् । प्रसीद' इति ।

तदनु गाधिजः सराघवस्तां समाश्वास्य प्रतिगृह्य च तत्कृतमातिथ्यं विदेहान्तिकस्थां जनकस्य यज्ञशालामविन्दत । तत्र च विदेहनाथेन यथाशास्त्रमर्चितेषु तेषु दाशरथिर्निमिकुलपुरोहिताच्छतानन्दात् निशम्य भगवतो विश्वामित्रस्य माहात्म्यमवापामन्दमानन्दम् ॥

अथ मिथिलां प्राप्तौ निर्जितपुष्पबाणौ विलोक्य राघवौ जनाः किमेतौ मित्रावरुणौ उताश्विनेयौ आहोस्विदकाशाद्भुवं गतौ पुनर्वसू इति बहुधा वितर्कं विदधुः । तदन्ववसिते यागक्रियाविधौ एष राघव इष्वसनदिदृक्षुः, सन्दर्शय धनुरिति विश्वामित्रेणाभिहितो मिथिलेशः सप्रश्रयमवादीत् ॥

भगवन्! क्वेदं दुरानमं धनुः क्व वा सुकुमारस्यास्य कुमारस्य ललितं वपुः । यत्प्रख्यातवीरैरपि न सिद्धं नैव कार्या शिशुना तत्सिद्धिवाञ्छा । यन्न शक्यते दावेनापि दग्धुं किमीशा स्यात्तस्य दाहे दीपकलिका? यत्कर्म मत्तमहामतङ्गजैरपि दुष्करं तत्र किं शोभते कलभस्य चेष्टा? बहवः क्षितीशपुत्रा बाणासनदर्शनमात्रेणैवाबिभयुः । पश्यन्तोऽपि केचन गुणाकर्षण एव नाशकन् । सत्यामपि भगवतः स्पृहायां नैव शैवधनुरारोपणेऽनुमन्तुमुत्सहे ॥

अथ गाधिसूनुर्विहस्य राजन्! न वरेण्यं तेजो गुरुत्वाद्वपुषो गुरुत्वम् । न समीक्ष्यते हि तेजसां बाल्यादिवयः । सुबाहु·

ताटकयोर्हननात्ताटकेयविक्षेपतश्च न कष्टं स्यादिदं कृत्यम्। गजघातिनः सिंहस्य नैव प्रयासोऽस्ति जम्बुकनाशने। सन्दर्शय धनुः मा शङ्कां कृथा इति प्रोवाच॥

तदनु दाशरथिर्मुनिवचनविस्रब्धस्य राजर्षेर्निदेशेन बहुभिः पार्श्वगैरानीतं प्रसुप्तभुजङ्गमभीषणं शैलसारमपि तच्छैवं धनुः सर्वेषु निर्निमेषं पश्यत्सु कुसुमचापमिव विनैव यत्नमधिज्यं कुर्वन् समं नृपचिन्तया राक्षसश्रिया च भङ्क्त्वा बहुदूरे न्यक्षिपत्। व्यज्ञापयदिव यस्य नादो जामदग्न्ये राजन्यकुलं पुनरुद्धतमिति॥

अथ सत्यसङ्गरो भूमिपतिर्दाशरथये सुतां दित्सुर्दशरथानयनाय पुरोहितं प्राहिणोत्। पङ्क्तिरथोऽपि कृतसपर्याविधेः पुरोधसो विदितसुतवृत्तान्तः समाससाद सद्य एव मिथिलाम्। समागतं च तं मैथिलो विविधसपर्याभिः समार्चीत्।

अथाचारनिष्ठौ तौ क्षितिपती स्वमहिमानुरूपं कन्यकातनयविवाहमहोत्सवं व्यतानिष्टाम्। शुभे मुहूर्ते वेदविदा पुरोधसा मन्त्रपूर्वकं प्रज्वलितस्य प्रदक्षिणभ्रमणेन भावुकोदर्कं सूचयतो देदीप्यमानज्वालाजालजटिलस्य जातवेदसः सन्निधौ रघूद्वहः पार्थिवेयीं सीतां लक्ष्मणस्तदनुजामूर्मिलां कुशध्वजसुते च भरतशत्रुघ्नौ यथाविधि पर्यणैषुः। तदान्तरिक्षाद्दिव्यदुन्दुभिनिर्घोषैर्महती पुष्पवृष्टिरासीत्। इत्थं निर्वृत्ते विवाहे कुशिकनन्दनस्तौ धरापती आपृच्छ्योत्तरं पर्वतमयासीत्। पङ्क्तिरथोऽपि महात्मभिर्निजपुत्रैः साकंससैन्यः सपुरोहितः पुरीमयोध्यां प्रास्थित॥

अथ पथि वसुन्धरां कम्पयन्वृक्षांश्चालयन्नतिभयङ्करः

कश्चिद्वायुः प्रादुरास। रविश्च तमसा संवृतो नालक्ष्यत। कोऽपि दिशो नावेदीत्। वसिष्ठादीन् ऋषीन्सपुत्रं दशरथं च विनान्ये सर्वे निश्चेतना बभूवुः। दुर्निमित्तमेतादृशं विलोक्य सम्भ्रान्तो भूमिपतिर्दृष्टस्य वैकृतस्य शान्तिमधिकृत्य वसिष्ठमन्वयुङ्क्त। ज्ञानदृष्ट्या सर्वमपि जानानः स मुनिर्भविता मङ्गलोदर्कमिति राज्ञो व्यथां लघूचकार। सद्य एव सेनामुखे भीमाकृतिः कालाग्निरिव दुर्निरीक्ष्यो बाणपाणिर्जामदग्निः समागात्॥

अवलोकनादेव क्षीणानन्दोऽपि भूजानिर्वसिष्ठादिभिः सह विधाय सपर्यां भगवन्! अपि कुशलं समाधेः? इत्यप्राक्षीत् भार्गवस्त्ववगणय्य राज्ञो वाणीं यत्र दाशरथिर्वर्तते तत्रैव क्षत्रकुलकोपाग्निज्वालामिव दृशमुदग्रतारकां विधाय कार्मुकासक्तमुष्टिः शरं करशाखाविवरगं कुर्वाणो राघवमब्रूत॥

अरे! क्षत्रियडिम्भ! चतुर्भुजभुजाभक्तसारस्य घुणजग्धस्य शैवचापस्यारोपणेन दुर्ललितस्यानिर्जितमदीयपरशोस्ते भुजबलं धनुषि वैष्णवेऽस्मिन् जिज्ञासमानोऽस्मि इति॥

रघुनन्दनोऽपि सद्य एव तत्सज्यं विधायामोघेन तेन भार्गवस्य स्वर्गतिं तत्प्रार्थनया रुरोध। तदनु गते तस्मिन्दशरथः संक्रान्ततच्छक्तिसम्पदा समृद्धं राममत्यानन्दात्परिष्वज्योपाघ्राय च मूर्ध्नि पुनर्जातमेवामन्यत॥

अथ मार्गे कतिचिदतिवाह्य त्रियामा अहमहमिकया सदारान्सौन्दर्यजितमारान् राजकुमारानालोकयन्तीनां पौरपुरन्ध्रीणां चक्षुर्भिः कुवलयितगवाक्षां प्रविश्य पुरीमयोध्यां साकं विनयावनतैः तनयैः सुखं रेमे॥

इति बालकाण्डः।

# अयोध्याकाण्डः ॥

---*---

अथ कदाचिन्मातुलेन युधाजिता निजकुलं समाहूतो भरतः समापृच्छय पित्रादीन् शत्रुघ्नेन साकमयासीत्। दशरथोऽपि स्ववार्धक्यं विचिन्त्य सकलगुणसंपूर्णे त्रिलोकधुर्ये श्रीरामचन्द्रे विनिवेश्य राज्यधुरां विश्रमितुकामो राज्ये सुतमभिषेक्ष्य इत्याघोषयन्समस्तं लोकमानन्दयामास ॥

निशम्य दाशरथेरभ्युदयवार्तां संहृष्टान्तरङ्गापि मन्थराद्वचनाद्विकृतिं नीता कैकेयी क्रूरनिश्चया दुःखोष्णैर्नृपाश्रुभी रामस्याभिषेकसंभारमदूषयत्। अतिशीतमप्युदकमुष्णं भवति हि कृशानोः संबन्धात्। अथ कथंचित्पार्थिवेनानुनीता सा तत्प्रतिश्रुतयोर्वरयोरेकेन रामस्य वनप्रवासमपरेण भरतस्य स्ववैधव्यमात्रप्रयोजिकां राज्यश्रियं च वव्रे। किमस्ति क्रुद्धायास्त्रियः कार्याकार्यविवेचनम्?

अथातिदारुणा कैकेय्या वाणी चण्डमारुतो वृक्षमिव पतिं न्यपातयत्क्षमायाः क्षमायास्तले। चिरादयं संज्ञामुपलभ्य निर्दहन्निव क्रोधाग्निना कैकेयीमित्थमभ्यधात् 'आः! पापे! किंवानिष्टं कृतं लोकाभिरामेण रामेण मयापि वा। भक्त्या नितान्तमश्रान्तमपि मातरीव तव वरिवस्यां कुर्वाणे तस्मिन्को हेतुरीदृश्या बुद्धेः? हन्त! हास्यामि कथं निरागसं पितृवत्सलं प्रियसुतम्? राज्यं जीवितमपि वा त्यजेयम, न तु सीमन्तसुतं श्रीरामचन्द्रम्। तत्त्यज्यतामेष सङ्कल्पः। किमसौ धर्मः? संवाहयामि वा चरणौ। सन्निहितचरमकाले दीनेऽस्मिन्विलपति दयां कर्तुमर्हसि ॥

'अस्तु धर्मोऽधर्मो वा प्रतिश्रुतं व्यतिक्रम्य चेद्राजन्!

रामोऽभिषिच्यते शपे दृढं प्राणभूताय भरताय विलोकयस्ते विषं निपीय म्रियेय । नैव तुष्येयं प्रवासेन विना रामस्य'। इति क्रूराया: केकयसुताया अमङ्गलं वच: शपथञ्चातिघोरं समाकर्ण्य दूयमानमानसो धरापति: हा राम! इति दीर्घं नि:श्वसन्कृत्तमूलो महीरुह इवाध: पपात, अवादीच्चैनां दीनया वाचा। नृशंसे! कस्यायमुपदेश:? धर्मबुद्धिर्भरतो नैवानुकुर्यात्तव दुराशयम् । कथं वदेयं पुत्रक! गहनं गच्छेति । अभिहिते च तथा विधुन्तुदग्रस्तं विधुमिव तस्य मुखं कथमवलोकयेयम् । रामे विपिनं प्रस्थिते किं वा वदिष्यति मां कौसल्या । एतादृशमप्रियं विधाय किन्नु तां प्रतिवदेयम् । प्रियपुत्रं रामं प्रव्राज्य कियन्तमपि कालं जीवितुं नोत्सहे । प्रव्राजिते च तस्मिन् स्त्रीकृते महाराज: सुतं प्रस्थापयामासेति प्रतिजनपदं निन्दिष्यन्ति मां जना: । पुत्रक! याहि वनमित्यभिहितो न समर्थ: स्यात द्वितीयं वचो भाषितुम । बाढमित्येव वदेत् । किं करोमि । योऽनारतं स्वर्णरथैरेव गच्छति स कथं मे वत्सोऽरण्यान्यां पादाभ्यां सञ्चरताम् । योऽनर्घ वस्त्रसंवीत: स कथं मे कुमारो वल्कलं वसानो भविष्यति । अयि क्रूरे! जहाहि वा प्राणान् । नैवानुरुन्ध्यामतिदारुणां तव वाणीम् ॥

अथ राजन्! प्रथमतो वरं प्रतिश्रुत्य न युक्तमिदानीमित्थं भणितुम । सत्यमेव हि धर्ममुत्तमं ब्रुवते धर्मविद: । यदि धर्मे रता तव मति:, विवासय रामम्, अभिषेचय भरतम्, परिपालय सत्यम् । त्रिस्त्वामभिभाषे । न किं श्रुतपूर्वा शैब्यालर्कयो: कथा? न चेत्करिष्यसे मम समयं पुरत एव तव त्यक्ष्यामि जी-

वितम्' इति कैकेय्या भूयोऽपि प्रतिश्रुतवरदानरूपधर्मपालने प्रेरितः क्षितिपतिर्हन्त! धर्मपाशेन बद्धः किं करोमि । चेतना च मम नष्टाभूत् । आः पापे! दुराचारे! क्रूरनिश्चये! कैकेयि! कुरु यथाभीष्टम् । नाहं किमपि न देयम् । प्रागेव चेतनानाशाद्दिदृक्षे परमभिरामं श्रीरामचन्द्रमित्यब्रूत ॥

तदनु प्रगे सुमन्त्रेण प्रतिबोधितो महाराजः क्षिप्रमेव रामं समानयेत्यादिदेश । नृपादेशमनुसृत्य तेन प्रापितो दाशरथिः सप्रश्रयं पितरं प्राणंसीत् । रामेत्यभिधायोत्तरक्षण एव बाष्पपर्याकुलेक्षणं विलोक्य पितरं दोदूयमानमानसो राघवः कैकेयीं पितुःशोककारणमपृच्छत् ॥

अथ तस्याः विज्ञातनृपदुःखहेतोः मातः! एषोऽहमद्यैव गच्छामि दण्डकां जटाचीरधरः । करोमि च सत्यसङ्गरं पितरम् । किं वा न कुर्यां कृतज्ञेन पित्रा नियुज्यमानः । प्रशास्तु भरत एव वसुधामिमाम्' इति वदतो निशम्य रामचन्द्रस्य वचनं शोकात्किञ्चिदपि वक्तुमशक्नुवन्नृपतिरुच्चैः प्रारुदत् ॥

अथ तादृशावस्थं प्रणम्य पितरं विज्ञाप्य च वृत्तान्तममुं कौसल्यायै पुत्रक! नय मामपि वनमिति दुःखाद्विलपन्तीं सान्त्वयित्वा ताम्, अद्यैव सर्वानपि हनिष्यामीति क्रोधाद्वदन्तं समाश्वास्य च लक्ष्मणम्, जनन्या कृताशीर्वचनः सर्वानापृच्छ्य सीतालक्ष्मणाभ्यां तृतीयः सुमन्त्राधिष्ठितमात्तहयं स्यन्दनं समारुह्य प्रतस्थे । किं वा शिथिलयेन्निश्चलस्वान्तं पुरुषम् ॥

तदनु नागरिका जनाः समाक्रुश्य राजानं शोकात्प्रास्थितं रामचन्द्रमेवान्वयासिषुः । पौराः! निवर्तध्वम्, कुरुध्वं च मन्त्रि-

ष्ठां प्रीतिं भरते, अपनुदत च महाराजस्य शोकम् , इति बहुधा-भिहितानामपि नागरिकाणां भूयोऽपि गत्वरतामिङ्गितैर्विज्ञाय रजनीमेकां सपौर एव तमसातीरे शयित्वा प्रातश्चतुरं विहाय तान्प्रसुप्तानगमत् ॥

अथ राघवस्यादर्शनात्कोष्णं निःश्वस्य हा! रामेति करुणं रुवन्तो जनाः कृच्छ्रात्ततो न्यवृतन् । दाशरथिरपि गङ्गां समाक्रम्य प्राप्य च पुरं शृङ्गिबेरं तत्र विनीतेन सुहृदा गुहेन कृतमातिथ्यं सप्रमोदमङ्गीचकार । आनन्दप्रदः खलु पथि समागमो मित्रधेयानाम् । गुहोऽपि राघवेण प्रार्थितः सानुजं तं जटाभिरलमकार्षीत् । अथ भगवति! सुभगे! भागीरथि! देहि सौभाग्यमिति त्रिपथगामभिस्तुत्य क्रमेण भगवतो भरद्वाजस्याश्रममयासीत्। सदारानुजस्तमभिवन्द्य तत्कृतमाशीर्वचनं शिरसा वहन् तन्निदेशेनावाप्य चित्रकूटं तत्र वैदेह्या सौमित्रिणा च पुर इव सुखं रेमे।

सुमन्त्रोऽपि भागीरथीजलैः सहयमात्मानं पवित्वा स्मरन्ससीतयोर्दाशरथ्योः श्वसंश्च कवोष्णं प्राविक्षच्छ्रीरामचन्द्रनिर्मुक्तां तमसावृतामयोध्याम् । सूताच्छ्रुतसुतवृत्तान्तो नरपतिरपि सानुतापः कौसल्यायाः पुरतोऽखेदिष्ट । किं प्रयोजनमतीतकार्यानुशयेन ? क्रमेण चासह्यपुत्रवियोगोपप्लुतो धीयन्स्वकर्मजस्य मुनिशापस्योद्वेगाग्निनैवाऽगमद्देवभूयम् । अथ दुःखाद्रुदतो राजदारान्समाश्वासयन्ती बन्धुता सचिवमतेन शिष्टचा च वसिष्ठस्य भरतानयनाय दूतान्प्राहिणोत् ॥

( क्रमशः । )

समाधिदृष्टां गुरुवर्यमूर्तिं
साक्षात्प्रतिष्ठापयितुं समैच्छत् ॥ ३२ ॥

ततः स संमन्त्र्य समाहितात्मा
मठाधिकारिप्रवरेण सार्धम् ।
आहूय मुख्यान्पुरलोकवृद्धा-
न्गम्भीरमेवं गुरुराबभाषे ॥ ३३ ॥

"भो भो महान्तः शृणुत, विदितमेवेदं भवतामस्मदास्थाने लोकानुग्रहार्थं कृताधिवासायां श्रीमच्छंकरभगवत्पादप्रभृत्यस्मद्गुरुपर्यन्तायामद्वैताचार्यगुरुपरम्परायामस्मद्गुरुपादाः श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनः ग्रहमालिकायां प्रभाकर इव अष्टाविंशतिव्यासपरम्परायां पाराशरिरिव अष्टवसुपरम्परायां भीष्म इव रघुकुलपरम्परायां श्रीराम इव च सुप्रसिद्धा भूत्वा स्वानुग्रहेण लोकान् दयया दीनान् नयेन परिजनान् विनयेन वैदुष्यं पाण्डित्येन पण्डितान् तपसा देवान् दानेन दरिद्रान् यशसा दिगन्तराणि तत्त्वोपदेशेन जगन्ति वात्सल्येनास्मदादींश्च समुल्लास्य यथोदके शुद्धे शुद्धमासिक्तं तथैव ब्रह्मभूता इति । तदद्य वयममृतशिलामयीं नयनानन्ददायिनीं तदीयां मूर्तिं सकललोकस्मृतिपथारोपणाय प्रतिष्ठापयितुं तेनैव गुरुवरेणानेकलक्षद्रव्यव्ययपूर्वकं निर्मापिते महति देवागारे देव्याः शारदाम्बायाः कुम्भाभिषेकमहोत्सवं तत्संकल्पानुसारेणैव सकलशिष्यजनश्रेयःसाधनार्थं साधु प्रवर्तयितुं च भवतामभिमतमभिलषामः" इति ॥ ३४ ॥

ततस्तदिदं निशम्य ते गुरुसमीरितं स्वामिन् आलोचित-

मिदं युक्तं युक्ततरं युक्ततमं चेति हर्षगद्गदेन कण्ठस्वरेण समभिदधाना: प्रमोदतरलानञ्जलिबन्धानाबध्नन्त: प्रहर्षतस्तिर्यगान्दोलितै: शिरोभि: श्लाघमाना: संमोदाश्रुबिन्दुसंदानितैरक्षिभिर्मन्दं मन्दमीक्षमाणाश्च महोत्सवमनुमेनिरे ॥ ३५ ॥

ततो गुरुस्ताननुमोदमान:
संभाव्य सभ्यान्सकलान्विसृज्य ।
मठाधिकारिप्रवरं तमेनं
रहस्तदा विप्रवरं बभाषे ॥ ३६ ॥

अयि भो: श्रीकण्ठशास्त्रिन्, श्रूयतामिदमवहितेन मनसा । पुण्येन पुण्येन च निर्वर्तनीय: प्रसक्तोऽयं महान् कार्यारम्भ: त्वयैव निर्वाह्य: । भक्तोऽसि भगवत्पादेषु, शक्तोऽसि सकलतन्त्रेषु, सक्तोऽसि सत्कार्येषु, मुक्तोऽसि मदमत्सराभिमानै:, रक्तोऽसि राजनीतिषु, विरक्तोऽसि विषयोपभोगेषु, उक्तोऽसि मया, तदिदानीं यथा प्रसीदेयुर्देवा:, यथा च प्रसन्ना भवेयुर्गुरव:, यथा हि यथाविधि निर्वर्त्येरन् शास्त्रविधानानि, यथा तु प्रतुष्येयुर्ब्राह्मणा:, यथा तु प्रतृप्येयु: सर्वभूतानि, यथा वै संमान्येरन् समागता: सर्वे महाजना:, यथा खलु संश्लाघेरन् सर्वा: प्रजा:, तथा प्रयतितव्यं भवता सर्वानुभववता इति ॥ ३७ ॥

सोऽयं निशम्य तदिदं गुरुणा नियुक्तं
संतोषितेन मनसा द्विगुणीकृतास्था ।
प्रोत्साहितश्च शतधा गुरुपादभक्त्या
सर्वां मतिं हृदि विकासयितुं प्रयेते ॥ ३८ ॥

ततश्च,

मठाधिनेतुर्मुखनिर्गताना-
माज्ञाक्षराणामनुपालनाय ।
एकाक्षरस्यैकशतक्रमेण
ते ते जना जागरितार आसन् ॥ ३९ ॥

तदनु दिवानिशमनिशं प्रकल्प्यमानेषु पुरालंकारेषु, विनिर्मलीकृतासु पुरवीथीषु, समीकृतेषु निम्नोन्नतेषु, विस्तारीकृतेषु चत्वरेषु, विनिर्मितेषु सेतुबन्धेषु, समलंकृतेषु सकलगृहेषु, प्रकल्पितेषु पुरीकामिनीकरोद्धृतावकुण्ठनांशुकायमानेषु कायमानेषु, प्रोद्धृतासु ध्वजपताकावलीषु, प्रबद्धासु तोरणमालिकासु, विनिर्मितासु विशालासु पाकशालासु, निबद्धासु नवनवासु परःशतासु निवासवाटीषु, विहितेष्वमितव्ययेषु विद्युद्दीपयन्त्रेषु, तत्र तत्र व्यवस्थापितेषु सकलपदार्थसंग्रहगृहेषु, संभृतेष्वगणितेषु संभारेषु, तावन्महाराजश्रीकृष्णराजसार्वभौमसमाज्ञया संनद्धेष्वारक्षकराजपुरुषेषु, व्यवस्थापितासु वैद्यशालासु, विहितेष्वारोग्यविधानेषु, विरचितेषु वृत्तान्तपत्रप्रापणगृहेषु, महाराजभक्तिभरमखिलदिगन्तरेषु प्रकाशयितुमिव समाहन्यमानासु भेरीषु, संताड्यमानेषु मर्दलेषु, समाध्मायमानेषु शङ्खेषु, सरभसं प्रधाव्यमानेषु चारेषु, सोत्साहेषु च सकलपुरजनेषु, सरसकविगिरामुत्साहकरः पुरि कोऽपि महोत्सवः समजृम्भत ॥

तावदेव स मुख्याधिकारी स्वाग्रजं श्रौतशास्त्रनिष्णातं यज्ञेश्वरशास्त्रिणं समागतातिथिसभाजनभोजनभाजनवसतिनियोजनादिसत्कारविचारणे विनियुज्य स्वानुजं चतुर्षु शास्त्रेषु चतुरस्त्रपाण्डित्यपरिशोभितं कुणिगल् रामशास्त्रिणं विद्वज्जनविचारणे याग-

शालाविचारणे च विनियोज्य स्वयमागमिष्यतामास्थानाधिपतीनां संमानसभाजनादिकमङ्गीकृत्य मौहूर्तिकावेदितं श्रीमन्नलवत्सर-वैशाखकृष्णप्रथमायां महोत्सवनिर्वर्तनं गुरुवराज्ञया श्रीमन्महीशूर-महाराजकृष्णराजसार्वभौमाय निवेद्य तत्समाह्वानार्थं प्रस्थितेषु आस्थानमुख्यशिष्येषु, स्वयमपि तदाज्ञया तत्र तत्र मङ्गललग्नप-त्रिकाः प्रेषयामास ॥ ४१ ॥

महीगुरोः श्रीमुखनामधेयै-
राज्ञापनापत्रशतैरनेके ।
देशान्तरेभ्यश्च पुरान्तरेभ्यः
समाययुः सानुचरा जनौघाः ॥ ४२ ॥

पाश्चात्त्यदेशात्प्रथिताश्च केचि-
त्पौरस्त्यदेशात्प्रमिताश्च केचित् ।
उदीच्यदेशादुदितोदिताश्च
दक्षाश्च ते ते खलु दाक्षिणात्याः ॥ ४३ ॥

आयान्महीशूरपुरान्महीभृ-
दास्थानविद्वत्प्रकरस्तदानीम् ।
अन्ये च ते ते गुरुभक्तिपूर्णाः
समागताः सोत्सुकसाधुसंघाः ॥ ४४ ॥

तरीकेरे नाम पुरीवरे तु
सर्वेऽपि ते धूमरथावतीर्णाः ।
मठीयकल्प्तैर्महितोपचारै-
र्विश्रम्य विश्रम्य सुखात्समायुः ॥ ४५ ॥

मोटारभिख्यैर्मठराणिनियुक्तै-
 र्महारथैः केऽपि महाजनौघाः ।
केचिच्छताङ्गैर्दृढधूर्भिराश्वै-
 र्माहर्षभैः केऽपि मुदा समायुः ॥ ४६ ॥

पश्चाज्जनौघः पुरतो जनौघः
 पार्श्वे जनौघः परितो जनौघः ।
नद्यां जनौघो नगरे जनौघः
 सर्वोऽपि सोऽभून्नृमयः प्रपञ्चः ॥ ४७ ॥

गङ्गाप्रवाहः परितः प्रकीर्णः
 शंभोर्जटाजूटतटे निलीनः ।
यथा तथैवात्र महाजनौघो
 निवेशवाटीषु निलीयते स्म ॥ ४८ ॥

निवेशभोज्यासनभाजनाद्यै-
 र्मठोपचाराननुभूय सर्वे ।
अभूतपूर्वाद्भुतहर्षनद्योः
 समाचरन्संगममज्जनानि ॥ ४९ ॥

तावद्देवः सार्वभौमो दिनानां
 सद्भिस्तैस्तैः शोभितायाश्च पुर्याः ।
रत्नैरिद्धस्याम्बुधेश्चापि मातुं
 गम्भीरत्वं पश्चिमाब्धेस्तटेऽभूत् ॥ ५० ॥

तदानीं खलु महीशूरमहाराजश्रीकृष्णराजसार्वभौमः शृङ्गेरीं पुरीमागमिष्यतीति वार्तायां कर्णात्कर्णं प्रविशन्त्यां तदालोकनकुतू-

हलात्परित: प्रचलति पुरजने झणंझणायमानेषु पुरपुरन्ध्रीपदनूपुरारावेषु मोटार्नामकमहारथारूढमहाराजसंदर्शनेन कदाप्यननुभूतचरमानन्दमनुबुभूषव: स्वदेश्या: परदेश्याश्च महाजना: सत्वरमागत्य सौधाग्रेषु पुरगोपुरेषु वीथीषु वेदीषु तरुशिखरेषु च संभूय महाराजागमनमार्गमालोकमाना: प्रमोदपरवशतया किमपि किमपि संलपन्त: कमपि कोलाहलमातन्वानाश्च निरीक्षांचक्रिरे ॥ ५१ ॥

तावदेव खलु,

झगज्झगज्झगझगन्निनादमेदुरोदर:
कुथत्कुथत्कुथत्क्वथज्जलोज्ज्वलद्रवोज्ज्वल: ।
धगद्धगद्धगद्धगत्प्रदीपदीप्तिदीपित:
पुर: पुर: पुर: पथि प्रवीक्षितो रथ: प्रभो: ॥ ५२ ॥

तदा मुदा जनव्रजस्तदास्य दर्शनेच्छया
पदान्तमुन्नतिं नयन्प्रदाय चक्षुरग्रत: ।
लसन्तमीश्वरश्रिया हसन्तमन्तरोष्ठयो-
र्वसन्तमित्रवद्रथे वसन्तमैक्षत प्रभुम ॥ ५३ ॥

मन्दमन्दमनुयाति जनौघे
स्पन्दनेऽपि न शशाक शताङ्ग: ।
अङ्गनाजनविलोचनभृङ्गा
मङ्गलाङ्गमभित: परिवव्रु: ॥ ५४ ॥

प्रार्थितोऽथ मठकार्यधुरीणै-
र्भूपति: स शिबिकामधिरुह्य ।

मञ्जुलस्मितमनोज्ञमुखश्री-
　　र्मन्दमन्दमगमत्पुरवीथीम् ॥ ५५ ॥

दण्डवत्प्रणिपतज्जनगात्रै-
　　र्मार्गधूलिरखिला परिमृष्टा ।
अग्रतः प्रविचलद्गजदानैः
　　सिच्यते स्म परितः पुरवीथी ॥ ५६ ॥

हासकान्तिरचितैः सितपुष्पै-
　　र्नेत्रकान्तिमिषनीलसरोजैः ।
ओष्ठपल्लवरुचा च वधूनां
　　तोरणावलिरभूद्दिवि चित्रा ॥ ५७ ॥

मञ्जुले ध्वनति मङ्गलवाद्ये
　　मागधे स्तुवति भूपचरित्रम् ।
इन्द्रमन्दिरमिवाप स पार्थः
　　शारदानवगृहं नृपचन्द्रः ॥ ५८ ॥

भक्तिभारविनते क्षितिपाले
　　पादपङ्कजयुगं यतिनेतुः ।
तन्मनोज्ञनिटिलस्थलभागगो-
　　रोचनातिलकमुद्रितमासीत् ॥ ५९ ॥

आगतस्य नृपतेर्महिलान्ते
　　वासितां विशदयन्स यतीन्द्रः ।
मन्दहासरुचिरास्यशशी वा-
　　ङ्माधुरीभिरतनोन्मधुपर्कम् ॥ ६० ॥

भूमिपं तमभिनन्द्य यतीन्द्रे
पृच्छति स्वयमनामयमादौ ।
हर्षगद्गदगलः प्रतिवाचं
भक्तिनम्रशिरसैव ददौ सः ॥६१॥

यद्भवेत्सदृशमात्मविभूते-
र्यच्च मङ्गलकरं कुलजानाम् ।
श्रेयसां यदनुकूलमसौ राट्
तादृशीं समकरोद्गुरुभक्तिम् ॥ ६२ ॥

आशिषा तमभिनन्द्य यतीन्द्रः
साक्षतानि च फलानि वितीर्य ।
मालिकामपि नृपाय जयश्री-
प्रेषितं वरणमाल्यमिवादात् ॥ ६३ ॥

सत्कृतोऽथ गुरुणा स्वयमेवं
चन्द्रमौलिसदनं नृपचन्द्रः ।
संप्रपद्य सकलानुपचारा-
न्रात्रिशेषमनयत्स सुखेन ॥ ६४ ॥

ततः प्रभातायां शर्वर्यां, गृहेषु वीथीषु गृहवेदिकासु नदी-पुलिनेषु च महाजनक्रियमाणैर्गङ्गादिमहानदीस्तवनैर्गोविन्दनामसं-कीर्तनैः हरहरेति तारध्वनिभिश्च कवलितेषु तत्क्षणप्रबुद्धपतगकुल-कोलाहलेषु, आघमर्षणीः पावमानीश्च श्रुतीः समुच्चरद्भिः अहमह-मिकया स्नास्यद्भिः स्नातैः स्नातोत्तीर्णैः क्वचित्संध्यामुपतिष्ठमानैः क्वचिज्जपद्भिः क्वचिदुपस्थानपरैः क्वचिद्देवतार्चनोत्सुकैः क्वचिद्वेदा-

दृशावृत्तान्तः ॥

---

विदितचरमेव भवतां यच्छ्रीवाणीविलासयन्त्रगृहे ।
मुद्र्यन्ते ननु बहवो ग्रन्था अन्यैरमुद्रिताः पूर्वम् ॥ १ ॥
तेष्वन्यतमं प्रथितं धर्माकूतं निबन्धनं नाम्ना ।
श्रीमद्रामायणतः सारोद्धरणे समुत्सुकं नितराम् ॥ २ ॥
तद्वीक्षणेन हृष्टा ईषुः कुतुकेन सहृदयाः केचित् ।
पारायणोपयुक्तं करतलमितमपि च मूलमधिगन्तुम् ॥ ३ ॥
श्रीमद्रामायणमपि मुद्रितमपि तत्र तत्र बहुधातः ।
पुस्तकदशकमिततया प्रकटीभवितुं प्रवृत्तमचलं ॥ ४ ॥
तत्र किलैकान्ततया पाठमनुल्लङ्घ्य दाक्षिणात्यानाम् ।
श्रद्धैकतानमतयो मुद्रायन्त्राधिपाः प्रवर्तन्ते ॥ ५ ॥
ग्राहकमहाशयानामाधुनिकानां प्रवृत्तिमाधातुम ।
तावत्संख्यं पुस्तकमङ्गलभाषामयं च लभ्येत ॥ ६ ॥
अवधत्त दत्त दृष्टिं पुष्टिं पुष्णीत तेजसः परमाम् ।
इति किल सकलजनानां बोधमनु प्रावृतं सहृदयाहम् ॥ ७ ॥

---

# The Sanskrit Journal

OR

॥ सहृदया ॥

EDITOR

R. Krishnamachariar, M.A.,

Vidyanidhi.

VOL.
XXI.

No.
6.





PRINTED
AT THE
SRI VANI VILAS
PRESS
SRIRANGAM

AND
PUBLISHED
AT
MADRAS.




Registered No. M. 103

## विषयाः ।

सुभाषितानि—

भारतीयानां करुणाशालित्वं तत्कारणं च— केशवभट्टः (गलगली)

उपमानिरूपणम्— एन्. के. केरलपण्डितः ।

श्रीरामोदन्तः— शंकरसुब्रह्मण्यशास्त्री ।

साळुवाभ्युदयम्—

कुम्भाभिषेकचम्पूः— मण्डिकल् रामशास्त्री ।

देशवृत्तान्ताः ।

Gems from Sanskrit Authors—

The Indian Kindness and its Cause. Kesavabhatta (Galgali.)

A discourse on the Upamalankara— N. K. Kerala Pandit.

The Story of Rama— Sankarasubrahmanya Sastri.

Saiuvabhyudayam —

The Kumbhabhisheka Champu— Mandikal Rama Sastri.

Literary News.

# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, 1/3 Ormes Road, Kilpauk, Post, Madras (W).
6. Annual subscription is Rs. 3 only, including postage.

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिराहृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ९. ] नलवर्ष भाद्रपदमासः । [ संचि. ६.

## सुभाषितानि ॥

अम्भोजप्रकरोऽथ केतककुलं कुन्दोत्करः कैरव-
व्रातो मल्लिगणोऽथ चम्पकचयो जातीसमूहोऽथवा ।
नो चेदादरमातनोति पिक ते खेदं वृथा मा कृथा
यस्मात्क्वापि कदापि कोऽपि भविता यस्त्वद्गुणान्ज्ञास्यति ॥

आस्वाद्याम्रवनीमिमां प्रतिनवामास्वाद्य तन्मञ्जरीं
मैवं पञ्चममञ्च नन्दनवनभ्रान्त्या तया कोकिल ।
एषा वायसमण्डली घनशिरःशूलाहतिव्याकुला
कुध्वानैर्बधिरीकरिष्यति वृथा श्रोत्राणि सत्पत्रिणाम् ॥

येनानन्दमये वसन्तसमये सौरभ्यहेलामिल-
द्भृङ्गालीमुखरे रसालशिखरे नीताः पुरा वासराः ।
आः कालस्य वशेन कोकिलयुवा सोऽप्यद्य सर्वा दिशः
खेलद्वायसचञ्चुघातविदलन्मूर्धा मुहुर्धावति ॥ ३ ॥

॥ श्रीः ॥

# ॥ भारतीयानां करुणाशालित्वं तत्कारणं च ॥

[ पूर्वतोऽनुवृत्तम् ]

दशावतारकथा इदमेव समुपदिशति ! एतदवतारकथामुपश्रुतवंतो बालकाः मनुष्येषु पशुपक्षिषु च न विद्यते विशेषतो भेद इत्येन ज्ञास्यन्ति । परमेशः प्रथमतः मत्स्यकूर्मवराहात्मकतिर्यक्प्राणिरूपाणि दधार । नारसिंहावतारे मनुष्यपश्वोः संयुक्तरूपमाश्रितवान् । ततो वामनपरशुरामात्मकसाधुरूपं विधृत्य श्रीरामकृष्णावतारं समाप्य अन्ततः बुद्धो बभूव । एवं मत्स्यस्य बुद्धस्य च संबन्धो मिलितः । अर्थाद्बुद्धावतारेतिहासेऽवलोकिते तिर्यग्जातिमुद्धृत्य तां मानुषतां प्रापयामासेति वक्तुं शक्यते ॥

हिन्दुस्थाननिवासिनो बहवः धान्याहारिणः संजाताः तेषु सूरूढाहिंसनतत्वमूलकमेव । केऽपि तद्वदने बलात्कारेण पिशितं विन्यासितुं प्रवृत्ताश्चेत् ते प्राणानुत्सृजेयुः । परं तद्धोरतरं कृत्यं न कुर्वीरन् । गोमांसशब्दः कर्णे पतितश्चेत् तावतैव संक्षुब्धा हिंदवः तच्छ्रवणजन्यपातकापनोदनकृते 'हरे हरे राम राम राम राम हरे हरे' इति भगवन्तमनुध्यायन्ति । वेदान्तिनाम् 'पिशितं तामसाहरणम्' इति निषेधनेन अहिंसातत्त्वं पुनरप्युत्तेजितम् । हिंदूनां मांसाहारविरमणात् तदीयं क्षात्रतेजो विलुप्तमिति अनेकेषां मतम् । इयं भ्रान्तिः । मांसभक्षका अप्यनेके क्षात्रतेजोविहीनाः । देशाभिमानस्वाभिमानराजनीतिसुनीत्यादयः सद्गुणाः ह्रासीभूताश्चेत् क्षात्रतेजः प्रणष्टं भवति । न तु मांसत्यागात् ।

इंग्लण्डसदृक्षेषु स्वतन्त्रदेशेषु केवलं धान्याहारिणां जनानां सेनाम् निर्माय सा सेना कथमायोधनं रचयिष्यति इति परीक्ष्यते चेत् तद्वचनस्य प्रतीतिः स्यात् । पिशिताशननिषेधेन अस्मदीयक्षात्रतेजो विलुप्तं भवत्वथवा यथावदवशिष्यताम् । न हि तद्वचः सांप्रतं विचारयामः । भारतीयाः परोपकारबुद्धिमन्तः करुणाशालिनः वर्तन्ते इति परंपरागतख्यातिः निरन्तरमवशिष्टा चेद्वयं कृतार्था भवामः । वयमसत्यं भाषितुं भयं वहमानाः, सत्यभाषणकृते भीतिलेशमप्यवहन्तः, स्वार्थरहिताः, परस्परसहानुभूतिमन्तः, उद्यमशीलाः कलाकोविदाः, शास्त्रज्ञाश्च भवितुं नास्ति किल मांसभक्षणस्यावश्यकता? क्षात्रसामर्थ्यं हीनान् पराभूय चूर्णयेत् । परं उपरिनिर्दिष्टगुणवन्तः पण्डितानपि वशयन्ति । कैरपि साधयितुं दुरापास्ताः दयापरतापरोपकृतिबुद्ध्यादयो गुणाः अस्माकं निरायासमानुवंशिकतया प्राप्ताः । इतः परमितरसाधनानि सुलभसाध्यानि, तानि प्रयत्नपूर्वकं साधितानि चेत् वयं हिंसनरक्तपातराजद्रोहादीनां पातकाऽभाजनीभूता एव आत्मोन्नतिं कुर्वाणाः जानपदोन्नतिमपि कर्तुमीश्महे इति शुभम् ॥

केशवभट्टः । (गलगलि.)

॥ श्रीः ॥

## ॥ उपमानिरूपणम् ॥

---*---

हन्त! हन्त! जयति प्रचुरप्रचारा उपमा सर्वसार्विकया वाङ्मयं प्रबोधयन्ती भुवनं मन्दानां मनसि तमोजटिले भृशमाविष्कुर्वती पदार्थविवेकपटीयस्तां तन्निरूपणीयं यथार्थरूपानुसंधा-

नञ्च, पुष्कलयन्ती रसोद्रेकमनुवाचकानां श्रोतॄणाञ्च, इतरेतरमन्तरतमेषु पदार्थेषु विशेषतो विश्राम्यन्ती, शब्दप्रतीकमर्थजीवकलाञ्च बिभ्रती, कवितया चतुरश्रमुन्मीलयन्ती मनस्सरोजानि हृदयालूनाम् । प्रापञ्चिकं भावनिकरमविकलमाकलयन्तः, स्थूललोकमधिष्ठाय जीविनां नैसर्गिकीं वृत्तिं त्रैकरणिकीमखिलां विदितवन्तः काव्यज्ञशिक्षयाऽभ्यासः, काव्यशास्त्राद्यवेक्षणम् , शक्तिः, निपुणता, प्रतिभा, इत्यादिकवनकलासामग्रीं सकलामापादयन्तः, परं ज्योतिः प्रदर्शयन्तं निखिलातीतं सूक्ष्मलोकमारूढवन्तः, स्थूललोकस्थानां समस्तभावानां सूक्ष्माभिश्छायावलीभिः प्रत्येकतश्चिह्निते जाज्वल्यमाने सूक्ष्मलोके निगूढं विद्यमानस्य धाम्नः परमस्य तमोमयं जवनिकापटमपसार्य प्रतिभामण्डपमधिष्ठितवन्तः, कवयो वयोऽतिपातमजानन्तः, कवनकलाप्रचिकटयिषया सुनिपुणं सुसूक्ष्ममवधार्य आत्मोन्मुखीं पात्रसृष्टिमारम्भणीयामवसेयां च पात्रेषु चारुतरं परिहातव्यं विहाय अधिगन्तव्यमधिगत्य मनोज्ञं दृश्यं वा श्रव्यं वा काव्यशरीरमारचयन्तः, यथासंभवं लौकिकं स्वभावं स्वसृष्टैः पात्रैः सन्दर्भोचितया अनुकरणीयया अन्यादृश्या रीत्या अभिनीतं परीक्ष्य अन्यूनातिरिक्तं चमत्कारयन्तः, पाठ्यं भागं बालानामन्येषाञ्च विशदयन्तः, परमनवगतं विषयं ज्ञातव्यकोटिमारोपयितुमुद्युञ्जानाः केवलमुपासते निरुपमामुपमादेवताम् ॥

सेयं पाश्चात्यानां सकलमर्मविदां ग्रन्थावलिं यथावत् स्पर्शवतीं विदधती, संप्रति पौरस्त्यानां सकाशं मन्दमन्दमासेदुषी च दृश्यते । प्रणयिनः स्वसेवकान्भाषाभेदशून्या विचित्रां भूमि-

कामस्थाय शैलूषीव कवितारंगे हृदयजवनिकान्तराद्बहिः प्रविश्य नृत्यन्ती निद्रालूनां मनांसि हठादाकृष्य आरोहयत्यमन्दानन्दस्य परां काष्ठां प्रबोधस्य । निग्रहानुग्रहयोरुभयोर्विधात्रीयं मूर्तिमतीव मूलप्रकृतिशक्तिः, संपादयित्री रमणीयवस्तुप्रेक्षणकुतूहलस्य, निर्गमयन्ती तादृशकौतूहलिनां हृदयान्तरालादमान्त्या रसपरंपरया पारस्परिकं सदृशप्रतिभानं गद्यपद्यात्मकम्, अवगाहते कुशाग्रमतीनां कवीनामाशयेषु पदार्थविवेकशुद्धं रामणीयकं वर्णनीयप्रणयातिरेकसुहितं भावुकानाम् ।

रसनवकस्य स्थायितां रसत्वं च निरर्गलं दीप्तिराहितेन पोषणेन जनयतां त्रयस्त्रिंशतः सञ्चारिभावानां क्रमिकोदयः प्रचाल्य चेतः कवीनां दृष्टपदार्थानुकूलं विकारं प्रदीपयति । विकारोऽयं क्रमेण रसीभूय काव्यशरीरममन्दसौन्दर्यतुन्दिलं विधातुमर्थालंकारमूर्द्धन्यां धन्यामेवापेक्षते साहितीदीपिकामुपमाम् ॥

इतरेषामलंकाराणां उपमाप्रतिबिम्बानामपि रसानुगुणं व्यावहारिक्यां पारमार्थिक्यां प्रातिभासिक्यां च लोकस्य सत्तायां विश्वसनीयया विधया जनानां मनांसि स्वास्थ्यमाधाय हठादावर्जयितुं लेशतोऽपि न प्राबल्यम् । वस्तुतः सर्वथा प्रैयरूपकाधाने परमुपमा प्रभवति । अस्याः साहाय्यं विना सर्वमलङ्कारजातं दिवाकरापगमे कमलपुञ्जमिव मुकुलीभवति । असमीक्ष्यकारिणः केचित् कवयो दूषयन्त्येनां वृथाश्लेषादिभिर्नीरसैः क्रूरपाशैः प्रणह्य निर्दयम् । उज्झितसाहायकैवासौ सार्वत्रिकीं शतमुखीमात्मनः शिखां मृदुलकोमलां प्रसारयितुमतिवेलं पारयति । हन्त! दुरात्मनां संपर्कः साधुमपि जनं मलीमसीकरोति । शुद्ध-

स्फटिकोपलोऽपि रक्तादिसान्निध्यात् स्वकीयं मुञ्चति गुणं दर्शनीयम् । कविसार्वभौमस्य काळिदासस्य साहित्यसाम्राज्यकाले कृतार्थतामनितरसाधारणीं स्वर्जीवितस्य बलवत् समपादयदियमिति वक्तव्योऽयमंशः । कालेऽस्मिन् परिष्कृतेऽपि गैर्वाणी, कैरळी, साहित्यसाम्राज्यधुरंधरा अपि तत्र तत्र परं विरळाः । काळिदासवत्परिपालयितुमिमां कोऽप्यनुभवरसिको नालं भवति क्षोणीकोणशतांशेऽपीति दृढमवगम्यते । कालिदासपरिमण्डितं शुद्धनैपथ्योज्वलमात्मीयमङ्गमेतावदन्तामियं गुणपुष्कला मलिनीकर्तुं नोदयुङ्क्त शाणघर्षणेन मणिरिव भासते सहृदयहृदयाकलनेन ललितललितेयम् । हेतुभिर्बहुभिरीदृशैरस्याः सर्वजनीनमनुग्रदपरत्वं समर्थितमासीत् । पुनः प्रत्युत, साहित्यवैधेयानुरोधिनीं प्रतिकूलतां प्रदर्शयन्त्यसौ निग्रहपरताञ्च ज्ञापयति । तथा हि— सुजातस्य कस्यचिद्वस्तुनः सहजं माधुर्यं पश्यतः क्षणमसहमानस्य दृष्टिदोषपरीतस्य पुंसश्चलाचलं नयनद्वयं भुग्नां करालनीलजिह्वां 'अस्य सदृशान्तरमस्ति भण्यतां प्रतिभातम्' इत्यावेद्य विवशयति ततो वदनान्तरालकुटिला रसना मनोरमेण पदार्थेन सदृशान्तरं संगमयितुमुद्यता अङ्गारगन्धकसुवर्चिलवणानां संमेळनेन उच्चावचवर्णसङ्कुलं स्फुलिङ्गनिवहमिव, मेघघट्टनेन अप्रतिभटां वैद्युतशक्तिमिव, कामपि व्यापादनपटीयसीं आभिचारमन्त्रफलप्रतिरूपिकां शक्तिमुपमया प्रवेशयति । केचिदिमामुपमां जीवग्राहमभिगृह्य निष्पीडितरसां विधाय पादाहतां पुष्पमालामिव निर्लज्जं प्रयुञ्जते । तथाहि— 'काक इव पिकः कृष्णः' 'उपदंशं ओदनमिव भुङ्क्ते' 'मद्यं जलमिव पिबति' इत्यादिभिः प्रयोगैरेव विरहय्य सौन्दर्यसारसर्व-

स्वमुपमा जरातुरा नारीव केवलमदर्शनीया भवति । एनां विना अलङ्कारजातेषु को वा सुखं जीवति? आलङ्कारिकैराचार्यवर्यैरियमेव सकुतुकं मुख्यतया प्रतिपादिता । ते तु खण्डनमण्डनपरैर्वचनजातैः प्रपञ्चस्य परं ज्योतिरिव सकलालङ्काराधिष्ठानचैतन्यमुपमामभिप्रयन्ति । तथाहि— 'उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदान् । रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः॥' चित्रमीमांसाकारस्य मतमिदं विचारचारुतया नरीनरीति मनसि रसिकानाम् । वस्तुतः, एकस्या अप्युपमाया वेषान्तराण्येव सर्वे ह्यलंकारा इति परिगणितम् । एकैकस्योपाधेस्सम्पर्कादेकैकं भेदमास्थाय एकैकेन विकारेण एकैकस्य हृदयस्य स्तोभमावहतीयमुपमा, तथापि भूमिकाविरहितं सहजं स्वरूपं प्रदर्श्य एव सहृदयहृदयरङ्गान्निवर्तते । यथा केवलस्यात्मनः ज्ञातृज्ञेयत्वाद्यभावप्रयुक्तामनास्थां मुञ्चतः स्वगृहीतचित्रभूमिकाभेदस्याखण्डता, परमखण्डाकारवृत्तिभिरभ्युपेयते, तथा एकाप्युपमा स्वेतरस्य सन्तोष्टव्यस्याभावादुच्चावचतामङ्गीकुर्वती केवलतया च सहृदयैरप्रभूमितयाऽभिगम्यते । अन्येषामलंकाराणामधीयन्तः सुखमर्थी केवलामुपमां द्वैतप्रपञ्चवासनावन्तः परं ज्योतिरिवानुभवितुं न पारयेयुः 'एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन' 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतिभिरुपदिष्टानि ब्रह्मलक्षणमुख्यानि वाक्यानि द्वन्द्वबुद्धेर्यथा ज्ञानिनः तथा 'स्वतस्सिद्धेन भिन्नेन संमतेन च धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा' 'उपमानोपमेयत्वयोग्ययोरर्थयोर्द्वयोः । हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभिः' इत्यादिलक्षणलक्षितानि विद्याना-

थादीनां वाक्यानि उपमामनुस्मारयतः सहृदयानन्येभ्यो निवर्त्तयन्त्यलङ्कारेभ्यः । अस्मिन् परिष्कृतकालेऽपि काव्यकलाकौतूहलमुत्प्रेक्षाद्यलङ्कारदर्शनेनैव संजायते निशितबुद्धीनामपि । एतावता उत्प्रेक्षादिकमलङ्कारजातमुपेक्षणीयमिति न वदामः, अपि तु, काव्यकलाकुशलिनः परं सहृदयहृदयं आह्लादामृतजलधौ निमज्जयितुं केवलामुपमामवलम्बेरन्निति दिङ्मात्रेणाभिदध्मः, 'स्वतस्संभवी' 'प्रौढोक्तिसिद्धः' च इत्येताभ्यामर्थाभ्यामाकलितेषु काव्येषु स्वतस्संभविष्वेव स्वतस्सिद्धेयमुपमा लीयते प्रौढोक्तिसिद्धेष्वेव लोकासिद्धा कविकल्पिता परमुत्प्रेक्षा तिष्ठति । एकैकोऽप्येकैकस्मिन्नलङ्कारे स्निह्यति । पुनः कथं तत्तदलङ्कारपक्षपातः परिहरणीयः ? अनन्तभट्टस्तु सर्वेष्वलङ्कारेषु प्राथम्यमुपमाया इत्यविदन्निव असिद्धायाः कल्पितोत्प्रेक्षाया एव मुख्यतां चम्पूभारतेन निर्दिशन् धन्यमात्मानमाकलय्य सुस्थिरमजीवत् । श्रीहर्षवत् प्रौढोक्तिसिद्धार्थमेदुरकाव्यकलनलोलुपस्य भट्टस्यास्य आशङ्कयं दुरुद्धरा मनः प्राकम्पयत्सत्यम् । यत् 'वर्ण्यस्य अवर्ण्यधर्मैकदेशसादृश्यमात्राधानमुपमा' 'उपमायाः किञ्चिदिवातिरिक्ता उत्प्रेक्षा अवर्ण्यस्य प्रकृतस्थलानयनहेतुमपि भङ्ग्यन्तरेण प्रतिपाद्य तदवर्ण्यस्य तादात्म्यसंभावनामपि वर्ण्यस्य ददातीति । तथाहि 'धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम्' इत्यत्र धूमस्तोमस्य तमसश्च परस्परं सादृश्यमस्ति, तदा उपमा स्यात् । परन्तु धूमस्तोमरूपमवर्ण्यमत्र 'कोकीविरहशुष्मणाम्' इति हेतुर्भङ्ग्यन्तरेणानीय तमसो धूमस्तोमतादात्म्यशङ्कामावहन् असिद्धत्वं परिकल्पयति । कथं कथञ्चिदनन्तभट्टेन भङ्ग्या प्रस्तूयमानाप्युत्प्रेक्षाकल्पितत्वा-

॥ श्रीः ॥

# ॥ श्रीरामोदन्तः ॥

[ पूर्वतोऽनुवृत्तम् । ]



स्वबन्धुभ्यःस्वप्रवृत्तान्तं कथयन्भरतोऽपि दूतैः पितुरात्ययिकीं दशां श्रावितः सद्य एवाऽयोध्यामागात् । तत्र पितृगेहे शृण्वन् मातृणां समाक्रन्दनं पूर्वजं दिदृक्षुः परितो वेश्म गवेषयन्नप्यविलोकयन्दुःखादखिद्यत । अथ पुरोहितादिभ्यो विज्ञातरामवृत्तान्तः समुपालभ्य बहुधा कैकेयीं राज्यकामस्य ते प्राप्तमिदं राज्यमकण्टकं भुङ्क्ष्व यथेष्टमिति सोल्लुण्ठनं वदन्त्याः कौसल्यायाः पुरतो नैतन्मामकं मतमिति ब्रुवाणः सहस्रशः शपथान्विधाय तामसान्त्वयत् । तदनु वसिष्ठाज्ञया विधिवत्पितृमेधं समाप्य प्रजाभिः प्रस्तुतमप्यभिषेकं नाचीकमत । अमन्यत चाकृतश्रीपरिग्रहे पूर्वजे भुवः स्वीकरणादात्मानं परिवेत्तारम् ॥

तदनु रामं प्रत्यानिनीषुः साकं पौरैर्वनमयासीत् । क्रमेण भरद्वाजमुनेरवाप्याश्रमं तत्र वाचंयमान् मुमुक्षूनध्यापयन्तं सान्तेवासिनं तं प्राणंसीत् । महतामाश्रयो हि भवति मङ्गलहेतुकः । मुनिरपि सप्रश्रयं भरतं विविधैरातिथ्यैः समतर्पयत् । तदनु निर्मलजलां प्राप्य मन्दाकिनीं वैखानसेभ्यो विज्ञातरामवृत्तान्तः पूर्वजवनवासप्रगुणितं पितृनिधनशोकं विभक्तुकाम इव श्रीरामावासभूतं चित्रकूटमयासीत् । बन्धुजनसंविभक्तो हि

शोकः शमं प्रयाति । सह सैन्यैः समायान्तं विलोक्य तं किमागच्छतीहाऽपि जिघांसयावयोः, पश्यतु मम वीर्यं, अद्यैव हन्मि ससैन्यं भरतम्' इति संरब्धोऽपि सौमित्रिर्दाशरथिना विविधोपदेशैः परिसान्त्वितः शमं प्रत्यपद्यत । भरतोऽपि चित्रकूटं प्राप्य तत्र पर्णशालायां दर्भसंस्तीर्णे स्थण्डिलमध्यासीनं जटिलं सवल्कलं विलोक्य श्रीरामचन्द्रं बाष्पगद्गदया गिरा विललाप ।

यो विविधरत्नखचितां महार्हां शय्यामधिष्ठातुमर्हः सोऽयं ममाग्रज इदानीं दर्भाङ्कुरैरास्तृतां भूमिमधिशेते । यः पुरोऽनर्घैर्वासोभिरलंकर्तुमुचितः सोऽयं पितृवाक्यपरिपालनरूपधर्ममाचरन्मृगचर्मणी वस्ते । यो विविधानि सुगन्धीनि कुसुमान्यदीधरत् सोऽयं राघवः कथं वा सहत इमं जटाभारम् । ऋत्विक्क्लेशसाध्यैर्मखैर्यश्च धर्मसञ्चयो युक्तः सोऽयं मम पूर्वजो निजातिक्लेशसम्भूतं गवेषयति धर्मम् । यस्य चाङ्गं महार्हेण गन्धसारेणोपसेवितमभूदार्यस्य तस्यावयवोऽयं पङ्केन कथं वा सेव्यते? हन्त! हन्त! सुखार्होऽपि दाशरथिर्मन्निमित्तमवाप्तोदवस्थामीदृशीम् । धिक् सर्वजनविगर्हितं मम जीवितम्' ॥

अथ दुःखाधिक्यादनवाप्यैव दाशरथेः पादारविन्देऽपप्तत् । तदनु कथंचित्समाश्वासितः प्रणम्य साष्टाङ्गं श्रीरामचन्द्रं विज्ञापयामास पितरं स्वर्गतम् । दाशरथिरपि चिरं दुःखाद्रुदित्वा भागीरथ्यास्तीरं प्राप्य तत्र साकं सौमित्रिणा यथाविधि पितुर्निवापमकरोत् । अथ बहुधा अभ्यर्थितोऽपि विनयावनतेन भरतेन—

'लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान्वा हिमं त्यजेत् ।
अतीयात्सागरो वेलां न प्रतिज्ञामहं पितुः ॥'

इति ब्रुवाणः प्रतिगमनं नान्वमंस्त । न वर्ज्यो हि पितृनिदेशः पुत्राणाम् । तदनु तेन प्रार्थितो दाशरथिः प्रश्रयावनताय तस्मै मणिमये निजपादुके प्रादात् । अथात्मना दत्ते स्वर्णालंकृते पादुके प्रतिगृह्योत्तमाङ्गेन हे ! रघुनन्दन ! नगराद्बहिस्त्वदागमनमाकांक्षन् विन्यस्य भवत्पादुकयो राज्यतन्त्रं चतुर्दश वर्षाणि जटाचीरधरः फलमूलाशी वर्तिष्ये न चेद्द्रक्ष्यामि तदन्ते भवन्तं प्रवेक्ष्याम्यवश्यं चित्रभानुमिति वदन्तं भरतं दाशरथिस्तथेति प्रतिश्रुत्य परिष्वज्य च सादरं बाष्पपरीतलोचनो विससर्ज ।

भरतोऽपि मुनिवेषो नन्दिग्रामं प्राप्य तत्राऽन्वहं स्वकृतं कृत्यं विनिवेद्य रामपादुकाभ्यां पूर्वजागमनमेव प्रतीक्षमाणोऽवर्तत । राघवोऽपि वैदेह्या सह वने कन्दमूलादिना वर्तयन्कदाचित्किञ्चिच्छ्रमादिव स्वमहिम्ना स्थिरीकृतच्छायं महान्तं वनस्पतिमाश्रित्य सीताया उत्सङ्गेऽस्वाप्सीत् ।

तदा किलेन्द्रवायसो भुजान्तरेऽस्या मदेन विददार । तथाऽपि भर्तृहितैषिणी जनकनन्दिनी दाशरथिं न प्राबोधयत् । शैली ह्येषा साध्वीनाम् । स्तनात्स्रवता रुधिरेणैव प्रबोधितो दाशरथिर्जानकीं भीतां विलोक्य विदितवृत्तान्तस्सद्य एव क्रोधाद्वायसे तस्मिन्नस्त्रमिषीकमास्थत् । अस्त्रवेगनुन्नः स काकोऽपि सर्वैर्निजबन्धुभिः परित्यक्तः कुत्राऽपि रक्षितारमलभमानोऽन्ते रामचन्द्रमेव शरणमवाप । 'को वा लंघयितुमर्हति परन्तपस्य दाशरथेर्निदेशम् ॥

तदन्वार्तत्राणपरायणो दयावारिधी रघुपुङ्गव आगस्विन मपि तं लोकत्रयपरिक्रमेण व्याकुलमालोक्य करुणया तदीयं दक्षिणलोचनं परं हृत्वा ररक्ष । अथ स्वनिवासदेशस्य प्रत्यासन्नत्वात्पुनरपि भरतागमनं शङ्कमानो विहाय चित्रकूटाधिवासमधिवसन्नातिथेयानि मुनिकुलानि क्रमेणात्रेस्तपोवनमवाप्य तत्र च महर्षिणार्घ्यपाद्यादिभिरभ्यर्चितः प्रतिभयं दण्डकारण्यं प्रपेदे ॥

भयङ्कर

इति अयोध्याकाण्डः ।

---

## आरण्यकाण्डः ॥

---

अथारण्यानीमुपवनमिव सीतया लक्ष्मणेन च प्रविशतो दाशरथेः सरणिं राहुरिव चन्द्रमसो विराधाख्यः सन्ध्याभ्रवर्णो यातुधानोऽवरुध्य स्वदर्शनात् हा राम! इति रुदतीं जानकीं कृष्णमृगीमिव मत्तवारणो जहार । सद्य एव क्रुद्धस्य दाशरथेः शरेण विद्धः स राक्षसो विहाय जनकनन्दिनीं निजपराक्रमेणार्भकाविव रामलक्ष्मणौ स्कन्धमारोप्य जगाम ॥

तथा यान्तं तं विलोक्य हे निशाचर! नय माम्, उत्सृज राघवाविति विलपन्त्या निशम्य वैदेह्या वचः काकुत्स्थौ तत्क्षणमेव प्रतक्ष्य खड्गेन क्षपाटस्य भुजौ गतासुं तं धरण्यां निचखनतुः ॥

अथ शरणार्थिनां शरण्यं ब्राह्म्या लक्ष्म्याध्यासितं शरभङ्गस्याश्रममवाप्य तत्राऽनलं प्रविविक्षुणा मुनिना कथितसरणी महर्षेः सुतीक्ष्णस्य सन्निधिमगमताम् । ततोऽपि वासतेयान्पारिकां-

क्षिणौ बहुनाश्रमान् पर्यटन्तौ शिष्यगणपरिवृतं महर्षिमगस्त्यम-द्राष्टाम्। अथ नमस्कृत्य तं तेनाऽभ्यनुज्ञातौ रमणीयां पञ्चवटी-माविशताम्। तत्र सौमित्रिकृतपर्णशालायां राघवो वैदेह्या सह विविधाः कथाः कथयन्नवर्तत ॥

अथ कदाचित् शूर्पणखा नाम रावणसोदरी पञ्चशरपीडिता घर्मोपप्लुता भुजङ्गी गन्धसारमिवाऽभिरामं श्रीराममवाप। उवाद च गदितानिजान्वया निर्लज्जा विरूपाक्षी सा विशालाक्षं दाशर-थिम्। हे कामाकार! राम! किमनया विरूपया सीतया? वि-लोकय मां तवानुरूपां द्वितीयां रूपेणेति।

राघवोऽपि निशम्य कामपाशबद्धायास्तस्या वाणीं सस्मि-तमभाषत। सुन्दरि! विद्धि मां भार्योढम्। दुःखोदर्कं हि त्व-द्विधानां सपत्नीसाहित्यमुत्तमानाम्। लक्ष्मणो नामैष मदीयः कनी-यानस्त्रीकः। तमेव भज भर्तारमनुरूपमिति।

अथाऽभीकाऽसौ लक्ष्मणं पतीयन्ती सौमित्रे! परिणय मामिति प्रार्थयाञ्चक्रे वरवर्णिनि! कथं वा पतीयसि रामदासं माम्। परतन्त्रः किलाऽहं भ्रात्रा किमयं जनोऽनुरूपस्तव धिक्कृत-रतिसौन्दर्यायाः। प्रार्थय सुन्दराकृतिं राममेवेति सौमित्रिणा-ऽप्यनभिनन्दिता सा भूयोऽपि पर्णशालास्थं रामचन्द्रमेवाश्र-यामास। तदा जानकी विलोक्य क्षपाटाया यातायातं किञ्चिदिव जहास। निवातनिश्चला सिन्धोर्जलविकृतिश्चन्द्रो-दयेनेव सौम्याकारापि वैदेहीहासेन क्षोभं प्रापिता सा चक्षुरला-तोपमं तन्वाना दुष्टे! परिहासस्यास्य संप्रत्येव लप्स्यसे फलं किं क्रीडसि व्याघ्र्या मृगीव' इति मैथिलीमभिधाय प्रतिभयं स्वरूप-

मदर्शयत् । सद्य एव क्रुद्धः सौमित्रिः प्रविश्य पर्णशालां निदेशेन दाशरथेः खड्गमुद्यम्य सीतामाहर्तुकामां तां विघ्राममकरोत् । भवति हि योषाणां वैरूप्यमेव वधकल्पम् । विघ्र= नासिकारहित

अथ सा राक्षसी दिविष्ठा प्रदर्श्य भयानकं वपुरङ्कुशाकारया करशाखया राघवावभर्त्सयत । तदनु जनस्थानं प्राप्य भ्रात्रोः खरदूषणयोः पुरतो निजकर्णनासाच्छेदात्मकं रामोपक्रमं राक्षसपराभवमभिधाय पर्यदेविष्ट । न कोऽपि जानाति स्वकीयं दोषम् ॥

रुदतीमपनसां विलोक्य तां दाशरथिजिघांसू तौ चतुर्दशसाहस्रबलौ निरयासिष्टाम् । कृत्याकृत्यज्ञानशून्यो हि मूढजनः । तदनूद्यतायुधान्सदर्पमापततः खरदूषणादीन्रघुनन्दनो विविधैर्बाणैस्तथाऽवधीत् यथा दीनास्ते हा मातः! हा भ्रातः! हा पितः! इति विलपन्तो विलोकयन्तश्च युद्धे स्वसंख्याकान्राघवान्कुर्वन्तश्च सशोणितं वमथुमसूनत्याक्षुः । प्रलयकारिणी हि मतिर्नारीणाम् ॥

तदनु हतबान्धवा सा पारसमुद्रं वसन्तमवाप्य रावणमाक्रन्दन्ती कथयामास । हे वीरशिखामणे! सन्यस्व महद्भयमुपस्थितम् । किं प्रयोजनं विंशतिसंख्याकैरभिबाहुभिः? तपस्विनाऽप्येकाकिनाऽपि रामेणाऽघानिषताऽहवे खरदूषणादयो बहवो यातुधानाः । न चेदायास्यसहं नैवाऽज्ञास्यः सर्वममुं वृत्तान्तम् । विज्ञेयं खलु राज्ञाऽप्रमत्तेन शत्रुभिर्वितानिष्यमाणमपि कृत्यम्, किं पुनः कृतम् । त्वन्तु कृतेऽप्यपकारेऽशक्त इवावलम्बस औदासीन्यम् । स हि युवजानी रामः कालाग्निरिव दुर्निरीक्षो हन्ति यातुधानान् । कुरु सूक्ष्मां बुद्धिं, चपलां लक्ष्मीं हस्तेकृत्य मा श्वसीः इयं हि बन्धकीवाऽभिलषन्ती पुरुषयोगं स्वरमणसमी-

पस्थाऽपि व्याजेनापरं पश्यति । तस्याऽस्ति दयिता काचिद्धंस-गामिनी जितरतिसौन्दर्या यो न निरीक्षते मुखं तस्या न वा वचनानि श्रोत्रगोचरीकरोति मन्ये विश्वसृजा विहितानि तस्य चक्षुरादीनीन्द्रियाणि वृथेति नास्ति स्वर्गेऽपि तत्समा वरवर्णिनी । मुनीनामपि चित्तविक्रियाकारिणीं तां निजसर्वस्वेनापि क्रीत्वा भव कृती इति ।

तदनु दशग्रीवः समाश्वास्य तां बहुधात्मानं विकत्थमानः सीतामाहर्तुकामः सद्य एवातिशयितसुपर्णवेगः समुत्पत्यान्तरीक्षं समेत्य च समया सागरमधिवसन्तं मारीचं शूर्पणखाकथितं तस्मै वृत्तान्तमशिश्रवत् ॥

स्ववचनं निशम्य राक्षससार्वभौम! सद्य एवान्तर्हितो भव रघुनन्दनात् । यः खलु भवच्छत्रोः कार्तवीर्यस्यापि हन्तारमजैषीत् न युज्यते परन्तपस्य तस्य विजिगीषा । सा हि ताटका जानाति तदीयं पराक्रमम् । शूरम्मन्योऽहमपि वेद्मि तद्बाणेन मध्येसमुद्रं निपातितः । जानते च खरदूषणादयस्तच्छक्तिम् । महापराक्रमैर्बहुभी राजभिरप्यनमितं कन्याशुल्कं धनुः क्षणाद्योऽभनक् मा कार्षीर्बलिना तेन विग्रहम्' इति वदन्तं त्रस्तुं मारीचमाक्रुश्य 'किमाश्चर्यं भार्गवस्य विजये? न भवति श्लाघनीयं ताटकाया अबलाया हननम् । नापि तत्तदीयं पौरुषम्, यदतिभीरुर्भवान्बाणेन मध्येसमुद्रं निरस्तः । किं चित्रं जीर्णस्य घुणखादितस्य दुर्बलस्य धनुषो भञ्जने? वनतापसोऽयमित्यश्रद्धयैव योधितवतां खरदूषणादीनामपि हननं नाश्चर्यकरम् । दुर्बुद्धे! भीरुस्त्वमपनयसि नो गुणान्, विकत्थसे च शत्रून् । अतोऽहमद्यैव व्यापादयामि त्वामित्यभिधाय

तीक्ष्णं खड्गं करे विचकर्ष । तदनु प्राणभीरुर्मारीचोऽपि गत्यन्तराभावात्, भवामि तवाभ्यमित्रं इति तं सान्त्वयन्कनकमृगरूपमङ्गीकृत्य पञ्चवटीं प्राप्य तत्र स्वविलासेन लोभयन्सीतां तस्याः पुरतो बभ्राम । अथ जनकपुत्र्याः—

आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः ।
आनयैनं महाबाहो! क्रीडार्थं नो भविष्यति ॥

इति प्रार्थनया तां तितर्पयिषुर्दाशरथिरात्तचापो लक्ष्मणं सीताया योगक्षेमकरं विधाय तमेणं दुद्राव । कोविदानपि वध्वो जडीकुर्वन्ति! अथ मायामृगो दृश्यादृश्यो धावन्दर्शिताशो रामं पर्णशालाया विप्रकृष्टमाकृष्य तद्बाणविद्धः हा सीते! हा लक्ष्मण! इति च रामवचस्सदृशमार्तस्वरं कुर्वन् बभूव कीनाशनिकेतनातिथिः । आत्मनाशेऽपि कुर्यादेव विप्रियं शत्रुः । विस्फूर्जथुतुल्यं निशम्यैतद्विदलितान्तरङ्गा जानकीतिकर्तव्यतामूढा सौमित्रे! एष ते भ्राता विरौति । त्रायस्व भयादेनमित्यब्रूत ।

आर्ये! मा शङ्कां कृथाः । रामशब्दनीकाशोऽयं स्वनो विवश्वयिषोर्मृगस्यैव । न तु श्रीरामचन्द्रस्य! समरे क्रुद्धं काकुत्स्थं प्रसोढुं कः क्षमेत । त्वरितमेव द्रक्ष्यसि कृतार्थं पतिम् । मा भैषीः ।

देवदानवगन्धर्वपन्नगासुरराक्षसैः ।
अशक्यस्तव वैदेहि! भर्ता जेतुं न संशयः ॥

इति निजं निशम्य प्रत्यालापं हृदयव्यथोत्पादिकया—

अहं तव प्रियं मन्ये रामस्य व्यसनं महत् ।
न त्वहं राघवादन्यं पदापि पुरुषं स्पृशे ॥

॥ श्रीः ॥

# ॥ साळुवाभ्युदयम् ॥

---*---

करोतु लक्ष्मीं कलभाननो वः
कारुण्यपूरप्रमदा यदीयाः ।
मन्दाः शिरोमौक्तिकसस्यशालि-
क्षेत्रं नदीमातृकयन्त्यजस्रम ॥ १ ॥

अनर्घचूडाभरणं पुरारे-
........ देवतानाम् ।
आह्लादनं स्थावरजङ्गमाना-
मनङ्गसंजीवनमस्ति तेजः ॥ २ ॥

मण्डोदधेर्मन्दरभूधरेण
प्रमथ्यमानात्प्रथमेन पुंसा ।
नभश्चरायुष्यमुदे.......
...... नवनीतपिण्डम् ॥ ३ ॥

निजाङ्कलक्ष्मेक्षितचक्षुदष्ट-
नीलोत्पलं नीरनिधेः समुद्यन् ।
आलक्ष्यते हंस इवाश्रितो यः
पक्षद्वयाढ्या पथि खेचराणाम् ॥ ४ ॥

निवेश्य लक्ष्यं......वंशजानां
सतीप्रियाः सारसमन्दिरेषु ।

स्वयं करैर्मुद्रयति ध्रुवं यः
क्षपासु तद्गर्भ्यदलारराणि ॥ ५ ॥

अदक्षिणत्वेऽपि यदक्षि शौरे-
रालोकजातैरमृतैर्नवीनैः ।
तनोति संतोषभरं जगत्याः
स चेतनाचेतननिर्विशेषम् ॥ ६ ॥

दिव्यर्षिशक्रादिसुरासुरेन्द्र-
शिरोऽवतंसाङ्घ्रिसरोरुहेण ।
हरेण मूर्ध्न्यव्यवतंसभाव-
मानायि यो हृद्यमपां प्रसूनम् ॥ ७ ॥

बुधस्ततोऽभूद्बुधलोकमान्यः
पुत्रो वरः सोऽपि बुधात्ततोऽभूत् ।
ऐलिं यमारभ्य हिमांशुवंश-
समुद्भवा यान्ति धराधिपत्यम् ॥ ८ ॥

नानापदानो नहुषस्ततोऽभू-
त्ततोऽभवद्धैर्यनिधिर्ययातिः ।
जरां गृहीत्वा जनकाय यस्मै
पूरुः स तारुण्यमदादपूर्वम् ॥ ९ ॥

कालक्रमात्कलिपतखेचरेन्द्र-
सङ्ग्रामसाहाय्यकशौर्यधुर्याः ।
तद्वंशजाताश्चतुरब्धिसीमां
धात्रीमशेषामशिषन्महीशाः ॥ १० ॥

........जांशावतरोचितं ते
चालिक्कनारायणशब्दभाजः ।
सौहित्यमल्लश्रुतिमावहन्तं
मुरारिसंज्ञामपि मोहनाद्याम् ॥ ११ ॥

सारेण बाह्वोः सकलारिराय-
शाणूरमल्लप्पाडिघाणमल्लाः ।
भूमेरभूवन् प्रियभर्तृभावा-
त्ते मेदिनीमीसरगण्डसंज्ञाम् ॥ १२ ॥

सत्योक्तिविश्राणनधैर्यविद्या-
शौर्येषु नास्मत्सदृशा भुवीति ।
निवेदनार्थं किल पञ्चघण्टा-
निनादसंज्ञामगमन्नृपास्ते ॥ १३ ॥

सर्वास्त्रविद्याविदुषां च येषां
साधारणी साहसचिह्नमेकम् ।
मदोद्धतक्षत्रवधाय रामः
कुठारधारेव कठारिकासीत् ॥ १४ ॥

येषां कठोरी रणसीम्नि मुक्त-
कीलालधारान् विजयाय... ।
पाणौ गृहीतापि च निःसपत्नी-
भावाज्जयश्रीपरिणीतिहेतुः ॥ १५ ॥

दैत्यावतारान्द्विषतो निहन्तुं
धर्मं पदैः स्थापयितुं च येषाम् ।

कलौ मुरारेरवताराचि......
कठारिकाजायत नन्दकासिः ॥ १६ ॥

विधोः कुले यस्य विधुन्तुदारि-
भयापनुत्त्यै पथि खेचराणाम्।
किमुद्यता केतनवैजयन्ती
वराहमुद्रा वलते.......... ॥ १७ ॥

सितातपत्रच्छलफेनपुञ्जे
सेनारजोवारिभृतेऽभ्रसिन्धौ।
मायाकिरिः किं व्यहरद्यदङ्कः
स्वर्गे ...वासं द्विषतां निषेद्धुम् ॥ १८ ॥

मया पुनर्द्रु.......
मग्नाप्युदस्ता वसुधा समस्ता।
इतीव वक्तुं यदनीककेतु-
पोत्री पुनर्विष्णुपदं गतोऽभूत् ॥ १९ ॥

उद्यच्छमानं दिवि यद्ध्वजान्त-
रुदीक्ष्य गर्जन्तमिवेह पोत्रैः।
........भृशमात्तशङ्क-
ममर्त्यविद्वेषिकुलं तदासीत् ॥ २० ॥

समीरवेगोच्चलवाजिराजि-
तरङ्गसङ्गे समराम्बुराशौ।
यत्केतुघोणी रभसादकार्षी-
न्मृषा वराहस्य विजृम्भितानि ॥ २१ ॥

येषामुदन्वत्परिघा कुलाद्रि-
  साला भवत्येव पुरी धरित्री ।
शाला गजानां चतुरब्धिवेला
  कोशालयः केवलमन्तरीपम् ॥ २२ ॥

कलत्रमुर्वी करदेव येषां
  प्रजा प्रजापालनरक्षणाभ्याम् ।
कुलार्हचर्यानयनाद्गुरूणां
  युक्तोऽभवल्लोककुटुम्बिभावः ॥ २३ ॥

अस्मत्कुलेशोऽस्तरुचिः किलेशो
  रवेः पुरस्तादिति यैः प्रभावात् ।
सृष्टेन तेजोरविणा स नूनं
  दिनप्रदीपस्य दशामनायि ॥ २४ ॥

आलोकमात्रादविमुक्तसीम-
  वाहिन्यधीशावशितैकमूलम् ।
पद्मावना....द्भुतराजभाव-
  साम्येन सच्चक्रमुदेऽभवन्ये ॥ २५ ॥

सर्वस्वदानेषु निजं शरीरं
  मृत्पिण्डबुद्ध्यैव नयैर्वितीर्णम् ।
अन्यार्थसिद्धिर्यदि वोद्धविष्य-
  त्तदप्यदायिष्यत दानवीरैः ॥ २६ ॥

यद्वैरिणां केलिसरोऽम्बुराशि-
  र्लीलाचला एव कुलाचलेन्द्राः ।

अन्यत्किमाक्रीडवनं विहर्तुं
दिव्येक्षणाभिः सह दण्डका च ॥ २७ ॥

जन्मस्थलं.... मिकुलेश्वरस्य
प्रियोऽपि चेति द्विरदा यदीयाः ।
अब्धिं चमूपांसुनिपीयमान-
मापूरयन्किं स्वमदाम्बुपूरैः ॥ २८ ॥

अधिष्ठिता दंष्ट्रिभिरद्रिवन्याः
क्रीडागृहं कूटकिटैः पयोधिः ।
द्वीपाश्च वाराहमुखा द्विषन्तः
क्व यान्ति यल्लाञ्छनकोलभीताः ॥ २९ ॥

उत्साहशौर्योद्यतत्परैर्यै-
र्दण्डः परं वैरिषु दर्शितोऽभूत् ।
मानापनोदाय हि सामभेद-
दानानि तन्विष्टचभवन्नुपायाः ॥ ३० ॥

दिवानिशं रक्षणजागरूका-
न्ध्यात्वा वनान्ते चिरमाकुलायान् ।
सरूपभावादिव शत्रुभूपा
निद्रां त्यजन्ति स्म निजावरोधैः ॥ ३१ ॥

विरोधिभूभृन्मशकव्रजार्थे
चमूरजोधूमचयेऽप्युदीर्णे ।
दिग्दन्तिनां भूभरणोद्धतानां
यद्धामवह्निः किमदीपि दीप्त्यै ॥ ३२ ॥

जित्वाखिलाशा जयतां तु येषा-
मन्तर्बहिश्चापि रिपूनशेषान् ।
इहार्जितैर्यागमुखैर्गरीया-
न्यत्नो विजेतुं परलोकमेव ॥ ३३ ॥

आलोच्य येषामभिलाषसिद्धि-
ममूषितैकैकनिषेवणानाम् ।
ब्रह्माच्युतेशेष्विव बद्धभावं
धर्मार्थकामेषु समं मनोऽभूत् ॥ ३४ ॥

शमाय भोगः सुकृताय दण्डः
सत्पात्रदानाय धनार्जनाशा ।
कोपौघशान्त्यै कुहनावनाय
विद्यापि चासीद्विनयाय येषाम् ॥ ३५ ॥

कामः प्रशान्तिं करुणामुपेक्षा
क्षान्तिप्रकोपः सकृतप्रशंसा ।
...पः सुखं सत्यवचः क्षितीश-
नीतिश्च येषां न हि बाधते स्म ॥ ३६ ॥

सर्वार्थिनः प्रीणयितुं भयार्ता-
न्संरक्षितुं शासितुमप्यरातीन् ।
धैर्येण ये दानदयार्जि........
........नवश्यंस्तृणभावनेन ॥ ३७ ॥

श्रद्धाथ विद्या न च तत्त्वबोध-
स्तद्भावनं चाथ तपो नु तीव्रम् ।

सर्वार्थसिद्धिस्तत एव येषां
निःश्रेणिकासीन्निजमुक्तिमार्गे ॥ ३८ ॥

वर्णाश्रमाणामवनक्रमेण
धर्मं स्थिरीकृत्य पदैश्चतुर्भिः ।
कलिं पुनर्यैः कृतयद्भिरुर्व्यां
कालस्य कर्ता नृप इत्यदर्शि ॥ ३९ ॥

चिरार्जितानां तपसां विपाका-
त्तेषां जनानामपि भागधेयात् ।
कलाकलापैकनिधिः कलेश-
कुलावतंसोऽजनि गुण्डदेवः ॥ ४० ॥

आहुर्यमाप्ता विबुधावनार्थ-
माप्तावतारं मरुतामधीश ।
नीत्वा स्वराप्तिं निहतान्निषदा-
न्सर्वश्रुतिस्थापनसावधानः ॥ ४१ ॥

अगापयद्दिव्यवधूभिरात्म-
गुणप्रबन्धानपि गुण्डदेवः ॥
विजित्य यो दिग्विजयाय सज्जं
युद्धे सुरत्राणमुदग्रशौर्यम् ॥ ४२ ॥

क्ष्मासुरत्राणकृतो नयेन
धात्रीमशात्सप्तसमुद्रसीमाम् ।
यस्मिन्मही शासति राजपीडा
मधुप्रदानं मधुपावलीनाम् ॥ ४३ ॥

नावर्तयद्भिः क्वचिद्रामायणादिपारायणपरायणैश्च महाजनैर्निबिडितासु तुङ्गातरङ्गिणीतटभूमिषु, क्वचित्स्नातोत्तीर्णाभिस्तुङ्गामभ्यर्च्य स्वसौभाग्यदेवतामर्चयन्तीभिः सुवासिनीभिरलंकृतेषु सोपानपथेषु, केषुचिदहो! व्योमान्तरमारूढः सविता संनिधास्यति प्रतिष्ठामुहूर्तः समागमिष्यति महाराजश्रीकृष्णराजः संमिलिष्यन्ति महाजनास्तदद्यैव व्रजामो वयमिति त्वरमाणेषु, सर्वेऽपि सत्वरं नरसिंहवनीमुपेत्य प्रतिष्ठालये तत्पुरतः परितश्च निरन्तरमवस्थाय महोत्सवदिदृक्षया क्षणे क्षणे प्रवर्धितोत्साहाः समवतस्थिरे ॥ ६५ ॥

तावदेव खलु,

दत्तावलम्बः परिवारमुख्यैः
प्रणम्यमानः परितोऽपि भक्तैः ।
मन्दस्मिताञ्चन्मधुराधरश्री-
र्भूमीगुरुर्भूसुरसंघमागात् ॥ ६६ ॥

तदानीमेव खलु,

दोधूयमानो धुरि चामरौघै-
र्देदीप्यमानो धवलातपत्रैः ।
तोष्टूय्यमानः स्तुतिपाठकैः स्वैः
सम्राट् समायाच्छिबिकाधिरूढः ॥ ६७ ॥

संवाद्यमाने शुभवाद्यजाले
संमोदमाने सकले जनौघे ।
भामीपतिर्भूमिगुरुश्च हर्षा-
द्रुरोः प्रतिष्ठालयमभ्ययाताम् ॥ ६८ ॥

ततश्च,

ऋत्विग्भिरावर्तितमन्त्रजालै-
गुरुर्गुरोरात्मनि भावितस्य ।
मूर्तीभवत्कीर्त्तिमिवोपमूर्तिं
सद्यः प्रतिष्ठापयति स्म सोऽयम् ॥ ६९ ॥

तावद्दुन्दुभिमर्दलानकरवप्रोद्भूततूर्यस्वनाः
स्वर्गङ्गातटपाटनोद्भटपटात्कारैः प्रभूतैर्वृताः ।
त्रस्यद्दिक्करिघीङ्कृतैर्घनतराः पातालमप्याविश-
न्शेषाहेर्नयनानि साधु बधिरीकर्तुं प्रवृत्ता इव ॥ ७० ॥

मधुरस्मितसूचकाधरोष्ठं
प्रशमक्षान्तिकृपाभिसूचिनेत्रम् ।
प्रसमीक्ष्य गुरोर्नवावतारं
तमिमं प्रत्यभिजानते स्म लोकाः ॥ ७१ ॥

प्रसन्नगम्भीरमुखीं तदाकृतिं
विस्मित्य विस्मित्य विलोक्य हर्षिताः ।
समाधिमुत्सृज्य समुत्थितोऽभव-
द्गुरुः स एवेति जगुर्जनास्तदा ॥ ७२ ॥

अथागमोक्तैरमृताभिषेकैः
काषायवस्त्रैः कमनीयपुष्पैः ।
धूपैश्च दीपैश्च फलोपहारै-
रभ्यर्च्य सर्वेऽप्यभवन्कृतार्थाः ॥ ७३ ॥

तदनन्तरमखिलाश्च महाजनाः संनिहितमभिजितं मुहूर्तमालोच्य पुरतः प्रस्थितं जगद्गुरुश्रीचन्द्रशेखरभारतीस्वामिनमतिभक्तिभरेणानुव्रजन्तः, तमनुयायिनं महाराजश्रीकृष्णराजप्रभुं सप्रश्रयं सानुरागं च पुनः पुनरालोकयमानाः, कुम्भाभिषेकमहोत्सवावलोकनोत्सुकतया शारदायतनमहंपूर्विकया प्रविश्य तत्र संभृतान्संभारान्निगमविहितविधानानि विचित्राणि नवनवानि भवनशिल्पानि च विलोकयन्तः, प्रणमन्तश्च भाविमहोत्सवमनुपालयाञ्चक्रिरे ॥ ७४ ॥

ततश्च शारदायतनपुरश्चत्वरप्रकल्पितायां यागशालायां संभूय वैशाखशुक्लसप्तमीप्रभृति पुण्यतीर्थपरिपूरितान्कलशान्प्रतिष्ठाप्य तेष्वावाह्य तत्तद्देवताः प्रतिदिनं परिपूजयन्तो मन्त्रैरभिमन्त्रयन्तः कुण्डचतुष्टयेऽपि जुह्वतः पञ्चदशीमनुमनुजपन्तो वेदोपनिषद्भाष्यभारतभागवतादिपारायणपरायणा हरितवसनधारिणो दीक्षिताः पुरोहिताः सोमयाजिनो भट्टाः श्रौतिनः शास्त्रिणोऽवधानिनो जटावल्लभा घनपाठिनश्चेति ऋत्विजः तान्कलशान्महोत्सवेन शारदाम्बासंनिधिमुपनीय तत्तत्सूक्तपारायणपूर्वकं तैः कलशोदकैर्देवीमभिषिञ्चन्तः कुम्भाभिषेकमहोत्सवं निर्वर्तयामासुः ॥ ७५ ॥

शिवंकरैर्मञ्जुलवेदघोषैः
प्राध्मातशङ्खैः पटहप्रणादैः ।
धणद्धणद्दुन्दुभिधीरनादै-
र्द्यावापृथिव्यौ दलिते इवास्ताम् ॥ ७६ ॥

कनत्कनत्काञ्चनवस्त्रकान्ता
महार्हरत्नाभरणोज्ज्वलाङ्गी ।

देवी बभौ षोडशभिः कलाभिः
संपूर्णगात्रा विधुमण्डलीव ॥ ७७ ॥

गन्धैश्च पुष्पैरपि धूपदीपैः
संपूज्यमानां सकलोपचारैः ।
देवीं प्रणम्य प्रणतार्तिहन्त्रीं
कृतार्थतामाप तदा जनौघः ॥ ७८ ॥

वाणी चित्ते विलसतु मे नतजनरक्षाकृतदीक्षा
शृङ्गेर्यां स्वप्रियभवने विहरणलोला विमलाभा ।
विद्याकारा विबुधनुता सकलजनार्तिं शमयन्ती
विश्वाराध्या विधिगृहिणी धृतमणिवीणां ध्वनयन्ती ॥

एवं संस्तुत्य देवीं सकलजनततिः साधुवादान्वितेने
श्रीमत्कृष्णेन्द्रभूपः प्रमुदितमनसा धन्यधन्यो बभूव ।
अद्वैताचार्यवर्यः स्वमनसि मुमुदे स्वेष्टकार्यप्रसिद्ध्या
सद्यः श्रीशारदाम्बा स्वयमनुजगृहे सर्वलोकान्पुनाना ॥

इति विज्ञापनारूपं रामनामकवेर्वचः ।
संमोदयतु चेतांसि साधु वासाधु वा सताम् ॥ ८१ ॥

इति श्रीमन्महीशूरमहाराजनाल्वडिकृष्णराजास्थानकविरत्नविरुदाङ्कितेन मण्डिकल् रामशास्त्रिणा विरचिते कुम्भाभिषेकचम्पूप्रबन्धे

प्रथमस्तरङ्गः ॥



# द्वितीयस्तरङ्गः ॥

—※—

ततः सभायामुपसंहृतायां
सर्वेऽपि भोक्तुं सहसोदतिष्ठन् ।
भुक्तौ स्वपाके नियमप्रियेभ्यो
मठात्पदार्था ददिरे यथेष्टम् ॥ १ ॥

केचिद्वहन्तः स्वयमेव केचि-
च्छिष्यैश्च भृत्यैः शकटैर्नयन्तः ।
स्वस्वेप्सितं संग्रहगेहमध्या-
त्समुद्रतस्तोयमिवालभन्त ॥ २ ॥

विशङ्कटैर्वंशकटैः प्रक्लृप्ते
विशालमानेऽङ्गणकायमाने ।
पच्यानि पक्तुं परिचारकौघैः
पाकप्रवीणाः परितो ववल्गुः ॥ ३ ॥

राशीकृताः क्वापि तदा चिरोट्यः
श्रेणीकृताः फेणकमण्डिकाद्याः ।
जिलेबिघीवर्धनलड्डुकादि-
भक्ष्याणि लक्षाण्यपि लक्षितानि ॥ ४ ॥

घृतोदका पर्पटफेनपुञ्जा
शाल्यन्नराशिच्छलसैकता च ।
पाकानलौर्वामृतपायसाढ्या
महार्णवोऽभूदिव पाकशाला ॥ ५ ॥

महार्णवप्राङ्गणभूमिभागे
यथामृतास्वादकृते सुरौघाः ।
मृष्टान्नमादातुमितस्ततोऽपि
पङ्क्तीभवन्ति स्म तथा द्विजौघाः ॥ ६ ॥

मठोपक्लृप्ताः परिचारकौघाः
परःशतास्ते परिवेषणाय ।
प्रादुर्बभूवुः पुरतो द्विजाना-
मुपर्युपर्युत्सुकितास्तदानीम् ॥ ७ ॥

हाहाकृतैरप्यमितं ददाना
हूहूकृतैरप्यभितो ददानाः ।
छन्दानुसारेण मठाधिनेतुः
पुनः पुनश्चाभिमतान्यपृच्छन् ॥ ८ ॥

ते ते महान्तोऽपि जनाः स्वमध्यं
बद्ध्वा प्रवृत्ताः परिवेषणादौ ।
तेषां द्रवीभूय तु पातकानि
स्वेदच्छलात्किं नु बहिर्गतानि ॥ ९ ॥

चिरोटिकालड्डुकफेणकादि-
भक्ष्याणि भुक्तोज्झितपात्रभाञ्जि ।
महासमाराधनसंभ्रमेऽस्मि-
न्संमार्जकौघाः शकटेषु निन्युः ॥ १० ॥

ततो द्वितीयतृतीयपङ्क्त्युपविष्टानामपि परिवेषणमालोक्य तावतापि कालेन स्वस्य परिवेषाभावात्प्रज्वलितात्मनि किंचिदप्यन्त-

रमप्रदाय स्वकरावरोधिनि पाकशालायवनिकायमाने कायमाने तदन्तरालाप्रविष्टप्रतापतया कोपेनेव सुदूरं चरमगिरिशिखरोपकण्ठमुपेयुषि रविबिम्बे निस्तेजस्कतया प्रतप्ततैलातिपाचितपर्पट इव पाटलायमाने, तृतीयपङ्क्त्युपविष्टब्राह्मणभुक्तावशिष्टलड्डुकैर्भुक्तिभूतल इव तारागणैस्तत्र तत्र संबध्यमाने गगनतले, भुक्तोत्थितब्राह्मणसमाजप्रदीयमानकेसरगन्धप्रवाह इव समुदञ्चिते संध्यारागे, महाजनवितीर्यमाणकुसुममालिकासौरभलोभपरिभ्रमद्भ्रमरकदम्बैरिव वाङ्कुरितेषु तिमिरेषु, रात्रौ निद्रास्यतामतिथीनां शीतबाधानिवारणार्थमानीयमानेषु प्रच्छदनीलकम्बलेष्विव समन्ततो मन्दमन्दप्रचारेषु चान्धकारेषु, वीथीषु वाथीष्वारक्षकराजपुरुषेष्विव पङ्क्तीभूय संनद्धेषु विद्युद्दीपस्तम्भेषु निरालम्बनभोमार्गप्रयाणप्रच्युतेषु, तदन्तरमवलोक्य तिमिरैः परिवृत्य स्प्रष्टुमशक्यतया एकैकमपि कुक्कुटाण्डप्रमाणेषु वज्रपञ्जरेषु निपात्य समुद्बध्य दूरतः परिवार्यमाणतया पितरौ नः कदा समागच्छेताम् कदा वा तदङ्कमारोहेमेति ऊर्ध्वमुखमालोकमानेषु प्रभाकरप्रभागर्भशिशुष्विव उन्नीतकाचसंपुटान्तरुज्ज्वलितेषु विद्युद्दीपेषु विराजमानेषु, संभूय सकलजनेषु पश्यत पश्यत शारदाम्बाया रथोत्सवः संभविष्यति महाराजश्रीकृष्णराजसार्वभौमेण सह महीगुरुवर्यः समायास्यति तद्दर्शनेन सफलीकरिष्यामश्चक्षूंषि समागच्छत व्रजतोत्तिष्ठतेति त्वरमाणेषु, वाद्यमानेषु वाद्येषु, समुज्जृम्भमाणे महति कोलाहले ॥ ११ ॥

कुर्वाणा जननेत्रयोः प्रतिमुहुः कर्पूरसंसेचनं
तन्वाना हृदयान्तरे नवसुधापानोत्सवं प्राणिनाम् ।

नानाभावविभावनामयमहो विस्मारयन्ती भवं
दिव्यं स्यन्दनमेत्य पङ्कजभवप्राणप्रिया प्रस्थिता ॥

सा वाग्देवी सुजनविततेरैहिकामुष्मिकाख्यं
श्रेयो दातुं प्रियसुतयुगं प्रेषयन्तीव पूर्वम् ।
श्रीमत्कृष्णक्षितिपयतिपौ तौ पुरस्कृत्य वीथ्यां
मन्दं मन्दं प्रचलति रथे मङ्गलाङ्गी व्यचालीत् ॥

तदा मुदा मुम्मडिकृष्णराज-
पौत्रः स चामक्षितिपालपुत्रः ।
सुवर्णक्लृप्ते चतुरन्तयाने
व्यशोभत स्वर्णसवर्णमूर्तिः ॥ १४ ॥

अनेकदृष्टिप्रकरैकलक्ष्यः
समेत्य भूपश्चतुरन्तयानम् ।
महोन्नतं श्रेय इवाप्तुकामः
समुन्नतं स्थानमिवाप पूर्वम् ॥ २५ ॥

राजोष्णीषे नयनविषये स्वर्णपट्टाभिरामे
मूर्ध्ना सोऽयं न वहतु भुवं केवलेनेति रागात् ।
वीते भारे वलयिततनुं शेषमानीय भूमे-
र्भर्तुः शीर्षे वसनवलयं तं चकारेव देवी ॥ १६ ॥

प्रत्नरत्नरचितं क्षितिभर्तुः
कर्णकुण्डलयुगं प्रचकाशे ।
कर्णयोः पिशुनवाक्यनिरोधे
द्वारपालयुगलीव नियुक्ता ॥ १७ ॥

# देशवृत्तान्ताः ॥

आर्या अवधत्त ! बहोः कालात्प्रवृत्तासु सामगीतिषु प्रसिद्धानां नारदादिभिः शिक्षादिषु लक्षितानां भरतमुनिनापि संगीतविद्यायामङ्गीकृतानां स्वराणां सप्तानां प्रवृत्तिः शास्त्रज्ञपरम्परयोपलब्धाप्यधुनातनैरचुम्बितशास्त्रगन्धैः केवलगायनैः सममेकं नाधिगम्यत इत्यहहानुकूलविधिवैधुर्यं संगीतविद्यायाः ! तथाप्यद्यत्वे किल केचन पाश्चात्त्यसंगीतसंप्रदायविदः पण्डिता अधिभरतखण्डमप्यात्तकुतूहलाः षड्जादिस्वराणां सांप्रदायिकीं द्वाविंशतिश्रुतिसंख्यां शास्त्रैकदेशोऽपि व्यावहारिकीं रीतिमनुज्झन्तः प्रवर्तन्ते व्यवस्थापयितुमिति प्रमोदामहे । केचित्तु पण्डितंमन्या उल्लङ्घ्य शास्त्रविधिमुपेक्ष्य च संप्रदायं श्रुतीश्चतुर्विंशतिमिततयोद्घोषयितुमुद्युञ्जते । तेषां प्रयासः परं निष्फल एवेत्यभिप्रायो दाक्षिणात्येष्वौत्तराहेषु च पण्डितप्रकाण्डेषु प्रसरीसर्तीति शास्त्रसंप्रदायस्यं भाग्यं पुनरुद्बुध्यत इति सहृदयानां समोदप्राग्भारमावेदयामः ॥

---

# The Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITOR
R. Krishnamachariar, M.A.,
Vidyanidhi.

VOL. XXI.

No. 7—8.



PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM

AND PUBLISHED AT MADRAS.



Registered No. M. 103

# विषयाः।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, 1/3 Ormes Road, Kilpauk, Post, Madras (W).
6. Annual subscription is Rs. 3 only, including postage.

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ९. ] नलवर्ष आश्विनमासः । [ संचि. ७.

## सुभाषितानि ॥

साक्षरा विपरीताश्चेद्राक्षसा एव केवलम् ।
सरसो विपरीतश्चेत्सरसत्वं न मुञ्चति ॥ १ ॥

दूरस्थाः पर्वता रम्या वेश्या च मुखमण्डने ।
युद्धस्य वार्ता रम्या च त्रीणि रम्याणि दूरतः ॥ २ ॥

अहेरिव गणाद्भीतः परान्नाच्च विषादिव ।
राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥ ३ ॥

अवज्ञात्रुटितं प्रेम नवीकर्तुं क ईश्वरः ।
संधिं न याति स्फुटितं लाक्षालेपेन मौक्तिकम् ॥ ४ ॥

संनिकर्षोऽत्र मर्त्यानामनादरणकारणम् ।
गाङ्गं हित्वा यथान्याम्भस्तत्रत्यो याति शुद्धये ॥ ५ ॥

॥ श्रीः ॥

# ॥ धर्मे सर्वं प्रतिष्ठितम् ॥



प्रियपाठकप्रवराः! सन्ति खल्वस्मिञ्जगत्यनल्पा धर्माः। प्रादुर्भवन्ति च पुनर्नवनवाः संप्रति प्रत्यहम्। परं न कोऽपि तत्र तिरस्करणीयः। नापि वा परिहर्तव्यः स्वीयो धर्मो जातु धर्मान्तरे भासमानानि सुखानि वीक्ष्य। एतमेवार्थमुपदिदेश गीतास्वखिलजगदुद्दिधीर्षाकृतावतारः परमकारुणिको भगवान् भक्तवत्सलो देवकीनन्दनो वासुदेवो भारते सम्पराये समागतान्निजान् ज्ञातीन् वीक्ष्य विक्लवान्तःकरणाय पृथादेव्यास्तृतीयनन्दनाय धनंजयाय 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' 'श्रेयान् स्वधर्मो विगुणः' इत्यादिषु। जग्रन्थ भगवान् बादरायणोऽपि भारते 'न धर्मं त्यजेज्जीवितस्यापि हेतोः' इति। एष एव धर्मः प्रभवति यथावदनुष्ठीयमानोऽनल्पाय श्रेयसे सर्वत्र। निदानमप्येष एव सर्वस्य जगतः प्रतिष्ठायाः। तथा च श्रूयते तैत्तिरीये 'धर्मो विश्वस्य जगतः प्रतिष्ठा' इत्यादि। अतोऽवश्यमेवोऽनुष्ठेयो निजान्वयपरम्परासमागतः। स्वधर्माचरणसमासक्तैः कदापि न दूषणीयः परो धर्मः। यो हि यस्य धर्मः स तस्य गरीयानेव। अवितर्कितमेव निपतन्ति स्वधर्माचरणे व्यसनानि। परं तानि मनसाप्यविगणय्य सर्वथा प्रयतनीयः सर्वदा स्वधर्मपरिपालने। जीवितमपि वात्र तृणाय मन्तव्यम्। पुरा किलास्य धर्मस्य हेतोर्बहवः सुगृहीतनामधेया आत्मनो दारान्, तनयान्, सम्पदश्चाखिलामपि, पर्यत्याक्षुः। किंबहुना? केचन पुनः सुकृतिनस्तृणीकृत्य जीवितमप्या

त्मीयं पर्यपालयन्निजं धर्मम् । एवंविधाः पुरुषा ह्यस्मिन् कालेऽयं काले बाढं विरलाः । यतो हि सर्वोऽपि जनः सद्योभवायैव सुखाय प्रयतते । सद्यःसुखाशापिशाचवशीकृतैश्च कथमेष धर्मः परिपालितो भवेत् यथावत् । यः पुनरेतां सद्योभवसुखाशापिशाचिकां जयति, स एव परिपालयति कुलक्रमागतं धर्मम् । भवति च स पुमानिहामुत्र च शाश्वतिकस्य श्रेयसो भाजनम् । पाठकमहोदयाः! कालोऽयमन्यादृशः । यदि धर्माचरणे समासक्तेष्वस्मासु किमपि व्यसनं समापतेत्तदा किमप्यविचार्य परधर्मे भासमानानि सुखानि निर्वर्ण्य निरपत्रपाः परित्यजाम आत्मीयं धर्मम् । उररीकरिष्यामश्च हन्त तदात्व एव धर्मान्तरम् । आस्ताम । पुरायक्षमेद्व्रिष्टु यवनभूपालेषु शासत्सु महीमण्डलं कीदृशः समापतितः समयः । ते च हठादेवार्यधर्माभिमानशालिनो जनान् भ्रंशयामासुः । न खलु दूषणीयो यवनानामेष हठात्कारः । भगवतैव नन्वेष सृष्टस्तदानींतनानां धर्मानुष्ठानदार्ढ्यपरिचिक्षीषया । बहवोऽत्र शलभाः प्रदीप इव निपतिता आर्यधर्माद्भ्रष्टा अभूवन् । नूनं संपादितस्तैः शाश्वतिको निरयवासः । केचन पुनः सुकृतिनो धर्मं निजं जीवितं मन्वाना अद्यापि ननु मण्डयन्ति भुवो मण्डलीं निजेनावदाततमेन दिक्चक्रवालचुम्बिना यशःकदम्बकेन । तेष्वेव सुगृहीतनामधेयेष्वन्यतमः निम्नलिखितोऽस्माकं चरित्रनायकः ॥

अस्ति किल सकलसर्वंसहामण्डलललामभूतः कश्चन मेवाडनामा प्रशस्ततमो विषयः । तत्र चासीत्पुण्यश्लोकः प्रचण्डविक्रमावनामितसकलारातिमण्डलः सकलकलाभाजनं गुणशेवधिः श्रीमान्नरजपूतान्वयसिन्धुचन्द्रमा हम्मीरनामा महीवल्लभो महीं प्रशासत् ।

अव्याजं निर्मलमनल्पञ्च प्रजावात्सल्यं तस्मिन् जागर्ति स्म । अध्यतिष्ठत्तदानीं तदीयसेनायामपरः सेनानीरिव सेनाप्रधानपदवीं वृद्धः कृष्णतनयनामा रजपूतवीरः । नाभवत्तादृक्षः कोऽप्यपरः पुमान् धर्माभिमानी स्वदेशभक्तश्च । राज्ञः परमं विस्रम्भभाजनमासीत्स वीरः । किं नु वाऽधिकं वक्तव्यम् । हम्मीरभूवल्लभस्य हृदयमेव बहिश्चरमपरं स इति चेदुच्येत, तथापि नैषोक्तिर्मनागप्यतिशयकोटिमाटीकेत । एष सेनानायकः कदाचन सञ्चरन्नेकाकी बद्रूदीनखाननाम्ना यवनसेनापतिना परःशतपदातिपरिवृत्तेन सहसा निगृहीतः; स्थापितश्च कारायाम् । विदितमासीद्यवनसेनापतेः 'कृष्णतनयोऽयं दिल्लीश्वरप्रत्यर्थिनो हम्मीरभूपतेः सेनाया नायक इति । रजपूतवीरस्यास्य लाभेन महान्तमन्वभवदानन्दमेष यवनवीरः । एष कथमपि कृत्वा वशीकरणीयः, तेन हम्मीरभूपस्यैकान्तसंघटितान्यपि कार्याणि निरायासं विदितानि भवेयुरिति निश्चित्य कृष्णतनयं वशीकर्तुं सामाद्युपायचतुष्टयेनापि प्रायतत बद्रूदीनखानः । परं स्वामिभक्तः स नैकमप्यक्षरमब्रवीत्तस्य यवनवीरस्य पुरतः । तेन हि तदैष वीरः सपरिश्रमेण निराहारेण च कारावासेन दण्डितो यवनहतकेन । अथापि तस्य दुरात्मनः प्रयासः साफल्यं नाध्यगच्छत् । अन्ततस्तं तोदं तोदं विफलमनोरथः स यवनवीरः प्रेषयामास दील्लीश्वरस्य सविधम् ॥

शास्ति स्म तदा दिल्लीनगरीं महम्मदनामा दुरात्मा यवनभूपालः । आसीत्तस्य नैसर्गिको विद्वेषो रजपूतकुले आर्यधर्मे च गरीयान् । आर्यधर्मभ्रंशनपूर्वकं यवनधर्मस्योपचये यावच्छक्यं प्रयतते स्म । अध्यगच्छन्महान्तमामोदमवितर्कितं कारायां निगडितं कृष्णतनयं विलोक्य । रजपूतवीरविलोकनसमकालमेव कुर्यात्स दिल्ली-

पार्थिवस्तदीयं धर्मं भ्रंशितम् । परमसमयोपनतेन केनचन राज्य-कार्येण नाप्रभवत्तथा कर्तुम् । व्यस्मार्षीच्च कानिचन दिनानि तस्मिन्व्यापृतः कृष्णतनयम् ॥

एवं कतिपयेषु यातेषु वासरेषु कदाचन यवनभूपालस्य सभामन्दिरे काचन सभा मिलिता । तामलमकार्षुस्तदा तदीयाः सामन्ता मन्त्रिणः सेनापतयोऽन्ये च राजपुरुषाः पौरवर्गश्च । अवसरेऽस्मिन् बन्दिजनैर्गीयमानजयशब्दपुरःसरं सभागृहगतैः सामन्तादिभिः सविनयं विरचितान् प्रणामाञ्जलीन् सादरं सस्मितं चाङ्गीकुर्वन्राजसभासमुचितेन वेषेण यवनभूपालोऽनर्घतमं रत्नमयं भद्रासनमध्यरुक्षत् । अखिलमपि तदा तत्सभागृहान्तरं तदीयानामनर्घतमानां मणिमयानां भूषणानां मयूखजालैर्विसृत्वरप्रभापुञ्जप्रदीपसहस्रप्रदीपितमिव संवृत्तम् । विलोकयतां तद्वदनं यवनधर्मीयाणां परधर्मीयाणां च चेतसि सममेव पदमकार्षिष्टां भक्तिसाध्वसे । क्षणं सा राजपरिषदभवदालेख्यविलिखितेव । अत्रान्तरे यावना रक्षापुरुषाः कोशान्निष्कासितनिशिततरनिस्त्रिंशपाणयस्तां सभामानयन् जरसा समाक्रान्तसकलावयवं कमप्येकं रजपूतकुलसंभवं वीरम् । पाठकप्रवराः! स्यात्प्रायस्तर्कितं तत्रभवद्भिः 'नूनमयं परिचितपूर्वोऽस्माकं कृष्णतनयनामा हम्मीरचक्रवर्तिनः प्रधानः सेनानायक इति । क्षुत्तृड्भ्यां विक्लवस्यापि कृष्णतनयस्य वदनपङ्कजे स्फुटं चकाशिरेऽनतरसुलभाः शौर्यौदार्यदयादयः सद्गुणाः । आबभासे तस्मिन् शमप्रधानं तेजः । प्रत्यर्थिकारावासे सपरिश्रमं दण्डितस्यापि तस्य हृदयं मनागप्यक्रान्तं साध्वसेन । स्वभाव एष ननु महीयसां सहजः' । एवंविधं कृष्णतनयं वीक्ष्य परं विस्मितो

दिल्लीश्वरः साधिक्षेपमब्रवीत् रे दुरात्मन्! हम्मीरभूपस्य प्रधानः सेनानायकः कच्चिद्भवान् ॥

रजपूतवीरः— (सगौरवम्) एवम् ।

दिल्लीश्वरः— कच्चिदस्ति मुमुक्षिषेतस्तव?

रजपूतवीरः— अस्ति ।

दिल्लीश्वरः— तर्ह्यवश्यं परिपालनीयं भवता मदीयं शासनम् । नान्यथा भवेन्मोचनम् ।

रजपूतवीरः— किं तच्छासनम् । यदि भवेत् सत्वस्य, मे कुलस्य वीरजनकीर्तितस्य, आर्यधर्मस्य चोचितम् । अन्यथा श्रोतुमपि नोत्सहे ।

दिल्लीश्वरः— परित्यज्य भवदीयं पापमयं धर्ममङ्गीकरणीयो भवता यावनो धर्मः ।

रजपूतवीरः— (सक्रोधम्) अलमलम् मा वादीरग्रे, हन्त दिल्लीश्वरो भूत्वा कीदृशीं वाचमुदीरयसि; दुर्जनसुलभा नीचा वागेषा नूनमसाम्प्रतं भवतः, अहमस्मि महति रजपूतकुले लब्धजन्मा । न खलु कदाप्यार्यधर्मस्य निन्दां मर्षयामि । यथा वा भवतो यावनो धर्मो गरीयान् मङ्गलकरश्चेति महीयानभिमानः, ततोऽपि तथा मे गरीयानभिमान आर्यधर्मे । यो हि यस्य धर्मः, स तस्य गरीयानेव । किमत्र वक्तव्यम् । सर्वथानार्यं खल्वेतत् यद्भवान् प्रयतते नक्तन्दिनमार्यधर्मीयान् तदीयधर्मावहेलनपूर्वकं यवनधर्मे प्रवेशयितुम् ।

दिल्लीश्वरः— (सस्मितम्) हन्त साम्प्रतमाह भवान्, अहो तवार्यधर्मेऽभिमानः, श्रुतमार्यधर्मस्य पावित्र्यं मया, अलमलम् । (सतिरस्कारम्) मूर्ख विपरीता खलु सम्प्रति ते बुद्धिः; विचार्य पश्य, मैवं वादीः; परित्यज तमार्यधर्माभिमानम् । यदि भवसि यवनः, भुनक्षि तदा विविधान् नाकदुलभान् भोगान् । वृथा मान्वभवः व्यसनानि, हितं ते वच्मि, इतः परं यथा वा रोचते भवते ।

रजपूतवीरः— (सामर्ष सदन्तदंशनम्) मूर्ख नाहं बिभेमि व्यसनेभ्यः; मरणमप्यार्यधर्मे श्रेयो मम । परं मास्तु धर्मान्तरे प्रवेशः । यानि वा सुखानि मे धर्मान्तरे प्रविष्टस्य न तानि दुरात्मन्, भवन्ति मे श्रेयसे ।

दिल्लीश्वरः— (सकोपम्) रे मूर्ख रजपूताधम चाण्डाल! जराग्रस्तशरीरः सर्वथायं दयनीय इति मयोक्तमेवम् । मा ब्रूह्यधिकम्, स्वैरं जल्पितुं नेदं ते सदनम्, कुत्र वा तिष्ठति भवानिदानीम्! अपि जानातीदं भवान्? यदि पुनरेवं जल्पसि दुरात्मन्, अयं न भवसि पश्य ॥

रजपूतवीरः— (समन्दहासम्) राजन् विज्ञातं तव साम्राज्यशासनपाटवम्, महती खलु भूतानुकम्पा भवति, हन्त हन्त न खलु विद्यते भवादृक्षः कोऽप्यन्यः प्रभुर्न्यायनिर्णये जगत्यामस्याम् । जितं न्यायेन । अयि भो आर्याः सभास्ताराः! पश्यत, एष राजा दर्शयति मयि दयाम् । नवीना पुनरस्य पार्थिवस्य दयाकरणपरिपाटी । अहमस्य दयाया भाजनमिति । पश्यत पश्यत । नाहमस्य दुरात्मनः प्रत्यर्थिनः

कृपाभाजनी भवितुं साधारणः पुमान्। प्राणपरित्यागो-ऽपि नाम मे वरम्, न पुनरस्य कृपापात्रीभूय जीवनम्। अपि रोचते भवद्भ्यो न्यायविचारसरणिरेषा दिल्लीवल्लभस्य?

निशम्यैतानि निरातङ्कं निगदितानि कृष्णतनयस्य भाषितानि नितान्तं प्रकुपितः संवृत्तः स दिल्लीश्वरः। अखिलापि गात्रयष्टिः कम्पितुं प्राक्रमत। खरतरखदिराङ्गारसदृक्षे संवृत्ते विलोचने। आह च साक्रोशम् -- मूढ! अहो ते मौर्ख्यम्। नास्ति हन्त त्वयि विचारस्य वार्ताऽपि। नैसर्गिकं खलु पारुष्यं बालिशत्वञ्च रजपूतकुलाधिगतजनुषां भवताम्। अलमलम्। प्रथमं तावदहमेव मूर्खः। येन मयानाघ्रातविवेकगन्धे भवति प्रदर्शिता दयालुता। एष पश्य, अयं न भवसि, स्मर भवदभीष्टदेवताम्, पश्यामि कथं वा स आर्यधर्मो वध्यमानं भवन्तं रक्षति, इति निगद्य तत्पार्श्ववर्तिनां निशितखड्गपाणिनां रक्षापुरुषाणां वदनानि विलोकयामास। तेऽपि भूपालानुज्ञां प्रतिपालयन्तोऽवहिता अतिष्ठन्। राजा तस्य कृष्णतनयस्य शिरश्छेत्तुं तदाज्ञापयदेव। परं कोऽपि तस्यां सभायामासीनोऽब्दूलखाननामा यवनवीरः सरभसमासनादुत्थितो ललाटतटनिहितैकपाणिः प्रणम्य सविनयं सार्वभौम, नैष वध्य इदानीमेव दुरात्मा। एवं हि भगवतः पैगम्बरस्य निदेशः 'नैते वध्याः सहसा, यथा वा माहम्मदे धर्मे प्रविष्टा एते भवेयुर्निरायासम् तथा प्रत्यहं वर्णनीयममीषां पुरतो यवनधर्मपावित्र्यम्। योजनीयाश्चोपाया अपि विविधा एतेषां यवनधर्मप्रवेशने, एवङ्कृतेऽपि यदि नाङ्गीकुर्युर्यवनधर्मम् वध्या एव तदैत इति। अतोऽयं पैगम्बरनिदेशानुसारेणोपदेष्टव्यः प्रत्यहं यवनधर्मप्रवेशाय कतिचन दिनानि। येनाऽयं प्रविशेन्निरायासमस्माकं धर्मे।

(क्रमशः।)

॥ श्रीः ॥

# ॥ श्रीरामोदन्तः ॥

[ पूर्वतोऽनुवृत्तम् । ]

——*——

ईदृश्या वाण्या तुदन्तीं सीतां मयि गते शत्रुहस्तं यास्यसीति शपन्दूयमानस्वान्तः सौमित्रिः पर्णशालाया निरगात् ॥

तदनु तत्क्षणमेवाऽवतीर्य सुरपथाद्रन्ध्रगवेषी परिव्राजकव्रतं धारयन्दशकन्धरः प्रविश्योटजं 'सुखा भव' इति विनयावनतां सीतामब्रवीत् । अथ बाले! हृदयङ्गममूर्तिस्त्वं कं समलङ्करोषि वंशं? कुतो वा हेतोः प्रतिभयं वनमिदं समागमः? कस्य धन्यः पुमान्यमुपतिष्ठसे त्वं रहसि? इति कपटसंन्यासिना पृष्टा साऽऽगन्तुकोऽयमिति मन्वाना सप्रश्रयमर्घ्यं प्राणीय स्ववृत्तान्तं सविस्तरमकथयत् ॥

अथ कोणपसन्यासी प्रदर्श्य आन्तरमाकूतम्, को वा श्लाघेत विवासितं राघवं अशनशूरान्कांश्चन रात्रिञ्चरानाहवेऽहन्नित्यत्र किमाश्चर्यम्? वर्तन्त इन्द्रादयोऽपि मदाज्ञाप्रतीक्षाः । समस्तप्राण्यन्तकोऽप्यन्तकः सदा मत्तो भीतः कृष्णवर्णं मुखं दधानो निर्द्युतिरास्ते । हे मैथिलि! अस्ति मम 'लङ्का' इति हैमी नगरी । अधिवस मया सह तां रमणीयाम् । सङ्गच्छ युवानं माम् । जहाहि तापसमकिञ्चनं रामं' इति वदन् विज्ञाय तां विपरीतां भयङ्कराकृतिर्बाहूपपीडं समाश्लिष्याम्बरमगाहत ॥

अथोत्पलमालिकां पिशितभ्रान्त्या भषक इव हा राम! लक्ष्मण! इति रसन्तीं जानकीमपहृत्य गच्छतः पिशिताशस्य सरणिं जटायुर्नाम पक्षीन्द्रो बलाद्रुध्वा तेन चञ्चूघातमयुध्यत। अथ क्रव्यादः सन्तक्ष्य व्याजेन पक्षिराजस्य पक्षौ धरण्यां प्रलुठितं विलोक्य तं विरथोऽपि समारुह्याऽपरं स्यन्दनं परिगृह्य च जानकीं निजनगरीं जगाम। वैदेह्यपि कौशेयसंव्यानखण्डबद्धं नूपुरादि भूषणजातं शाखामृगपञ्चके गिरौ ऋष्यमूकाख्ये न्यपातयत्। दशग्रीवस्तु सम्भ्रान्तस्तत्कर्म नाऽज्ञासीत्। क्रमेण चावाप्य राक्षसीपरीवेष्टितामशोकवनिकां तत्र जनकनन्दिनीमवासयत्॥

काकुत्स्थोऽपि निहतमारीचः प्रत्यागच्छन्सौमित्रिणा यथास्थितं विज्ञापितो द्रुतमेव पर्णशालामवाप्य तत्र प्रियामविलोकयन्बहुधा विललाप 'हा हन्त! कुत्र गता सा हृदयप्रिया। सीते! मा भवाऽन्तर्हिता। नाऽयं कल्याणकरः परीहासः। अपि विलोक्य मामगृहीतमृगं तिरोभूय न भाषसे। सखि! किं सहेत मुखं मदीयं त्वद्वियोगम्। नाऽतिक्लेशय तव विरहादुःखितं माम्। हे मदिराक्षि! यद्यस्ति कौतूहलमपूर्वमृगे हरामि वा चान्द्रमसमेणम्। भव सन्निहिता। देहि वाचम्। हे कदम्ब! अपि जानासि कदम्बप्रियां प्रियां मदीयाम्? शंस मह्यं कुत्र वर्तत इति। हे शोकापनुद! अशोक! सन्दर्शय प्राणप्रियां कुरु मां भवदाख्यम्। हे ताल! चेदद्राक्षीः परिणततालोपमस्तनीं वरवर्णिनीं कथय कुत्र गतेति। भवन्ति हि कान्तावियोगिनश्चेतनाचेतनेषु प्रकृत्या कृपणाः॥

इत्थं विलप्य तत इतस्सीतां गवेषयन्तं सलक्ष्मणं राममवलोकयन् पक्षीन्द्रो जटायुर्नाम जैवातृक! लङ्काधिपती रावणोऽपहृत्य वैदेहीं गच्छन्नध्वानं रुन्धन्तं मां विधाय खड्गेन विक्षतपक्षतिमगमदित्य'भिधायाऽसह्यव्रणवेदनया ग्लायन्नमरभूयङ्गतः । दाशरथिरपि सानुजस्तस्य विधाय दाहं जलक्रियां च भूयोऽप्यरण्यानीं प्रतस्थे । पतगेन्द्रश्चोत्तमलभ्यां गतिमवाप ॥

अथ पथि यान्तौ राघवौ स्वाकर्षणेन नितरां पीडयतः शापान्महर्षेः स्थूलशिरसः क्रव्यादतां प्रपन्नस्य भुजौ चन्द्रहासाभ्यां कदलीकाण्डाविव निष्प्रयासं चकृततुः । अथ तेनार्थितौ भयङ्करं तदीयं देहं पर्वततटेऽदहताम् ॥

तदनु तदुपदिष्टमार्गेण पर्वतमृश्यमूकं गच्छन्तौ रामलक्ष्मणौ जटामयीं कबरीं दधाना शबरी फलैः परिणतैरतार्प्सीत् । परिगृह्य च तत्कृतां सपर्यां क्रमेण निर्मलजलां पम्पां प्राविशताम् ॥

इति आरण्यकाण्डः समाप्तः ॥

---

## अथ किष्किन्धाकाण्डः ॥



अथ पम्पादर्शनोद्दीपितकामो भूयोऽपि सीतामुद्दिश्य विलपन्नपि रामः 'आर्य भज स्वास्थ्यम् । त्यज्यतामियं कृपणा मतिः, अवलम्ब्यतां बलवानुत्साहः, नास्त्यन्यदुत्साहाद्बलं लोके, किं वा दुर्लभं लोके सोत्साहस्य, उत्साहवन्तो हि पुरुषा नैवावसीदन्ति कृत्येषु, अत उत्साहमेवाश्रित्य जानकीं प्रतिलप्स्याम इति सौमित्रिणा संबोधितः कथंचिद्धैर्यमुपलभ्य ततः प्रातिष्ठत ।

तदनु पर्वतमृश्यमूकं समया चरन्नधिपः शाखामृगाणां सुग्रीवो नाम वानरो राघवौ विलोक्य वालिना प्रहितौ प्रणिधी एताविति मन्वानस्ततः सुदूरमयासीत्। भीतानां हि रज्जुरपि सरीसृप इव भाति।

अथ संमन्त्र्य सचिवैः साकं दाशरथ्योर्वृत्तान्तमवजिगमिषुः सद्य एव कल्याणप्रदं कपिकुञ्जरं मारुतिं प्रास्थापयत्। विस्रम्भप्रदभिक्षुवेषोऽसौ पर्वतमृश्यमूकं समाहितः प्राप्य सप्रश्रयं काकुत्स्थावित्थमवोचत्।

'कौ युवां निर्जितकामाकारौ? कस्माच्च हेतोरद्रीन्द्रममुमागमतम्? कथयतम्। क्रूरैः क्रव्याद्भिर्व्याघ्रादिभिश्च व्याप्तोऽयं शैलोऽगम्यः खलु पञ्चजनानाम्॥'

इत्थं सविनयं पृच्छते तस्मै दाशरथिः स्ववृत्तान्तं सविस्तरमकथयत्। मारुतिरपि भ्रात्रा निराकृतेन मित्रीयता च राघवौ शाखामृगाधिपतिना सुग्रीवेण प्रहितमात्मानं प्राभञ्जनिं विज्ञापयामास। अनीनयच्च कर्णानन्दकरं स्ववचनं निशम्य मुदितान्तरङ्गौ दाशरथी समया तपनतनयम्॥

तदनु राघवसुग्रीवावुपाग्नि विधाय मैत्रीं शिवतातीनि कृत्यानि पर्यालोचयामासतुः। संजातविस्रम्भेण सुग्रीवेण दर्शितं स्वप्रियाभरणजातं निपीय लोचनाभ्यां राघवोऽतीव व्यषीदत्॥

अथ महाभाग! न युक्तं भवादृशानां शोकलालसत्वमिति लक्ष्मणोपलालनवचनात्प्रकृतिमापन्नेन दाशरथिना पृष्टस्तपनतनयो निजाग्रजवैरकारणमित्थमकथयत्॥

'देव! मायावी नाम कश्चन दैतेयो वालिना सह युद्धय-

मानस्तद्बलाभिद्रुतः प्राविशत्पातालम् । अथ तज्जिघांसुना सुषिरं छिद्र प्रविशता मदग्रजेन बिलमुखावनाय नियुक्तोऽहं पुनरागमनसमयं प्रतीक्षमाणोऽवर्ते । ततो व्यतीतेऽपि काले बहुतिथेऽनवलोक्याग्रजागमनं विपदाभिभूतः स्यादिति शङ्कमानः पिधाय दुन्दुभेर्बिलं शिलाभिर्दुःखान्धः (दुःखान्धः) किष्किन्धामगाम् ॥

तदन्वराजकं राज्यं न शोभत इति सचिवैरभिषेचिते मयि वाली मायाविनं विजित्य बलान्निर्गत्य च बिलात्पादयोः प्रणमन्तं निवेदिततथ्यवृत्तान्तमपि मां पापकारीति नगरान्निष्कासयामास । ततः प्रभृति दुन्दुभिकायविक्षेपणात्क्रुद्धस्य मतङ्गमहर्षेः शापादृश्यमूकं तत्प्रवेशानर्हमालोच्यामुमधिवसामीति ॥

अथ राघवः शोकबहुलां निशम्य वाणीमभयदानेनाश्वासितस्य कपिराजस्य प्रत्ययार्थमभ्रंकषान्सप्त महीरुहान्निजसायकेनाभिनत् । अथ संजातविस्रम्भस्तपनतनयः किष्किन्धामवाप्य वालिनमाहवायाह्वयत ॥

अथ वाली मृगमिव मृगेन्द्रो भ्रातरमभिगच्छन्नापूरयंश्चातिभयंकरेण घोषेण दिशा गुहातो निरगात् । ततः कलहायमानयोर्वालिसुग्रीवयोर्भेदमजानानो राघवः सज्जीकृतमपि बाणमायंसीत् । वालिपीडाक्रान्तः सुग्रीवो निःश्वसन्भूयोऽपि पर्वतमृश्यमूकमवाप ॥

दाशरथिस्तु विषण्णस्वान्तं क्लान्तं समाश्वास्य तं मालिकया कयापि सचिह्नं विधाय भूयोऽपि युद्धार्थं वालिनमाकारयेत्यादिक्षत् ।

भूयोऽपि युद्धार्थं किष्किन्धां प्राप्य गर्जति सुग्रीवे वाली ताराया अवगणय्य हितामुक्तिं गर्वात्समरसंनद्धो बभूव । तदनु

प्रवृद्धे कपिस्वामिनोरतिभयंकरे संप्रहारे सुत्रामपुत्रस्तीक्ष्णतरकाकुत्स्थबाणविदारितोरःस्थलः क्ष्मातले निपपात ।

विलोक्य पतितमाखण्डलसुतमाक्रोशन्तः कांदिशीका बान्धवा दिशो दश भेजुः । अथ व्रणवेदनया ग्लायता कपिराजेन हे काकुत्स्थ! छद्मतापसोऽसि । 'न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून् । न कर्णिभिर्नापि दग्धैर्नाग्निज्वलिततेजनैः ॥ अमाययैव वर्तेत न कथंचन मायया' एते हि राजधर्माः । पुण्यश्लोकस्य पुत्रोऽसि पङ्क्तिरथस्य । निहत्य निरपराधिनं मां पुण्यकृतां मध्ये किं वक्ष्यसि इत्युपालब्धो राघवः 'शाखामृग! न मया कृतमकृत्यम् । परदारगमनरूपदुष्कर्मकारी त्वं दण्ड्य एवासि । 'यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः । जले मत्स्यानिवाहिंस्युर्दुर्बलान्बलवत्तराः' । इति हि कृतधियः समनुशासति । ते च त्वादृशानां परस्त्रीगामिनां हननं राजधर्मत्वेन वदन्ति । नाकृतं तैरकारि मया' इत्यभ्यधात् । प्रत्युवाच च 'दुराचार! अवगच्छामि तव गूढवधनैपुणीमिति' निन्दन्तीं तारां 'अयि! मूढे! उचितमेव हि धन्विनां निलीय मृगनिधनमिति ॥

तदनु वाली व्रीडित इव 'देव! क्षम्यतां यदभिहितमनवगच्छता मया' इति परिसान्त्व्य राघवं समर्प्य च तस्मिन्नन्दनमङ्गदं निजपतनदुःखावनतकण्ठाय सुग्रीवाय शक्रदत्तां कामपि रमणीयां वितीर्य मालां संदिश्य च राज्यादिकं बभूव कीनाशनिकेतनातिथिः । सुग्रीवस्तु बाष्पाविलमुखः सर्वमपि भ्रातुः प्रेतकृत्यं निरवर्तयत् ॥

तदनु राघवाज्ञया जाम्बवत्प्रमुखा वानरगणास्तपनतनयं राज्येऽभ्यषिञ्चन् । इत्थं सुग्रीवं कपिराजमङ्गदं युवराजं चास्थाप्य

रघुनन्दनः परां निर्वृतिं प्रपेदे । भार एव हि प्रतिश्रुतानिर्वहणं सताम् ॥

सुग्रीवोऽपि महाभाग! दाशरथे! शरदि विचेया देवीति प्रतिश्रुत्य नामग्राहं कपिभिः स्तूयमानः प्रपेदे सानन्दं किष्किन्धाम् । तत्र च तारारुमासमेतो विस्मृत्य रामकार्यमपि माराभिहतोऽरमत । पञ्चबाणबाणाविद्धा हि कार्यं स्वमपि विस्मरन्ति ॥

माल्यवन्तमधिवसन्रामोऽपि शरदि विद्योतमानं विलोक्य चन्द्रमसं शोचन्लक्ष्मणमवादीत् । सौमित्रे! विलोकय कुशेशय-समुत्सुकान्हंसान् । नाद्याप्यायात्यसौ स्त्रीगर्धनः कपिः । ध्रुवम-तीतेऽपि वर्षाकाले प्रमत्तो गृह एव तिष्ठन्नयं स्वाग्रजपद्धतिमेव गवेषयति । सत्वरमेव गत्वा प्रबोधय दुराचारम् ॥

तदनु सौमित्री रामाज्ञया भासुरं धनुर्गृहीत्वा किष्किन्धा-मयासीत् । तत्र च कार्यजागरूको मारुतिरतिनम्रः सद्य एव तं गुहां प्रावेशयत् । जानते हि समर्था मन्त्रिणः कृत्यं सम-योचितम् ।

हनुमन्मुखाद्विदितवृत्तान्तः सुग्रीवो भीतभीतः सप्रश्रयं प्रण-मन्सौमित्रिमब्रूत 'देव!। श्रीरामदत्तेषु भोगेषु सक्तोऽहं नाज्ञा-सिषं देदीप्यमानचन्द्रामायातामपि शरदम् । मर्षणीयोऽयमपराधः प्रभो! एषोऽहमद्यैव प्रहिणोमि देव्या गवेषणाय महापराक्रमा-ञ्शाखामृगान् ॥

तदनु प्लवगेन्द्रो दक्षिणादिषु दिक्षु विचयाय सीताया हनुमत्प्रमुखान्वानरान्प्राहिणोत् । ततोऽतिक्रान्तेषु केषुचिद्दिवसेषु विनतादयो वानरसेनाधिपतयः— 'ऊर्ध्वं मासान्न वस्तव्यं वस-

न्वध्यो भवेन्मम ॥

इति निजस्वामिना मासमात्रावधेः कृतत्वात्पर्यालोच्य समयातिक्रमणं त्वरितमेव प्रत्यायासिषुः । मारुतिप्रभृतयस्त्वप्राप्त-सीतालाभा भूयोऽप्यङ्गदवचनात्तत इतोऽन्विष्योदन्यया क्लान्ता अन्तःस्थकासारं किमपि बिलं प्रविश्य तत्र मेरुसावर्णिपुत्र्याः स्वयंप्रभाया वनोद्देशमगमन् । अथ तया कृतातिथ्यास्तत्सा-मर्थ्येन कुहरादुत्तीर्येतिकर्तव्यतामूढाः प्रायोपवेशनमतयो बभूवुः ॥

तदनु संपातिर्नाम जटायोर्भ्राता विहङ्गराजस्तथाभूतान्सं-प्राप्य तान् 'हे प्लवङ्गमाः! के यूयं? किमर्थं दाशरथिकथां कुर्वन्तः परिदेवयध्वे? कुरुथ चास्मत्सोदर्यस्य जटायोः स्तुतिमि-त्यपृच्छत् ॥

अथाकर्ण्य स्ववचनं 'खगेश्वर! प्रेष्या वयं परंतपस्य भूपतेर्दाशरथेः । पौलस्त्येनापहृतां तस्य प्रियां गवेषयामः । नैता-वताप्यद्राक्ष्म । अस्मत्प्रभुणा कृतः प्रत्यागमावधिश्चातीत इति कृत्वा विषीदामः । अवश्यं म्रियामहेऽनवलोक्य रामदारान्' इति वदतो दुःखितांस्तान्संपातिः 'हे प्लवङ्गमाः! नाय-मुद्विजितुं समयो भवादृशानाम् । यतोऽपहृतद्वितीयो राज्य-भ्रष्टश्च दाशरथिः सीतायामुत्कण्ठितो वर्तते । अतो गच्छते-तस्त्वरितमेव दिशं दक्षिणाम् । तत्र च काञ्चनी कापि पुरी भवतां दृष्टिगोचरी भवेत् । लङ्काभिधानायां रावणपालितायां तस्या-मवश्यं द्रक्ष्यथ साध्वीं रामप्रियामिति ब्रुवाण आनन्दयामास ॥

(क्रमशः ।)

॥ श्रीः ॥

# ॥ साळुवाभ्युदयम् ॥

[ पूर्वतोऽनुवृत्तम् ]

—*—

परं जलाप्तिः परराजहंसा-

क्रमोऽप्यभूत्केवलमम्बुजेषु ॥ ४४ ॥

रागोऽधरोष्ठे रमणीजनानां

मान्द्यं गतौ मध्यम एव कार्श्यम् ।

वक्रत्व... निर्वचनेऽपि केशे-

ष्वासीच्च नीवीहरणं रतादौ ॥ ४५ ॥

अमुष्य कल्याणपुरीति गीत-

मासीन्निवासः पुरमन्वितार्थम् ।

हतासुरांशाद्विषतो वलारे-

रंशस्य साक्षादमरावतीव ॥ ४६ ॥

अशेषरत्नप्रकरालयं या

यस्या गभीरा परिखा चकास्ति ।

आदाय सारानखिलान्नृपेण

बन्दीकृतो धैर्यजितः किमब्धिः ॥ ४७ ॥

आकर्षणस्तम्भनमोहनार्ह-

....वीक्षाशिखिपिञ्छिकाभिः ।

मृगेक्षणाभिः कृतदृष्टिबन्धा

विलासिनो यत्र परिभ्रमन्ति ॥ ४८ ॥

स्वैरं रसात्सूचितयुद्धरङ्ग-
सुखावतारा अपि यत्र वीराः ।
स्खलन्त्यहो तीक्ष्णकटाक्षपात-
कुन्ताग्रविद्धाः कुटिलेक्षणानाम् ।। ४९ ।।

अदृश्यमूर्तिर्मृगयुर्मनोभू-
रन्यापदेशं पुरतोऽर्पिताभिः ।
बध्नाति यस्यां युवमानसैणा-
न्विलासिनीवीक्षणवागुराभिः ।। ५० ।।

शचीव शक्रस्य रमेव शौरे-
श्छायेव भानोर्गिरिजेव शंभोः ।
सरस्वतीव द्रुहिणस्य तस्य
देवीपदं कामलदेव्ययासीत् ।। ५१ ।।

क्षान्त्येव भूमा क्रिययेव वेदो
धृत्येव वीरो दययेव धर्मः ।
नवार्थसिद्ध्येव गिरां निबन्धो
नराधिपोऽदीपि तया नताङ्ग्या ।। ५२ ।।

श्रीगुण्डयः सालुवमङ्गिदेवः
सावित्रिपूर्वोऽपि च माङ्गिदेवः ।
वीरोबलो गौतय आदिराजः
षट् तेन तस्यां जनिताः कुमाराः ।। ५३ ।।

शंभोः षडङ्गैरिव तैः प्रसूतै-
स्तस्मात्स्वतेजःपरिपूरिताशैः ।

जगद्यथासीम्नि कृतं कुलं तत्
षोढा विभिन्नं भुवि शोभते स्म ॥ ५४ ॥

तेषामनुज्ञामवगम्य वीरः
शौर्योदधिः सालुवमङ्गिदेवः ।
आशा विजित्यापि च दाक्षिणात्य-
मसौ सुरत्राणमगाज्जिगीषुः ॥ ५५ ॥

यस्मिन्खरादीनहितान्विजित्य
रामः सुरत्राणवशंवदोऽभूत् ।
अहन्सुरत्राणमसह्यवीर्यं
महानहो! सालुवमङ्गिदेवः ॥ ५६ ॥

कृती ततः केरळराजचोळ-
पाण्ड्यादिभूपेषु भयद्रुतेषु ।
शौर्येण जित्वा युधि चम्बुरायं
तमप्यसौ स्थापयति स्म राज्ये ॥ ५७ ॥

तत्स्थापनाचार्यतया तदादि
तथा स्ववंश्याननयत्प्रतीतिम् ।
नित्ये यथा गुर्जरनिर्जयेन
स गुर्जरीयाट्टविपाटसंज्ञाम् ॥ ५८ ॥

प्रत्यर्थिनस्तेन पराजिता य-
त्पतत्रिणः सालुवपत्रिणेव ।
तदादि सर्वेऽपि च सालुवेन्द्र-
संज्ञां भजन्ति स्म तदीयवंश्याः ॥ ५९ ॥

कठारिकास्त्रेण कमप्यजैषी-
  द्यदायमुद्याद्वि...तदादि ।
ते सालुवा यान्ति जगत्युदग्रां
  कठारिकासालुव इत्यभिख्याम ॥ ६० ॥

आलङ्कमामेरु रिपूनशेषा-
  नशोषयत्सालुवमङ्गिदेव: ।
षडङ्गवाणीमयतुङ्गशृङ्गं
  श्रीरङ्गमोङ्कारमथागतोऽभूत ॥ ६१ ॥

आलोकयन्यत्र निमीलिताक्ष-
  मन्त:स्थिताशेषसुखासुखानि ।
दीनावने जाग्रदुपैति तीव्रं
  नानाजगन्नर्तनसूत्रधार: ॥ ६२ ॥

सह्यात्मजाद्वीपतटे यदीय-
  सुवर्णगेहं स्वपदम्बुजाक्षम् ।
अन्तर्निलीनाद्भुतचञ्चरीक-
  हेमारविन्दभ्रममातनोति ॥ ६३ ॥

ममात्मजासाविति क्लृप्तवादा
  गङ्गादिभि: किं जलधे: पुरंध्री ।
नीत्वा यदन्तर्नियतं सकान्तां
  लक्ष्मीं परीत्यावति सह्यकन्या ॥ ६४ ॥

महीपतेर्मान्यसहस्रसाल-
  ग्रामान्प्रदातुं कृपणावनस्य ।

अष्टाक्षरीसिद्ध्यवधिव्रतार्थ-
मष्टाग्रहारार्पणमद्भुतं किम् ॥ ६५ ॥

जेतुर्दिशामष्टदिगीशमूर्ते-
रष्टाङ्कयोगादधिरूढभूम्नः ।
अष्टाग्रहारार्पणमस्य युक्त-
माराधनायाभवदष्टमूर्तेः ॥ ६६ ॥

श्रीरङ्गसंस्थापनजातकीर्त्ति-
मारभ्य तं चन्द्रकुलावतंसाः ।
सर्वेऽप्यगच्छन्बिरुदं धरण्यां
तत्स्थापनाचार्य इति प्रतीतम् ॥ ६७ ॥

आशानिग्रहतो विगृह्य सकलानन्तः स्थितानप्यरी-
न्स्वाधीनः प्रकृतौ स्थितः सकरुणं पश्यञ्जगत्स्वात्मवत् ।
सोदर्यैः सह पञ्चभिः समरसैर्भूतैरिवात्मा वस-
न्स्वीकुर्वन्विषयान्गुरोः पदमगाच्छ्रीमङ्गिदेवस्ततः ॥६८॥

तेष्वेकोऽजनि गौतयस्त्रिभुवनख्यातस्ततो वीर्यतः
कर्णाद्येषु पृथासुतेष्वनुपमं पार्थोऽभिमन्युं यथा ।
प्रासूत प्रथितं कुमारमतुलं श्रीगुण्डदेवाह्वयं
यं वैकुण्ठमखण्डभूमिभरणोत्कण्ठावतीर्णं विदुः ॥ ६९ ॥

निष्कण्टकीकृत्य धरामसौ ततो
निवेश्य राज्ये च नृपात्मजाभिः ।
कृती ततो गौतयभूमिपालः
शमोन्मुखः पुण्यमगादरण्यम् ॥ ७० ॥

इति भुवि नरसिंहनाम्नावातीर्णस्य लक्ष्मीपते:
सुचरित इह गुण्डयेन्द्रात्मजस्यातिसौम्याकृते: ।
सबिरुदकविसार्वभौमाधितारापते: सालुवा-
भ्युदय इति कृतौ कवेरादिम: सर्ग एषोऽगलत् ॥

इति मेदिनीमीसरगण्डगुर्जण्डयनरसिंहराजमहाराजचरिते
बिन्दूदकविप्रपितामहडिण्डिमकविराजनाथकृतौ सालुवा-
भ्युदयनाम्नि वीराद्भुतरसे...

प्रथम: सर्ग: ॥



## अथ द्वितीय: सर्ग: ॥



राज्यं प्रभावगुरुणा गुरुणा वितीर्ण-
मासाद्य सोऽयमरुचच्चतुरर्णवान्तम् ।
सर्वावनार्थमुदयी तमसो निहन्ता
सन्मार्गमर्क इव चन्द्रमसाधिरूढम् ॥ १ ॥

रत्नाकरोरुरशनां ललितार्थभोग-
हृद्यां प्रजोदयकृते करदां रसेन ।
मल्लाम्बिकां स महिषीपदमाननीयां
क्षोणीमिवाभजत गुण्डयभूमिपाल: ॥ २ ॥

भूभृत्कुलावतरणां भुवनेशमात्र-
भावोचितां प्रियतमार्धशरीरभूताम् ।
साध्वीं शिवामिव हर: स भजन्नपि द्रा-
क्क्षोणीपतिर्न भजति स्म समं कुमारम् ॥ ३ ॥

वन्यद्विपेन्द्रमिव शृङ्खलयावबद्धं
रुद्धं मृगाधिपमिवायसपञ्जरेण ।
आशङ्कते स्म तमसेव गृहीतमिन्दु-
मात्मानमन्तिमऋणेन पिनद्धमेषः ॥ ४ ॥

धैर्यं सुतानुदयतः सहजं स मुञ्च-
न्गोष्ठीमपास्य विदुषामपि गुण्डयेन्द्रः ।
सर्वं निधाय समवाप्य च राज्यभारं
चिन्तामगाहत भृशं जननिर्विशेषम् ॥ ५ ॥

आरभ्य चन्द्रमसमस्खलितप्रसूति-
र्वंशोऽयमेष्यति मयैव सहावसानम् ।
अज्ञानतो भवति कश्चिदभाग्ययोगा-
न्निःसंशयं तनयजन्मनिषेधहेतुः ॥ ६ ॥

आशीर्वचांसि महतामफलानि तस्मा-
दन्यादृशान्यभिमतार्पणकल्पवल्ल्यः ।
संतोषिता न खलु किं धरणीसुरास्ते
मृष्टाशनेन नियतं बहुदक्षिणेन ॥ ७ ॥

यद्वा ललाटतटलोलललन्तिकाश्म-
बालातपद्युतिमनोज्ञमुखारविन्दः ।
आत्मीयबिम्बहरणत्वरितः कदा मे
दृश्येत रत्नभुवि जानुचरः कुमारः ॥ ८ ॥

अव्याजशुष्करुदितान्तरितात्ममन्द-
हासं जनैरसकृदर्पितमङ्कमङ्कात् ।

पश्यन्त्यहो सुकृतिनः परितः स्वबिम्ब-
मव्यक्तवर्णमधुरं सुतमालपन्तम् ॥ ९ ॥

तद्दुष्करं विरचयामि तपो मुरारे-
रावासमन्दिरमहोबिलमभ्युपेतः ।
सद्यो ममेष्टफलदो भविता स एव
नम्राभयार्पणपरो नरसिंहमूर्तिः ॥ १० ॥

तस्य प्रसादमहिमा यदि तेन शक्य-
मुत्कूलपैतृकऋणार्णवमुत्तरीतुम् ।
नैवान्यदस्ति शरणं नरसिंहरूपा-
ल्लक्ष्मीपतेर्भुवनरक्षणजागरूकात् ॥ ११ ॥

इत्याकुलो दयितया सह राजसिंहः
कर्तुं तपस्तनयकाङ्क्षितदायि तीव्रम् ।
आश्चर्य ... ....
मालोकमात्रशमिताघमहोबिलाख्यम् ॥ १२ ॥

बिम्बच्छलात्स्फटिकभित्तिषु गन्तुमिच्छ-
न्पातालल्लोकमपि पन्नगनिग्रहाय ।
यत्र ध्वजाप्रलिखितो
मुद्यन्निव त्रिदशलोकभयं तनोति ॥ १३ ॥

यस्मिन्सदा यजनधूमततिः समुद्य-
द्राहुभ्रमं दिनकरस्य विधोश्च दत्ते ।
वेलातिगस्फटिकगोपुरबिम्बिताङ्गाः
स्नान्तीव दिव्यमुनिभिस्त्रिदशाः सदैव ॥ १४ ॥

हारमौक्तिकगणा हृदि राज्ञः
शारदामभि नमस्कृतिकाले ।
प्रस्नुतस्तनमुखात्प्रविकीर्णाः
स्तन्यबिन्दव इवाबभुरस्याः ॥ १८ ॥

पाणिर्विभोः काञ्चनकङ्कणाढ्यः
सत्पात्रदानं सततं विधातुम् ।
सत्येन पातुं सकलांश्च लोका-
न्बद्धावलग्नः किल संबभासे ॥ १९ ॥

अहीश्वरान्महीभरं महीश्वर त्वमग्रहीः
पुनर्न पातय प्रभो कदापि तस्य मूर्धनि ।
इतीव पन्नगेश्वरी पदं गतेव याचितुं
सुवर्णवेष्टनी तदा महीभृतः पदे बभौ ॥ २० ॥

ततश्च,

श्रीचन्द्रशेखरगुरुः श्रिततोषणार्थ-
मारुह्य रूप्यशिबिकां रमणीयरूपाम् ।
मूर्तीभवन्तमनुरागमिवेन्दुमौलेः
काषायवस्त्रमनघं परिवृत्य रेजे ॥ २१ ॥

भूगुरोः शिरसि रत्नकिरीटं
भक्तलोकहृदये तनुते स्म ।
अन्तरुज्ज्वलति तस्य तपोग्नौ
तत्स्फुलिङ्गनिकरोद्गमशङ्काम् ॥ २२ ॥

पौरमुख्यकलितानुपचारा-
न्प्रेक्षयन्यतिपतिः पुरवीथ्याम् ।

भक्तिनम्रजनतामनुगृह्ण-
न्मुक्तिदाननिपुणः प्रययौ सः ॥ २३ ॥

दूरे विलोक्यापि यतीश्वरं तं
भक्त्या शिरःशेखरिताञ्जलिः सन् ।
ननाम लोकः किमु तत्क्षणे स्वं
त्यक्त्वोद्गतैः स्वैर्दुरितैर्विभुग्नः ॥ २४ ॥

भक्तिभावभरिते नृपनेत्रे
निश्चलं क्षितिगुरौ व्यतिषक्ते ।
तस्य सर्वनृपपूज्यपदत्वे
मूलकारणमिवेक्षितुकामे ॥ २५ ॥

मन्दमन्दमथ सर्वजनौघः
स्पन्दते स्म पुरतः पुरवीथ्याम् ।
मन्दिरेषु मिलिताः पुरकन्याः
संददुः कुसुमलाजसुवृष्टीः ॥ २६ ॥

मध्ये देवी धुरि नरपतिस्तत्पुरस्ताद्यतीन्द्र-
स्तस्याप्यग्रे सकलजनतेत्युत्सवोऽयं प्रवृत्तः ।
जन्मन्येकं फलमुपनतं पश्यतेति प्रमोदा-
द्भूयो लोके निगदति पुरे कोऽपि कोलाहलोऽभूत् ॥

दिव्यैर्दीपैर्दिवसति सदा रात्रिभागेऽपि रम्ये
पार्श्वोन्नीते बिरुदनिचये वादिते वाद्यजाले ।
दर्शं दर्शं नृपमुखविधुं वर्धितोत्साहवार्धि-
र्वाचातीतं प्रमदमभजत्सर्वलोकोऽपि पुण्यात् ॥२८॥

निशीथे संप्राप्ते तदनु विरमत्युत्सवभरे
निजावासान्प्राप्ता निखिलजनतापि प्रमुदिता।
स्मरन्तः स्वप्नेऽपि स्वगुरुनृपदेव्युत्सवविधां
व्यतीयुस्ते ते तां रजनिमवशिष्टां क्षणमिव ॥ २९ ॥

अथ प्रभाते यदुवंशकेतु-
र्निर्वर्त्य राजा नियमाभिषेकम्।
संध्यादिकर्माणि निषेव्य भक्त्या
गत्वाथ चक्रे गुरुपादपूजाम् ॥ ३० ॥

प्राज्यैश्च भोज्यैः परिपूरिताज्यैः
संतर्प्य विप्रान्सह दक्षिणाभिः।
गुरोश्चरित्राण्यवकर्णयन्स-
न्दिनं स तत्सार्थकयांचकार ॥ ३१ ॥

अथ सायमुत्सुकितमानसैर्जनै-
रधितुङ्गमत्र निशि शारदाम्बया।
क्रियते विहारविधिरात्तनौकये-
त्यनुकूलदेशमिलितैरभूयत ॥ ३२ ॥

श्रीमान्कृष्णक्षितिपतिमौलि-
र्भक्त्या देवीभवनमुपेत्य।
भव्यं स्वर्णाम्बरमपि हारं
दत्त्वा देव्यै कृतनतिरासीत् ॥ ३३ ॥

ततः खलु,

भूभृद्भिः शिरसि निवेश्य सेविताभ्यां
पादाभ्यां मणिमयपादुके दधानः।

श्रीकृष्णक्षितिपतिदत्तपाणिपद्मः
तुङ्गायास्तटभुवमाप संयमीन्द्रः ॥ ३४ ॥

तदनु महिते तुङ्गातीरे समुन्नतमासनं
क्षितिपतिकृते दत्त्वा सोऽयं स्वयं समुपाविशत् ।
सकलजनतास्तावत्सद्यस्तदीक्षणकौतुका-
दहमहमिकाभाजः काप्यकार्षुरतित्वराम् ॥ ३५ ॥

ततस्तत्र तत्र प्रदीप्तेषु दीपे-
ष्वनेकेषु वाद्येष्वलं वादितेषु ।
सुधर्मासधर्मा जले कापि नौका
व्यचालीद्वयहार्षीद्यया शारदाम्बा ॥ ३६ ॥

उत्तराद्दक्षिणं दक्षिणादुत्तरं
संचरन्ती मुहुः सर्वतोऽप्यम्भसि ।
या सुधासागरे रत्ननावाचर-
त्सा पुरावासनावासितेवाबभौ ॥ ३७ ॥

नद्याप्तलीलमनवद्याभशृङ्गगिरिविद्यात्मदिव्यविभवं
पद्या समस्तत्रिधविद्यागमाय भरणोद्यानुभावभरितम् ।
गद्यावलीकलितपद्यानि यस्य तनुराद्या भवेन्त्रिभुवने
तद्याचितानि मम हृद्यात्मकं दिशतु विद्याधिदैवमपरम् ॥

इति मुहुरभिवादयन्जनौघः
सरसिजसंभवसद्मपद्महंसीम् ।
तटभुवि परितः प्रदीपितासु
व्यतनुत दृष्टिमथाग्निवर्तिकासु ॥ ३९ ॥

विगलदनलसाराः केचिदाकाशबाणाः
सरभसममराणां पद्धतिं लङ्घयन्तः ।
सुर सुर सुर कृष्णक्ष्मापतेः कीर्त्तिलक्ष्मीं
पठ पठ पठ साध्वित्यानमन्ति ब्रुवन्तः ॥ ४० ॥

तारामण्डलनामका वयमतस्तेजस्विनां मण्डला-
त्तेजोऽस्मासु दृढं दृढं दृढमिति प्रीताः प्लवन्ते नभः ।
तारामण्डलमेत्य तत्र बहुधा रूपं प्रकाश्योज्ज्वलं
को वासीह पटो पटो पटविति प्रोच्चार्य नेमुः शनैः ॥४१॥

ततश्च क्वचिच्चक्रबाणविशेषस्तु,

रौक्ष्यक्षीबतयायं
विनदन्क्रोधाद्विषं प्रति भ्रमति ।
गर गर गर गर दूरे
चर चर चर चर चरेति वक्तीव ॥ ४२ ॥

यस्मादुत्सवकाले-
ष्वतिशयितापैर्विभाति संदृश्यः ।
तस्मादेष पुरस्ता-
न्महत्तापो नाम तेजसो भेदः ॥ ४३ ॥

ततस्तत्र तत्र तेषु तेषु केषुचिदाम्रमात्रेषु नानावर्णेषु तेजो-
वर्तिभेदेषूद्गतेषु,

तादृशोत्सवमुदीक्ष्य तु तुङ्गा
संप्रपद्य हृदये परितोषम् ।

नीलपीतहरितैरथ रक्तैः

कन्दुकैर्विहरतीव मनोज्ञैः ॥ ४४ ॥

ततश्च केचिद्धौणबाद्यविशेषाः ।

सुधां सुधां सुधांशुजां यदीयवाग्यशः श्रियः

सभां सभां सभां सतामधीनयन्ति चानिशम् ।

शुभं शुभं शुभाकराय भूभुजे भवेद्भवे-

त्प्रभुं प्रभुं प्रभुप्रिया इति ब्रुवन्त्यहो इमे ॥ ४५ ॥

इति तत्र महोत्सवक्रमा-

न्सकलांस्ताननुभूय संमदात् ।

स्वगृहाभिमुखास्ततो जना

निरगच्छन्सह शारदाम्बया ॥ ४६ ॥

अन्येद्युरखिलजनानन्ददायिनि भगवति राजीवबान्धवे, सत्वरमात्मानं प्रत्युद्गच्छद्भिश्चक्रवाकमिथुनैरर्घोदितं निशामहोत्सववृत्तान्तमाकर्ण्य समुत्सुकितमानसः सन्नहमेक एव वञ्चितोऽस्मि दैवेन तमदर्शयता मम । भवत्वनुक्रमेण ज्ञास्यामि । अद्य प्रबोधितानपि रात्रिनिद्रापरवशान्पद्मबन्धून्पृष्ट्वा अलं प्रतिपक्षानपि रात्रिवृत्तसाक्षिणोऽन्धकारान्मदनभिमुखान्प्रष्टुमनुचितम् , अतः कुत्र दिशि कियद्दूरं गतो वा स महोत्सव इति स्वयमेवालोकितुमिवोदयगिरिशिखरमारूढे सति, महाराजश्रीकृष्णराजसार्वभौमोऽपि कल्योचितसंध्यादिकर्म निर्वर्त्य गुरुवरमद्वैताचार्यं प्रणम्य तेन सह किमपि संलपंस्तदाशिषः समासाद्य समन्दस्मितेन गुरुणा कथंचिदनुज्ञातप्रस्थानः स्वाप्तसचिवेन विद्याविनयविवेकविक्रमालंकृतेन मिरजाख्यमहाशयेन स्वाप्तबन्धुना शरधिगम्भीरेण गोपालकृष्ण-

राजेन च सह मोटार्नामकमहारथमाधिरुह्य महीशूरमहाराजधानीं प्रति प्रातिष्ठत ॥ ४७ ॥

ततश्च मोटार्नामकमहारथोऽयं यावन्महीशूरपुरीमुपेयात्तावदेवाहमपि अनेककोटिगुणितायाममध्वानमत्येमीति संकल्प्येव झटित्यपरगिरिशिखरोपकण्ठमधिगच्छति भगवति भास्करे, अद्वैतविद्यानिधिर्गुरुवरोऽयं समागतान्सभासदः सभाजयितुकामः श्रीशारदासंनिधौ विद्वत्सभां विधाय समर्यादमाहूतैस्तैस्तैर्विद्वद्भिर्वैदिकैर्लौकिकैश्च समलंकृतायां सभायामग्रासनासीनः स्वयमवतस्थे ॥ ४८ ॥

ते ते महान्तो गुरुराट्समीप-
सागत्य मोदादभितः परीयुः ।
तेषां समाजे सनकादिमध्ये
ब्रह्मेव स ब्रह्मावदालुलोके ॥ ४९ ॥

आदौ प्रवृत्तो निगमे विचार-
स्ततस्तु मीमांसकतन्त्रसारः ।
ततस्ततः कर्कशतर्कवादः
सर्वत्र वेदान्तपथेऽनुवादः ॥ ५० ॥

ततोऽपि वैयाकरणीयवादः-
स्ततस्त्वलंकारविदां विवादः ।
मध्ये च मध्ये कवितविचारः
सर्वत्र वेदान्तपथे प्रचारः ॥ ५१ ॥

तदनु गुरुवरेण्यस्तानिमान्सभ्यलोका-
न्स्मितलवपरिपूतापाङ्गभङ्गीतरङ्गैः ।

सपदि समनुगृह्णन्संगतार्थैः समेताः
मधुरमधुरमेवं मञ्जुवाणीरभाणीत् ॥ ५२ ॥

पूर्वं तावद्भुवनमहिताः शंकराचार्यवर्याः
कष्टैर्यत्नैरपि परकृतं शास्त्ररक्षां वितेनुः ।
आस्थानेऽस्मिन्वयमपि तथा युक्तमालोचयामः
सर्वे यत्नं यदि विदधते शास्त्रवृद्धिस्तदा स्यात् ॥५३॥

इत्यादीनि मधुरमधुराणि परमपावनानि श्लाघ्योदर्काण्यत्यावश्यकानि युक्तियुक्तानि कालोचितानि च वचनान्युपदिश्य, सकलाञ्जनानानन्दयति भगवति भुवनगुरौ, मठीयसर्वाधिकारिणि प्रथितयशसि श्रीकण्ठशास्त्रिवर्ये, सभावृत्तान्तमालम्ब्य श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनामपदानप्रपञ्चनपावनीकृतैर्वचोभिः शारदायतननिर्माणनियमनं तन्निर्मातृकजनप्रदर्शितभक्तिभारांस्तत्तादृशपरमगुरूणां निरन्तराराधनार्थं द्रमिडमलयाळादिदेशादागतरामचन्द्रार्यप्रभृतिमहाजनसभाविनिर्णीतसहायद्रव्यपट्टिकां च विज्ञाप्यानितरसाधारणवाग्धोरणीं प्रकाशयमाने, तावन्महोत्सवपूर्वकमानीयमानानि श्रीमद्बरोडागायकवाडिश्रीसयाजिमहाराजेन सभक्तिप्रकर्षं प्रेषितानि महार्होपायनानि श्रीमज्जगद्गुरुपादयोः समर्पयति तदास्थानपण्डिते अमृतरामशास्त्रिवर्ये, प्रपन्नप्रसादोन्मुखः श्रीमानवनिगुरुः, श्रीमद्बरोडामहाराजदंपत्योर्मङ्गलाशासनपूर्वकममूल्यवसनाभरणादिसंमाननान्यनुप्रेष्य महापण्डितानां च तुष्टये महामहोपाध्यायौ हरिहरशास्त्रिसुब्रह्मण्यशास्त्रिवर्यौ श्रुतिशिरोभूषणबिरुदाभ्याम्, वैद्यनाथशास्त्रिवर्यं मीमांसाकण्ठीरवनामबिरुदेन, विरूपाक्षशास्त्रिवर्यं न्यायपञ्चा-

॥ श्रीः ॥

# ॥ सहृदया ॥

सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ९. ] नलवर्ष कार्तिकमासः । [ संचि. ८.

## सुभाषितानि ॥

विषस्य विषयाणां च दृश्यते महदन्तरम् ।
उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥ १ ॥

अकृत्वा पौरुषं या श्रीर्विकासिन्यपि किं तया ।
जरद्गवोऽपि चाश्नाति दैवादुपनतं तृणम् ॥ २ ॥

अक्षराणि परीक्ष्यन्तामम्बराडम्बरेण किम् ।
शम्भुरम्बरहीनोऽपि सर्वज्ञः किं न कथ्यते ॥ ३ ॥

प्रमदा मदिरा लक्ष्मीर्विज्ञेया त्रिविधा सुरा ।
दृष्ट्वैवोन्मादयत्येका पीता चान्यातिसञ्चयात् ॥ ४ ॥

सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।
यदि दैवात्फलं नास्ति छाया केन निवार्यते ॥ ५ ॥

॥ श्रीः ॥

# ॥ धर्मे सर्वं प्रतिष्ठितम् ॥

——※——

[पूर्वतोऽनुवृत्तम्।]

जातु न बिभ्यति मरणादेते। नातोऽस्य विधेया मरणशिक्षा। यदयं प्रविशेदस्माकं धर्मे, तत्रैव यवनानां श्रेयः परमम्। ये पुनर्यवना आर्यधर्मीयाणां यवनधर्मानुसरणं साक्षाच्चक्षुर्भ्यामीक्षन्ते, न तेषां सुकृतं सुलभं वर्णयितुम्, इतः परं महाराज एव प्रमाणम्। इति वाचमाचष्टे। राजा तु तदा भवतु यथा रोचते भवते, भवानेवात्र नियुज्यते, यथायं प्रविशत्यस्माकं धर्मे तूर्णं दुरात्मा, प्रयतनीयं तथा भवता। एष तव हस्ते समर्प्यते। अवहितेन रक्ष्यताम्। महानेष कपटतन्त्रविचक्षणः। कथमपि कृत्वा मुच्येत बन्धनादिति निगद्य कृष्णतनयमबदूलखानहस्ते समर्पयामास। ततो विसर्जिता सा राजपरिषत्। कोपारुणनयनो राजा सामर्षं निरीक्षमाणः कृष्णतनयं प्रातिष्ठत प्रासादमात्मनः। राजपुरुषा अपि ते सर्वे स्वं स्वं सदनमयासिषुः। अबदूलखानोऽपि तं रजपूतवीरं स्वरक्षापुरुषहस्ते समर्प्य कारायामेष स्थापनीय इति तानाज्ञाप्य स्वालयमाससाद। अबदूलखानरक्षापुरुषाभ्यां बन्धनालये निगडितः कृष्णतनयश्चेतसि 'हा हन्त सर्वथानार्यमाचरितं यवनभूपालेन। न मे स्यादेवंविधं व्यसनं दत्तायामपि निधनशिक्षायां राज्ञा। एष यवनहतकोमहान् क्रूरः। कदा पुनः कथं किंवाकुर्यादेष इति न खलु भवति विदितं कदाऽपि साक्षान्निरयवास एवास्य कारालये निवसनं

नाम । इति स्मारं स्मारं व्यथतेस्म । पाठकप्रवराः ! किं कुर्यात्तपस्वी । तस्य पाणी पादौ च निगडितौ दृढतरं लोहमयशृङ्खलाभिः । न तस्य हस्तपादं प्रसरतिस्म मनागपि । सर्वेऽप्युपायास्तस्य विनाशं गताः । केवलमुपायान्तरमलभमानो महतीं व्यथां चेतस्यनुभवन् कारायां कालं यापयितुं प्रचक्रमे ॥

पाठकप्रवराः ? कथयत का वा भवेत्समयेऽस्मिन्रजपूतवीरस्य दशा । किं ब्रूथ ? विगतधैर्यः केवलं व्यसनमेवात्मनः शरणं मन्वानः कारालये तूष्णीं स्थितः स्यादिति । न हि न हि, न खलु स कृष्णतनयः साधारणो वीरः, वीरजन सुलभा एव विचारतरङ्गास्तस्य हृदि प्रादुर्भावयामासुरात्मानम् ? येन हि महत्स्वायोधनेषु सङ्ग्रामकुशलान् प्रत्यर्थिभटान् विजित्यासादिता शरच्चन्द्रचन्द्रिकासमुज्वला समाक्रान्तरोदः कुहरा कीर्तिराशिः । यस्य नामाऽपि नाम जनयति प्रत्यर्थि पार्थिवेभ्यः श्रवणसमकालमेव साध्वसम् । कथं तस्य चेतस्याविर्भवेयुः सामान्यजन सुलभा विचारलहर्यः । कदा कदा च चेतसि चिन्त्यमानान्विचारान्मुखेन निरातङ्कं सहसोच्चारयामास । तदा सः हा हन्त किं कुर्याम् । मग्नोऽस्मि सर्वथा नितान्तं पारतन्त्र्यपङ्के । एतौ मे चरणौ करौ च दृढतरं निगडितौ लोहमयशृङ्खलाभिः । निरञ्जनतया ममाङ्गेषु सत्वं क्षैण्यमधिगन्तुं प्राक्रमत । समयेऽस्मिंस्ते पापा यवना यदि वागच्छेयुर्यवनं विधत्तुं माम्, किं वा विधेयन्तदा । हन्त हन्त किं विधेयमिति वदामि । अतिमात्रं खल्वहं मूढः । भवतु, यावदस्मिन्देहे प्राणाः, न तावदहं भवामि यवनः । यो वा हठान्मां यवनं चिकीर्षुरागच्छति,

आगच्छतु सः । नायं कृष्णतनयः साधारणो वीरः । आर्यधर्म-परिपालने प्राणानपि तृणाय कुर्याम् । को वागच्छति, आगच्छतु । पश्यामि तस्य बलम् । करिष्ये च तं वैवस्वतपुरातिथिं करगतयैवानया शृङ्खलया । आगच्छतु आगच्छतु । न मे प्राणा आर्य-धर्माद्गुरवः । एवमादीनि वीरजनोचितान्येवाब्रवीद्वचांसि ॥

अथैवं जल्पत एव व्यपगते कियत्यपि समये सहसा समागतस्तत्राबदूलखानः । परं नाशृणोत्कृष्णतनयस्यैकमपि वचनम् । यावत्स दुरात्मा यवनवीरः कारायां पदं स्थापयति, तावदेव कृष्ण-तनयस्य चित्तवृत्तिर्विभिन्ना संवृत्ता । वीक्ष्य यवनवीरं प्रकामं प्रकुपितः स चेतसि— हन्त कियदयं प्रयतते दुरात्मा धर्मान्मां भ्रंशयितुम् । इदानीमेवास्य जीवितमपहरिष्ये । हन्त हन्त किं कर्तव्यं दहति मां प्रकामं कोपपावकः । नास्त्युपाय इति चिन्तयतिस्म । एकदाऽमर्षभरेण कम्पमानगात्रयष्टिः पश्यतिस्म तं यवनभटं निर्निमेषम् । एवं प्रतिक्षणमुत्पत्स्यमानैर्नवनवै रनल्पैश्चिन्तातरङ्गैर्नितान्तं तान्तस्वान्तं कृष्णतनयं वीक्षमाणस्य यवनवीरस्य हृदयं प्रमोदपारावारे निमग्नमासीत् । मनागिव स्मितं कृत्वा स यवनहतकः— किं वीशिरोमणे कथं ते दशा । बाढं किलाधिगतोऽसि दशां दयनीयाम् । इत्यवादीत् ॥

रजपूतवीरः— (सामर्षम्) दुरात्मन्! भवानेव निदानमेतस्यामे महत्या व्यथायाः ननु । एवं सत्यपि कथं रे मदीयां दशां पृच्छसि । लज्जाऽपि वा कथमेवं पृच्छतस्ते नागच्छति । तिष्ठ कथयामि मामकीनां दशाम् ॥

अबदूलखानः— सस्मितम् । महाभाग! भणतु किमपि वा

भवान् । साक्षाद्दिलीश्वर एव भवत्कृतमवमाननं सहति, कोऽहं वराकः । यदीतो मुक्तो यापयितुं सुखेन समयमिच्छति भवान्, गृह्णातु तदा यवनधर्मदीक्षाम् । इत्युदीर्य प्रत्युत्तरमप्रतीक्षमाण एव सहसा सदनमात्मीयमगच्छत् ॥

प्रेष्ठाः ! पाठकमहोदयाः ! नासीत्तदाप्रभृति कृष्णतनयस्य व्यसनानां पारमेव । अस्पृष्ट कारुण्यलेशा दुरात्मानो यवनभृत्या नक्तं दिनं उपविष्टे, स्थिते, सुप्ते, गच्छति च कमप्येकं दोषमारोप्य निर्दयं तोदं तोदं कठोरदण्डाघातेन तं कृष्णतनयं ताडयामासुः येनाखिलमपि तदीयं गात्रमभवन्निर्विण्णम् । संध्ययोश्च स्वयं समागत आर्यधर्मावहेलनपूर्वकं यवनधर्मस्य सर्वाङ्गसुन्दरत्वं बोधयामासाबदूलखानः कृष्णतनयाय । प्रेषयतिस्म चान्तरान्तरा यवनधर्मोपदेष्टारं कुशलतरं गुरुमपि तस्य सविधम् यवनधर्मोपदेशाय । आदिदेश च भृत्यानपि भोक्तुमस्मै यवनपच्यमानमेवान्नं प्रदातुं प्रत्यहम् । परं सवीरो दृशाऽपि तदन्नं नावालोकयत् । अन्येऽपि परःशताः प्रयत्ना अकारिषतास्य धर्मध्वंसने यवनभटेन । परं नैकोऽपि तत्र फलित इति हाहन्त धर्मैकजीवितत्वं कृष्णतनयस्य ॥

एवं कतिपयेषु गतेषु वासरेषु प्रत्यहमधिकाधिकं विपद्भिस्तस्य तस्य कृष्णतनयस्य प्रवृत्तिरतिमात्रं साध्वसकरी संवृत्ता । सममेव तदीयचेतसि संभूताः साध्वसविचारसन्तापास्तदीयं बलं क्षिण्वन्ति स्म । कृतव्यामतया दृढतरसन्धिबन्धैर्जरावशीकृतस्य तस्य गात्रं पञ्चदशदिनात्मकेन परुषतमेन कारावासेन दयनीयतमां प्राप्नोति स्म दशाम् । अथापि कृष्णतनयो मनसापि नेहते स्म

यवनधर्मं स्वीकर्तुम् । ईदृगवस्थमेतं विलोक्य यवना: परं विस्मयमध्यगच्छन् । कृतान्तमुखं पश्यन्नप्ययं न जहाति निजं धर्मम् । हठादेव प्रवेशनीय एष यवनधर्मे, नात्र समयातिपात: संपद्यते श्रेयसे, नायमत:परं जीवतीति निरचैषीदबदूलखान: ॥

अथ कदाचन निशीथिन्यां निशीथे स यवनवीर: सहसा समागत: कृष्णतनयस्य कारानिकेतनम् । अश्रान्तं चिन्तासन्तानसमाक्रान्त: स रजपूतवीर: सहसासमये समागतं दुरात्मानं अबदूलखानमवलोक्य 'नूनमयं दुरात्मा किमप्यनार्यमेवाचरितुमागत: समयेऽस्मिन्' इति निश्चित्य बाढं विव्यथे चेतसि । भवतु यथा रोचते भगवते एकलिङ्गप्रभवे, स एवात्राशरणस्य मे शरणम् । इति भगवन्तमेकलिङ्गेश्वरमेव शरणं मन्वानस्तमेव चेतसि सभक्ति ध्यायंध्यायमतिष्ठत्तूष्णीम् । ततोऽबदूलखान: समीपमुपसृत्य सकरुणं अये वीरशिरोमणे! उत्तिष्ठ, शृण्वेतानि मदीयानि भाषितानि । मावमंस्था: मङ्गलकरं यवनधर्मम्, एषा दीयते दीक्षा यवनधर्मस्य, अङ्गीकुरु ताम्, अत्रैव ते भविता शाश्वतिकं श्रेय: । नोचेदित्यर्धोक्त एव ॥

कृष्णतनय:—— (सक्रोधम्) रे मूढशिरोमणे चाण्डालापसद! वज्रादपि कठोरं खलु हृदयं करुणाया गन्धोऽपि न तत्र विद्यते, मदीयामेतामवस्थां विलोक्य ग्रावाऽपि नाम कठिनतरो द्रवेत् किं पुन: सचेता:, कियद्वारं दुरात्मन् पीडयसि माम्, किमधिकं कथनीयमकरुणहृदयाय ते अनुसृत एव मया परेतपतिपत्तनस्य पन्था:, क्षणादेव भवाम्यन्तकान्तिकं गत:, कुरु तावदेव मनोरथं

निजं नीच? फलितम् । (क्षणं विचिन्त्य) पुनः (साक्रोशम्) तोदय रे दुरात्मन् तोदय, किं कथयामि, मास्तु नाम तादृशं बलं मयि, यद्यभविष्यन्मे पाणिपादं निगडविहीनम्, नूनं तदा ते प्राणान् क्षणादेवापाहरिष्यम्, किं कुर्यां म्लेच्छापसद? दृढं खलु निगडितं मे पाणिपादम्, हन्त हन्त न मे प्रचलत्युपायः ॥

समाकर्ण्य यवनवीरस्तदा द्विवांत्साङ्केतिकाञ्छब्दानुच्चारयामास । तदात्व एव सरभसमुपागतौ रक्षापुरुषौ कृष्णतनयं दृढमुष्टिना ताडंताडं भूमौ पातयित्वा दृढरज्जुना बद्धुं प्राक्रमेताम् । प्रियपाठकाः? कुत्रवासीत्तादृशं बलं कृष्णतनय इति नजानीमो वयम् यतो हि तावुभावपि हठाद्व्यक्कुर्वन् भूमाववपातयत्सः । पुनश्च तावुभावपि दृढमवहितौ बध्वा भूतले निपात्य कठोरतमेन दण्डेन ताडयामासतुः । अत्रान्तरे कश्चन पललपूरित पात्रहस्तेन परिचारकेणानुगम्यमानो धौतखदिराङ्गारसदृक्षगात्रो लम्बकूर्चसमलङ्कृतवदनो यवनः साक्षादवनितलावतीर्णः कृतान्त इव समागतः । समागतश्च तं निजोपाध्यायं वीक्ष्य प्रहृष्टमनाः प्रत्येब्रवीत् । उपाध्याय? त्वर्यतां त्वर्यताम् । एष गच्छति क्षणादेव परेतपतेः सदनम् । तत्पूर्वमेवनिर्वर्त्यतां कर्तव्यं कर्म । विफलमन्यथा भवेदेतावन्तं समयं कृतं साहसम् । इति ॥

निशम्यैतान्यब्दूलखानवचनानि यवनगुरुः सरभसं कृष्णतनयान्तिकमेत्यात्मनो धर्मग्रन्थमुद्धाट्य किमपि पुटपुट्यां चकार । स्थापितश्चोपाध्यायानुचरेण पललपूर्णं पात्रमपि तत्रैव तदा । सर्वाण्येतान्यार्य धर्मानुचितानि कर्माणि निरीक्षमाणो रजपूतकुल-

भिगतजन्मा कृष्णतनयो नितरां चेतसि दूयमानः (सकरुणम्) महाराज मेवाडाधिपते आर्यधर्मरक्षणदीक्षित दीनबन्धो! कुत्र वा भवान्, एष प्रियतमस्तवानुचरः सीदति महति विपत्पंकनिधौ मग्नः, आर्यधर्मस्य कृते नूनमनुभूयते विपदेतावती, न ते कश्चिदार्य धर्मेऽभिमानः, सत्वरमागतः कुतो नु मां नोद्धरसि, मनागिव विचिन्त्य हन्त हन्त कथं भवेदिह व्यसनपङ्कधौ सीदतो मे प्रवृत्तिर्मेवाडविषये वसता हम्भीरभूपालेनावगता। वृथाखल्वाक्रोशनं मम। भवतु, भगवानेकलिङ्ग प्रभुर्वा भवेन्मे शरणम्। भगवन् एकलिङ्ग प्रभो? एषते भक्तः सीदति, पालय सत्वरं समागतः, हन्त हन्त सर्वथा जितमधर्मेण। पलायितं क्वापि पदमलभमानेनार्यधर्मेण। इत्याक्रन्दन् बलादात्मानं मोचयितुं प्रायतत, परं रक्षापुरुषाभ्यां दृढं निगृहीतस्य तस्य प्रयत्नो नाविन्दत्साफल्यम्॥

एवं व्यपगतायां कियत्यामपि कालकलायां यवनोपाध्याय आदिदेश निजं परिचारकम्। अये निक्षिप्यतामस्य मुखे पललखण्ड इति। अथ तेनाज्ञप्तः स भृत्यः सविनयम् आर्य? किं वा निक्षेपणीयं पललमादाविति प्रत्यब्रवीत्। ततः क्रुद्धो यवनगुरुः किं नु वारे मूर्ख वक्तव्यं ते। लज्जापि वा प्रष्टुमेवं नागच्छति तव, सर्वदात्वेवंजातीयका एवानुयोगाः, क्षिप क्षिप गोमांसम्, किं पश्यसि, अतिक्रामति वेला, हुं त्वर्यतां त्वर्यतामित्यवदत्। पाठकमहाशयाः? गोमांसश्रवणसमकालमेवार्धावशिष्टजीवितः संवृत्तः कृष्णतनयः। आक्रन्दच्चास्फुटाक्षरं सकरुणम्। अलमलं रे पापाः एवं विधा वाचो मा वदन्तु भवन्तः, सर्वथा कर्णौ मे स्फुटतः,

(क्रमशः।)

॥ श्रीः ॥

# ॥ श्रीरामोदन्तः ॥

[ पूर्वतोऽनुवृत्तम् । ]

—*—

अथामन्दानन्दभरितास्ते सर्वे संपातिमापृच्छय किलकिलायन्तः सत्वरमेव प्रास्थिषत गिरिं माहेन्द्रम् । क्रमेणावाप्य तं गम्भीरं पाथोधिं विलोक्य कुण्ठिताशेषु वानरेषु स्वस्वप्लवनशक्तिमभिधायावनतमुखेषु जाम्बवान्निर्दिश्याञ्जनेयं तानित्थमवादीत् । 'वीराः! किमिति भवन्तो विषीदन्ति? यदि तितीर्षेत्प्राभञ्जनिर्गोष्पद एवायं वारिधिः । शैशवेऽपि पक्वफलभ्रान्त्या बहुयोजनदैर्घ्यमादित्यमण्डलमुत्पातितवतोऽस्य महात्मनः कियदेतच्छतयोजनविस्तीर्णसमुद्रलङ्घनम्' इति ॥

इत्थं जाम्बवता सबहुमानं संधुक्षितप्राभवो मारुतिः प्रवृद्धशरीरः समधिरुह्य गिरितटं बहूकृत्य चाङ्गदजाम्बवदादीन्पाथोधिलङ्घनसंनद्धो बभूव ॥

इति किष्किन्धाकाण्डः ॥

———

## अथ सुन्दरकाण्डः ॥

———

अथ मारुतिः श्रीराममुद्रिकां धृत्वातिशयितसुपर्णवेगः समुद्रलङ्घनाय महेन्द्रगिरिसानोरुदतिष्ठत् । अतिजवेन गच्छन्नयं स्वबलपरीक्षायै बृन्दारकैः प्रहिताया व्यात्तवदनाया द्विरदनमातुः

सुरसाया मुखं सद्य एवाङ्गुष्ठमात्रकः प्रविश्य निर्भिद्य चोदरं त्वरितमेव निर्जगाम ॥

गतप्राणा सापि राक्षसी निजशरीरविभागेन नक्रेभ्यस्तृप्तिं कुर्वाणा न्यविक्षत मकरनिलयम् । भूयोऽपि पथि च्छायाग्राहिण्या सिंहिकया रुद्धोऽतिक्रुद्धस्तीक्ष्णतरैर्नखरैर्विदार्य तदङ्गं गच्छन्त-मेनं सागरप्रहितो मैनाको निजोन्नत्या सुरपथमभिभवन्सप्रश्रयम-वादीत् ॥

'सौम्य! प्राभञ्जने! क्षणं मयि विश्रम्य गम्यताम्' इति । इत्थमुपचरन्तं समाहत्य मैनाकं सत्वरमेव नीरनिधिपार-स्थं लङ्काभिधानमचलमयासीत् । अथास्तं गते गभस्तिमालिन्या-त्मानमपह्नुवान आञ्जनेयः शशमात्रको भूत्वा देवीं विचेतुकामो लङ्कां प्राविशत् । तत्र स्त्रीरूपं स्वीकृत्याध्वानं रुद्ध्वा भर्त्सयन्तीं लङ्कां मुष्टिघातेन विजित्य भूयोऽप्यप्रतिहतमेव जानकीं मृगय-न्समाससाद राक्षससार्वभौमस्य प्रासादम् ॥

अत्रान्तरे चन्द्रमाश्चारातिषु क्रोधेनेवाङ्गुलिनिकराकारैः सान्द्रतरनिजकिरणैर्निर्दिशन्निव हनुमतो लङ्कामुदियाय ॥

तदनु शय्यागेहे निद्रालूनां शत्रुदाराणां मध्ये सीताम-विलोकयन्दुर्मनाः प्रवीणोऽपि जानकीदर्शनलम्पटोऽचेतयन्नेव क्ष-पाटान्कुसुमस्तबकाचितां संनिकृष्टामशोकवनिकामद्राक्षीत् । प्रवि-श्य तां विविधमहीरुहभूषितां वृक्षाद्वृक्षं गच्छन्समारुरोह सीतानि-वासस्थानभूतां हिरण्मयीं शिंशुपाम् । तत्र च शाखानिलीनो रावणाद्भृशं त्रस्यन्तीं म्लानमूर्धजामारक्षकराक्षसीभिरसकृद्भर्त्स्य-मानां सीतां दीनोऽद्राक्षीत् ॥

तदा दशकण्ठः समागत्य तां वशयितुमयतत । अभाषत चैनाम् 'मदिरेक्षणे! अङ्गीकुरु मां त्रिलोकविजयिनम् । करोमि लङ्कामिमां त्वदायत्ताम् । निर्जनमिदं विहाय वनं मया साकमधिवस सुखमेव प्रासादम् । मा मावमंस्थाः प्रणमन्तं माम् । निर्जितदिक्पाले धन्ये मयि संदृष्टे कामयेत का वासितेक्षणा मन्दभाग्यं तापसं दाशरथिम् ॥

एतादृशं स्ववचनं निशम्य 'हे शूरंमन्य! यदि न हीनोऽसि रामल्लोकाभिरामात्किमर्थं कनकमृगच्छलेनापवाह्य वीरौ मामेकाकिनीमबलामिहानयः? क्षपाटाधम! यदि वीराग्रगण्योऽसि किमर्थं वर्जयित्वा लोकान्भीतोऽधिवससि लङ्कामिमाम्? अनयाभिज्ञ! किमर्थं जातमन्मथः परदारगवेषणेन दूषयसि परिपूतं स्वकुलम्? उत्पादयसि च वंशजातानामपत्रपाम् । निन्दितचारित्र! त्वरितमेव नय मां पञ्चवटीम् । न चेद्भविष्यति श्रीरामबाणसंप्रदग्धा पुरीयं ते निर्जना । दुर्बुद्धे! केन वा प्रकारेण निःसरिष्यसि काकुत्स्थशरविप्रविद्धः । क्रुद्धः स राघवः संज्ञामपि ते परिशेषं न स्थापयिष्यति । यं समाराध्याधिपत्यमिदमवाप्नोस्तमपि मृत्युञ्जयं जयेद्रघुनन्दनः । मशकप्रायस्य तव हननं कियत्' इति जनकनन्दिन्या सम्यगधिक्षिप्तः कृष्णसर्प इव निःश्वसन्पौलस्त्यः 'अयि! प्रतीपदर्शिनि! चिरेणाभिहिताप्यनुकूलं वर्तसे प्रतिपत्तिविमुखी । चेन्न मामङ्गीकरिष्यसि भविष्यस्यवश्यं वैवस्वतनिकेतनातिथिः' इति वदन्कुरुतैनां वशगामिति भयङ्करा राक्षसीः समादिश्य स्वभवनं प्राविशत् ॥

तदनु गते तस्मिन्निशाचर्यः 'सीते! "रावणं भज भर्तारं

भर्तारं सर्वरक्षसाम्’ एवं च सति ध्रुवं स्यात्तव मङ्गलम् । न चेदवश्यं नयेम त्वां प्रातरशनाय अमया राक्षसेन्द्रम्” इति भर्त्सयामासुः ॥

‘अथ दुराचाराः! मारयतात्मानम्! कुरुध्वं च निजपिशितैर्भोजनम्! स्वप्नो ह्यद्य मया दृष्टः सर्वराक्षसविनाशपिशुनः श्रीमद्दाशरथिविजयसूचकश्च’ इति त्रिजटया निवारिता राक्षस्यो यथागतं जग्मुः । यातासु तासु दुःखात्प्राणत्यागमभिलषन्त्यां सीतायां ‘समयेऽस्मिन्न कल्याणकरः कालविलम्बः’ इति मन्वानो मारुतिर्निर्दिष्टो भूत्वा कर्णानन्दकरीं रामकथां प्रास्तावीत् । अनन्तरं निशम्य तां सर्वत्र प्रवर्तितदृष्टिः समीक्ष्य हनुमन्तं भीता दुःस्वप्नशङ्किनी जनकनन्दिनी नाथस्य सलक्ष्मणस्य सुखमाचकांक्ष । अथ—

‘स्वप्नोऽपि नायं न च मेऽस्ति निद्रा
शोकेन दुःखेन च पीडितायाः ।

इति सन्दिहाना वानरभूमिकया रावण एव समागत इति तस्मादत्रस्यत् । अचिन्तयच्च भूयोऽपि ‘चेदयं काकुत्स्थानुचरो भवेत्तदा सफलानि मम तानि दर्शनादीनि स्वप्नलक्षणानि । उत्तराहि सिन्धोर्वसन्रामः कथं दक्षिणतः स्थितां मामज्ञासीत् । विना वैनतेयसमीरणौ नाऽन्यः शक्नुयात्समुद्रलंघने पुरुषः । किमुत शाखामृगः’ इति ॥

अथ हनूमान्स्वोक्तिचातुर्याद्विश्वासयन्जनकनन्दिनीमित्थमाबभाषे ‘देवि । विद्धि मां त्वद्विरहपीडाक्रान्तस्य राघवस्य किङ्करम्’ इति । ततो रामलक्ष्मणादीनां कुशलं सख्यं च राघवसुग्री-

वयोर्नामधेयं च स्वकीयमभिधाय आनन्दयन्वैदेहीं देशकालज्ञोऽयं तत्प्रत्ययहेतोः श्रीरामनामाङ्कितमङ्गुलीयकं च प्रादात्। अभिज्ञानदर्शनादेवाननुभूतमानन्दं प्राप्ता सा प्रशशंस बहुधा हनूमन्तम्। उवाद च पुनः 'महाभाग! भ्रात्रा विभीषणेन मम प्रतिसमर्पणं प्रत्यनुनीतोऽपि नैव शृणोति तद्वचनं दुरात्मा रावणः। अवश्यं गवेषयति मृत्युरेनमनयाभिज्ञम्॥

अभिहितं चास्मत्पक्षपातिन्या कलाख्यया विभीषणसुतया-सन्नमृत्युरयमिति। कदा वा शरजालमयूखो रामभास्करः शोषयिष्यति कर्बुरमयं तोयम्। कदा च काकुत्स्थास्त्रेण निहतं द्रक्ष्यामि ससुहृज्जनं रावणम्। कथं वा शोकसागरस्यास्य पारमधिगमिष्यामि। नैव जीवेयं मासादूर्ध्वम्। सुपर्वणामपि निग्रहे शक्तो राघवः कथं वा शोच्यां मामुपेक्षते। किं बहुना! अथ वा नाद्यापि भवति ममैव शोकस्य विपर्ययः॥

अथाञ्जनेयो निशम्य शोकोदग्रां सीताया वाणीं देवि! मा उद्वेगं कार्षीः। न जानाति राघवो भवतीमिह स्थिताम्। नानयत्यत एवैतावतापि कालेन। मत्तो निशम्य वृत्तान्तं क्षिप्रमेव प्लवङ्गमसङ्कुलां प्रकर्षन्सेनां समेष्यति। अथ वैषोऽहमद्यैव नयामि भवतीं राघवसंनिधिम्। नाशक्तं विचारय मामिति वदन्स्वनैपुण्यपरिज्ञानार्थं सुमेरुसङ्काशो ववृधे॥

विलोक्य तद्भयङ्करं रूपम् 'प्लवंगर्षभ! किं वा दुष्करं त्वादृशानाम्। अवगच्छामि तावकीनं बलं समीरतुल्यां गतिं तेजश्चानलसमानम्। को वान्यस्त्वया विनातिगम्भीरं विलङ्घ्यार्णवमत्र समागन्तुमर्हति। सराक्षसामिमां लङ्कामपि वोढुं प्रवीणस्य भवतः

कियन्मम वहनम्। तथापि यदि दाशरथिर्निजमहिम्ना ससैन्यं सबन्धुवर्गं च दशकण्ठं यममन्दिरातिथिं विधाय मामितो नयेत्त-त्तस्य सदृशं स्यात्' इति वैदेह्याभिहितो मारुतिः 'महानुभावे! तर्हि प्रयच्छ रमणीयमभिज्ञानं यद्दाशरथिर्जानीयादित्यब्रूत॥

तदनु सीताभिधाय वासविवायसकथां वितीर्य चानुत्तमं चूडामणिमाञ्जनेयं विसर्जयामास। अथाभिज्ञानं दधानः कृतार्थ एष नमस्कृत्य जानकीं द्विषते स्वागमनं प्रकटयितुकामो दूतोऽहं राघवस्येति गर्जन्नशोकवनिकामभनक्॥

तदनु भीता आरक्षकक्षणदाचार्यः 'यत्र समीरणोऽपि मन्दमेवावात् चूर्णयति तदुपवनं शाखामृग इति रावणाय विज्ञा-पयामासुः। अथ हनुमान्स्वचेष्टाक्रुद्धेन रावणेन स्ववधाय प्रहि-तानि किङ्कराणामशीति साहस्राणि सह जम्बुमालिना 'मा पलायध्वं मा पलायध्वम्' इति वदन्निहत्यायमेव पन्था यमसद्मन इति प्राहिणोत॥

मदोद्धता अपि बहवः शूराः कपिनैकेनाहन्यन्तेति निशम्य पुनरपि प्लवङ्गमाहरणाय प्रहसनादीन्मन्त्रिणो व्यसर्जयत्। तानपि तोरणस्थपरिघेण प्रविध्य विधाय च परासूनकृत 'दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः' इत्यात्मानं प्रख्यापयतो हनूमतो नियमनाय राक्षसराजेन बहुधा श्लाघयित्वा प्रहितोऽक्षकुमारः स्वमायाभिश्चिराय कुर्वाणोऽपि कपटयुद्धमवसानेऽवाप्य प्लवङ्गम-र्षभं परिघाहतोऽवन्यां न्यपतत्॥

अथ तं निहत्य यदि योद्धुं मयाशय आशरपतेस्तमप्यद्य क्षणादुत्सारयामीति वदन्भूयोऽपि नाशयंश्च प्रमदावनमचरत्॥

तदन्वक्षकुमारविनाशवार्ताश्रवणकुपितः कौणपपतिरिन्द्रजितं समाहूय त्वरितमिहानय शाखामृगमित्यादिक्षत् । मेघनादोऽपि ससैन्यः समागत्य समराङ्गणं विविधैः शरैराच्छादयन्नाञ्जनेयं युद्धाय प्रावर्तिष्ट । कुलशैलतुल्यो मारुतिरपि मृध आविष्कृतसामर्थ्यो निजघान बहून्राक्षसान् । स्वसैन्यापायक्रुद्धः पौलस्त्यसुतो विज्ञाय विविधास्त्रवैयर्थ्यं तत इतो भ्रमन्नवध्योऽयमिति मन्वानो मारुतात्मजं ब्राह्मेणास्त्रेणाबध्नात् ॥

तदनु सन्तुष्टैः क्रव्यादैर्गृहीतोऽसौ निपुणोऽपि व्यापरितुं मोघं मा भूद्ब्राह्ममस्त्रमिति विचिन्त्य नैवाचालीत् । अथ राक्षसा ब्रह्मपाशबद्धोऽप्ययं कदाचिदस्मान्विधूय गच्छेदिति भिया निश्चेष्टमपि वायुसूनुं शणवल्कलैरनह्यन् । बन्धे बन्धान्तरकरणेन मारुतिमस्त्रविमुक्तं विज्ञाय पौलस्त्यसूनुरतीव व्यषीदत् । यतो दिव्यास्त्रबन्धः स नैव विषहतेऽन्यद्बन्धनम् । तदनु तिरोहितसामर्थ्यस्य शतानन्दास्त्रस्य पर्यालोच्य प्रभावं क्रव्यादाधिपसूनुः सद्य एव मारुतिं गृहीत्वा पितरमुपससाद ॥

तदनु राजसदसि नीतोऽयं रावणाज्ञया प्रहस्तेन कृतबहुविधप्रश्नोऽपि तमनादृत्य वलयितवालासनमाधिष्ठाय पौलस्त्यमेव प्रत्यब्रवीत् । प्रकाशनीयमेव हि शत्रुसन्निधावत्यौन्नत्यम् ॥

'यः खलु दिनकरकुलकलशजलनिधिचन्द्रायमाणो दर्शनमात्रेणानन्दयति लोकान्! यमेव च ताटकासुबाह्वोरन्तकरमवाप्य स्वर्गान्तरनिर्माणदक्षोऽपि विश्वामित्रो निरन्तरायाध्वरकृत्यो बभूव! येन च भवादृक्षैः सार्वभौमैरप्यनमितं कन्याशुल्कं धनुर्बाल्ये क्षणान्निष्प्रयासमेवाभाजि! यस्मै च स्पृहयन्ती कन्दर्पबाधिता

तव मातृष्वसेयी सौमित्रिकृत्तनासा बभूवापनसा । यस्माच्च निधनमवापुरेकस्मिन्नेव समये शूर्पणखाप्रहिताः खरदूषणादयश्चतुर्दशसहस्रसंख्याका यातुधानाः । यस्य च परन्तपस्य निजपराक्रमनिर्जितजामदग्न्यस्य बाणेनैकेन वञ्चनार्थं भीरुणा त्वया प्रहितो भीलुकः स्वर्णमृगाकल्पधारी ताटकेयो ममार । यस्मिश्चान्तकः स्याप्यन्तके कर्तुमकर्तुमन्यथा कर्तुं शक्ते केवलनरबुद्ध्या पापः प्रत्यासन्नमृत्युस्त्वं दारापहरणरूपमपराधमाचरितवानासि ! सत्यप्रतिज्ञस्य पितृवाक्यपरिपालनतत्परस्य सम्पादितसुग्रीवसख्यस्य त्वन्नियन्तृवालिसंहारकस्य तस्य श्रीमतो दाशरथेर्विद्धि प्रणिधिं मां जानकीविजयाय प्रतिदिशं प्लवङ्गराजेन प्रहितेषु प्लवङ्गमेष्वन्यतमम् । नभोमार्गेण समुत्तीर्णार्णवोऽहं त्वन्नगरस्थाशोकवनिकायां नमस्कृत्य श्रीरामपाणिगृहीतीं मदागमनं भवते प्रकटयितुकामः प्रकटने चालब्धापरोपायो बुद्धिपूर्वमेवाकार्षं वृक्षराक्षसविध्वंसम् । देवासुरा अपि न शक्ता अस्त्रपाशैर्बन्धुं माम् । लब्धोऽयं वरो ममापि त्वत्प्रपितामहात्पितामहात् । केवलं त्वद्दर्शनाकांक्षिणा निवृत्तमप्येतदस्त्रमनुवर्तितं मया । नार्हसि निरोद्धुं निग्रहानुग्रहसमर्थस्य श्रीराघवस्य धर्मदारान् । को वा रघुनन्दनस्य व्यलीकं विधाय सुखमवाप्नुयात् ? यां प्रमदावने निरुध्य सन्तुष्यस्यवगच्छ तां पञ्चानना पन्नगीम् ! न शक्नुवन्ति देवासुरा अपि सौमित्रिमुक्तानां शराणामग्रतः स्थातुम् ! देवादिभिरवध्यतां प्राप्तोऽहमिति मा गर्वीः, जानीहि दाशरथिं मानुषम् ! सुग्रीवं च वानरेश्वरम् ! तच्छृणुष्व त्रिकालहितं मद्वचनम् ! प्रत्यर्पय जानकीम् ! मा भूः श्रीरामशरभोज्यम्' इति ।

(क्रमशः ।)

॥ श्रीः ॥

# ॥ सालुवाभ्युदयम् ॥

[ पूर्वतोऽनुवृत्तम् ]

——*——

अभ्रंलिहाग्रमतिनिर्मलशोभमन्त-
    र्यद्गोपुरं लसति बिम्बितलोकलक्ष्यात् ।
अन्तश्चराचरमशेषजगद्दधानो
    विश्वंभरः पर इवाम्बुदमेचकाङ्गम् ॥ १५ ॥

यत्रोल्लसद्ध्वजपटीलिखितो हनूमा-
    नाकाशवर्त्मनि चरन्ननिलाश्रयेण ।
कूलङ्कषस्फटिककुट्टिमकान्तिपूर-
    क्षीरार्णवोत्तरणकेलिमिवातनोति ॥ १६ ॥

जात्यन्धकाणबधिरादिजनस्य भूयो-
    ऽप्यङ्गानि यत्र वितरन्ननुपाधिबन्धुः ।
विश्वंभरो विकलकर्मकृतो विधातु-
    रात्मोद्भवस्य किमपाकुरुतेऽपवादम् ॥ १७ ॥

स्नात्वाथ तीर्थसलिले दयितासखोऽयं
    दत्त्वा समस्तमपि वित्तचयं द्विजेभ्यः ।
नत्वा च तत्र नरसिंहमहोबिलेशं
    पुत्राद्दतोऽस्य पुरतो न्यवसत्त्रिरात्रम् ॥ १८ ॥

आधारपद्मदलनार्हमरुद्धताग्नि-
    वेधावलीनविधिरन्वभवात्मनौघैः ।

आसाद्य देहभरणं त्यजति स्म लोक-
साधारणं स नृपतिस्तमपि प्रबोधम् ॥ १९ ॥

चेतोलये निरुपमे जनितेऽच्युत मुक्त-
पादाम्बुजस्मरणदर्शितभक्तियोगम् ।
आनन्दशंसिपुलकस्फुरणावशिष्ट-
बाह्यक्रियं विटपवज्जडतां प्रपन्नः ॥ २० ॥

अन्तेवसत्सहचरीगमितप्रबोध-
मस्पन्दगात्रमतिमात्रसमाधिनिष्ठम् ।
आमीलिताक्षमनुभावितयोगनिद्र-
माविर्भवन्नरहरिर्नृपमित्यभाणीत् ॥ २१ ॥

भक्त्यैव निष्प्रतिमया पृथिवीपते ते
प्रीतोऽस्मि योगहृदभावनयोपहूतः ।
ऐक्यं तयात्मनि गतोऽस्म्ययि संभवामि
त्वय्येव दुर्नयनृपान्वयशिक्षणाय ॥ २२ ॥

एकद्विषद्दलनहेतुगृहीतघोर-
वेषत्वमस्त्रिभुवनो विकृतद्विरूपः ।
अस्यत्र मात्रसहसज्वलदग्निवक्त्रः
स्तम्भादभून्नहरिरित्ययशः प्रमार्ष्टुम् ॥ २३ ॥

नेतुं कलिं कृतयुगं निजनीतिमार्गा-
न्निर्विघ्नमारचयितुं निगमोपदेशम् ।
सद्द्वीपभूभरणतत्परचक्रवर्ति-
साम्राज्ययोग्यमवितुं च धनेन हीनान् ॥ २४ ॥

बद्धोऽस्मि भक्तिगुणतस्तव मां विमुञ्च
  साध्वीमिमां सहचरीमुपवासदीनाम् ।
आनन्दयेष्टकथनादिति राजहंस-
  माश्वासयन्नृहरिरन्तरधात्क्षणेन ॥ २५ ॥

अन्तर्हितं तमवलोकयितुं नृसिंह-
  मुन्मील्य नेत्रमुपकण्ठगतं न पश्यन् ।
देव क्व यासि भगवन्निति दत्तदृष्टि-
  र्भक्त्याकुलो दिशि दिशि भ्रमति स्म राजा ॥ २६ ॥

अत्राहमस्मि कथय श्रमहेतुमार्य-
  पुत्राधुनेति पुरतश्चलितां पुरन्ध्रीम् ।
प्रत्याह तां प्रमदनिर्भरबाष्पपूरं
  तत्तादृशीं तनयहेतुकथामशेषाम् ॥ २७ ॥

साध्वी तया सुतगिरा शरदेव हंसी
  काल्यश्रिया कमलिनीव घनाघनाल्या ।
मायूरपङ्क्तिरिव चूतलतेव चैत्र-
  मासश्रिया मुदमगाद्वसुधेन्द्रपत्नी ॥ २८ ॥

नत्वा तु भक्तिसुलभं नरसिंहरूपं
  नारायणं नरपतिर्नयनातिथेयम् ।
हृष्टाशयः सह तया निजराजधानी-
  मुत्तोरणामगमदुत्सुकपौरलोकाम् ॥ २९ ॥

अन्यं महस्त्वितयतः कनकाभिराम-
  वर्णं पिशङ्गवसनं प्रविभक्तरूपम् ।

सा पश्यति स्म करधारितशङ्खचक्र-
मन्तर्विशत्किमपि रोचिरदृष्टपूर्वम् ॥ ३० ॥

सूक्तिर्नवार्थमिव मेरुतटीव सूर्यं
तत्त्वावबोधमिव सज्जनचित्तवृत्तिः।
.........जनीरमिवाब्धिवीची
मज्ञाम्बिकाथ सुकृताद्वहति स्म गर्भम् ॥ ३१ ॥

तत्र प्रविष्टवति शार्ङ्गिणि गर्भशय्यां
तन्निर्गमं बहिरिव प्रतिपालयन्तीम्।
लक्ष्मीं तदीयविरहादिव पाण्डुरूपा-
मन्यादृशीं श्रियमलब्ध नरेन्द्रपत्नी ॥ ३२ ॥

आत्मान्वयोत्तरणकारणगर्भरक्षा-
हेतोर्बहिर्निवसता महसा किमिन्दोः।
यद्वा तदर्भकयशःप्रसरानुरोधा-
दापाण्डुराकृतिरजायत राजपत्नी ॥ ३३ ॥

मन्ये कुचोन्नतिभरासहनो वराङ्ग्या
मध्यो विवृद्धिमगमन्महतीं चिराय।
यद्यन्तराश्रयणमस्ति रमेशमूर्ते-
रेतन्न किं हरति दैन्यदशां कृशानाम् ॥ ३४ ॥

अत्यर्कचन्द्रमुदयेद्धारिधाम दैवा-
दल्पीयसोऽप्युदरतो महदित्यमुष्याः।
अस्तोदयौ कुचमयौ त्रपया च खेदा-
दापाण्डुतामवहतां स्वमुखे च काष्र्ण्यम् ॥ ३५ ॥

आपाण्डुभावमुखनीलिमरूपभाजो-
रभ्रापगायमुनयोरवगाहनेन ।
वक्षोजचक्रयुगलं मदिरेक्षणाया
मन्ये समाश्रयदभङ्गुरमेकरूपम् ॥ ३६ ॥

मन्दाकिनीं मम सखीमवहद्गिरीशो
मूर्ध्ना न मामिति तपो मुहुरारचय्य ।
किं भस्मपाण्डुतदुरोजगिरीशमूर्ध्नि
नीलाभचूचुकनिभार्कसुता न्यवात्सीत् ॥ ३७ ॥

गर्भस्थितः शिशुरसौ किटिचिह्नमेव
मेरौ च चन्दनगिरौ च विधास्यतीति ।
आशाजये ध्रुवमसूचयदस्य भव्य-
मानीलचूचुकमुरोजयुगं मृगाक्ष्याः ॥ ३८ ॥

हंसोपमां तु सुषुमामधिगन्तुमिच्छ-
त्यन्तःस्थिते नरहरौ हरिणेक्षणायाः ।
संलक्ष्यते स्म वपुषोऽस्य बहिः सरन्ती
च्छायेव शारदघनप्रतिमा च कान्तिः ॥ ३९ ॥

तस्याः सुवर्णसमयाङ्गरुचा समेता
च्छाया तदात्वजनिता शरकाण्डपाण्डुः ।
अन्तःस्थितार्भकमुखाश्रयया भवित्रीं
मैत्रीं चिराय किल सूचयति स्म वाण्या ॥ ४० ॥

यावत्ततो नरहरिः समुदेति रक्ष्या
तावच्चलेयमिति तत्कुचपद्मकोशे ।

वेधा विधाय कमलामपि वीरलक्ष्मीं
किं वाप्यमुद्रयत चूचुककैतवेन ॥ ४१ ॥

जेतुं दिशोऽयमुदराच्छिशुरेष्यतीति
पाटीरकर्दमपरिष्कृतमङ्गकं किम ।
आनीलचूचुकतमालदलावभूतां
तस्याः पुरो विनिहितौ स्तनपूर्णकुम्भौ ॥ ४२ ॥

आशागजस्य धरणीभरणोद्धतस्य
कोलेन मुद्रयति कुम्भतटौ स यावत् ।
एवं किलेति कृतचूचुकलक्ष्यमुद्र-
मेणीदृशः किमरुचत्कुचकुम्भयुग्मम् ॥ ४३ ॥

रोमावलीजलदपाल्युदयानुरूप
व्योमान्तरं सदसदुक्तिविभागहेतोः ।
वृद्धया तदा जनितया विधिना तदैव
मध्यं चिराश्रयनमार्गमनायि तस्याः ॥ ४४ ॥

तन्वी शनैरुदितगर्भभरालसाङ्गी
शक्ता परं न सदनाङ्गणचङ्क्रमेऽपि ।
तस्याः सविभ्रममपाङ्गगतागतेऽपि
संजातजाड्यगरिमाजनि तारका च ॥ ४५ ॥

आपादयत्प्रथममात्मनि शून्यवाद-
माकाशतत्त्वमपि मध्यमपास्य तस्याः ।
शौद्धोदनेर्वचनवत्तदपि प्रकामं
प्रत्यक्षभावमयाति स्म शनैः प्रवृद्ध्या ॥ ४६ ॥

सा मृत्तिकां रसयति त्रिदशाधिपांश-
गर्भस्थपार्थिवतनूकरणाय किं वा ।
आकाशवन्नयनयोरपदं तु मध्य-
मध्यक्षतां गमयितुं नवपार्थिवांशात् ॥ ४६ ॥

तेजोमये कलिलभावमुपेत्य...
.......म्बरभाजि पुंसि ।
विश्वंभरापि च तया बहुधोपयुक्त-
मृत्स्नाच्छलेन विशति स्म तदन्तरङ्गम् ॥ ४८ ॥

कोकद्वयीविघटनं कुरुते स्म रामः
सोऽयं तु नौ सुदृढसंश्रय(मित्यमुष्याः) ।
(श्लिष्यत्पयोधर)रथाङ्गयुगप्रमुक्त-
हर्षाश्रुपूरवदराजत रोमराजिः ॥ ४९ ॥

आशाजयाय विधिनोचितमर्भकस्य
वीराभिषेचनकृता मृगनाभिमिश्रा ।
बिम्बात्मना बहिरिव प्रकटाम्बुधारा
विभ्राजते स्म सुतनोर्नवरोमराजिः ॥ ५० ॥

सा गर्भवर्तिहरिभावरसानुवेधा-
दन्यादृशी भटजनानवमानयन्ती ।
क्षत्त्रोचितत्रिभुवनैकभटक्षितीश-
साधर्म्ययुक्तमिदमाह सखी(समक्षम्) ॥ ५१ ॥

......सारघनसारमुखैर्विलेपैः
किं भूषणैर्यदि यशोऽस्ति तदेव सर्वम् ।

छायैव तस्य न परं धवलातपत्रं
यच्छाययैकमपि रक्षति सर्वलोकम् ॥ ५२ ॥

किञ्च.......न्धवहैस्तदेत-
त्प्रीत्यै कथं भवति मे प्रभुतैकचिह्नम् ।
सप्तार्णवीलहरिकोरकचामराली
संजीवनं यदि ततः शमितः श्रमः स्यात् ॥ ५३ ॥

अस्त्रेष्वपि त्रिभुवनाभयदायकेषु
मैत्री (कृता) वनचरैः पशुभिः किमर्थम् ।
द्वीपाधिपं कमपि हन्तुमबन्धि सिन्धुः
किं राघवेण कृपणापि दशान्वभावि ॥ ५४ ॥

वाराकरे मगधराजभयान्निवास-
मासेदुषा श्रितवतार्जुनसारथित्वम् ।
(कृष्णेन)कूटरणकेलिकृता किमर्थं
व्यर्थीकृतं मुरहरांशभुवापि वीर्यम् ॥ ५५ ॥

हत्वैकमप्यरिमशेषमहीशवंशं
हत्वाशिशुस्थविरमप्यशमोदयस्य ।
मातुः शिरोविदलनेऽप्यदयस्य मान्यः
कस्यापदानमहिमात्र कुठारपाणेः ॥ ५६ ॥

आजौ सदैन्यमनुनाथ्य शिखण्डिनं त-
मग्रे निधाय हनुमद्ध्वजमप्यपास्य ।
आदौ गिरार्पितनिजासुमशस्त्रपाणिं
हत्वा पितामहमकारि किमर्जुनेन ॥ ५७ ॥

ननबिरुदेन च, महार्हराङ्कवयुगलसौवर्णकटकयुगलप्रदानपूर्वकं संमान्य श्रीशारदायतननिर्माणविधानप्रदर्शितातिभक्तिं रामस्वामिश्रेष्ठिनामकमहाशयं भक्तरत्नबिरुदेन राङ्कवप्रदानेन च समनुगृह्य सभागतानां महापण्डितानामन्येषामपि तत्तन्महाशयानां समितिं पुनः पुनरादीयमानामितमहार्हराङ्कववसनाभरणादिप्रदानेन प्रहर्षयन्, स्वीयां महावदान्यतां प्रकाशयितुमारेभे ॥ ५४ ॥

पापठ्यमाने सति पण्डितानां
पर्यायलब्धे प्रतिनामधेये ।
एकैकमाहूय स दानवीरः
प्रादाद्धनान्युत्तमराङ्कवाणि ॥ ५५ ॥

शतं शतं राङ्कवरूप्यराशिं
शतं शतं भूषणरत्नराशिम् ।
क्षणाद्ददाने यतिवर्यहस्ते
ततोऽधिकं द्रागनयन्मठीयाः ॥ ५६ ॥

दाता सहस्रस्य तथायुतस्य
लक्षस्य संपादयिताधिकस्य ।
दातृप्रहीतृप्रकरैकवीरो
जीयादसौ वैदिकसार्वभौमः ॥ ५७ ॥

ज्ञाता च दाता च यतीश्वरोऽयं
माता च विद्वज्जनतारतम्यम् ।
कलौ युगेऽसौ खलु दानकर्ण
इति प्रजास्ताः प्रशशंसुरेनम् ॥ ५८ ॥

इति स्तुवन्तः प्रमोदाश्रुपरिप्लुताः सर्वेऽपि महाजनाः प्रणम्य प्रत्यक्षपरमेश्वरमिवाद्वैताचार्यं स्वानि स्वानि स्थानानि प्रपेदिरे ॥ ५९ ॥

ततो व्यतीते सति पञ्चषाहे
कालेऽ कलेः कल्मषदर्पहारी ।
कर्मन्दिराजः स पुनः प्रदातुं
भूयोऽपि विद्वत्समितिं वितेने ॥ ६० ॥

तत्रागताः केऽपि बुधाः प्रसिद्धाः
केचिन्महान्तो धनिनश्च लोकाः ।
निर्व्याजसेवानिरताश्च ते ते
यतीन्द्रमेनं परिवार्य तस्थुः ॥ ६१ ॥

कश्चित्समुत्थाय महाशयस्तं
गुरुं प्रशंसन्महितैर्वचोभिः ।
आचन्द्रतारं गुरुराजमौलेः
संप्रार्थयामास शरीरसौख्यम् ॥ ६२ ॥

श्रीकृष्णभूमीश्वरसंनिधान-
धर्माधिकारे प्रथते बुधो यः ।
स्वास्थानविद्वत्प्रवरं तमेनं
क्षोणीगुरुर्मान्यतमं शशंस ॥ ६३ ॥

मुम्मडिकृष्णक्षितिप-
त्यास्थान्यां धिषणवत्सुधर्मायाम् ।

कुणिगलरामाशास्त्री-
त्यभिरूपोऽभूत्कणाद इव नूत्नः ॥ ६४ ॥

तस्य सुतस्तत्सदृशो
लक्ष्मीनरसिंहशास्त्रिवर्योऽभूत् ।
कुणिगलरामाशास्त्री
तत्पुत्रो जयति सर्वशास्त्रज्ञः ॥ ६५ ॥

सुवर्णराजत्कटके प्रदाय
सद्राङ्कवे द्वे च समर्प्य हर्षात् ।
विद्वच्छिरोभूषणनामधेय-
मन्वर्थमस्मै प्रददौ यतीन्द्रः ॥ ६६ ॥

श्रीकृष्णराट् संस्कृतपाठशाला-
विद्वांसमेकं घनपाठिनं च ।
संमानयन्राङ्कवकङ्कणाभ्यां
विद्याभिमानं प्रकटीचकार ॥ ६७ ॥

कुम्भाभिषेकोत्सवकार्यभारं
ये ये यथाशक्त्यवहन्महान्तः ।
महार्हवस्त्राभरणप्रदानै-
स्तांस्तान्यतीन्द्रः समतोषयद्द्राक् ॥ ६८ ॥

इति सकलजनानामीप्सितार्थान्ददानो
विधिवदभिमतं निर्वर्त्य कुम्भाभिषेकम् ।
भुवनगुरुरथासौ बाह्यतन्त्राणि धून्व-
न्निजतपसि विशुद्धे न्यक्षिपच्चित्तवृत्तिम् ॥ ६९ ॥

शिष्याणां परितोषणाय सुचिरं जीयाज्जगद्देशिकः
श्रीमत्कृष्णमहीपतिर्विजयतां साम्राज्यसिंहासने ।
आस्थानीकविरत्नरामकविना भक्त्या कृतेयं कृतिः
श्रीमद्गुरुचन्द्रशेखरगुरोर्बोभूयतां प्रीतये ॥ ७० ॥

रथीतरसगोत्रस्य
रामनामकवेर्वचः ।
संमोदयतु चेतांसि
साधु वासाधु वा सताम् ॥ ७१ ॥

ओं तत्सत् ॥



॥ श्रीः ॥

# ॥ द्रौपदीपरिणयम् ॥



ऐक्यं प्राप्तौ शब्दतश्चार्थतश्च
श्यामामाभां बिभ्रतौ लोहितां च ।
प्रीतिं सान्द्रामुद्वहेते शिवौ यौ
भूयास्तां तौ भूयसे श्रेयसे नः ॥ १ ॥

अर्धं वधूः पत्युरितीरयन्तीं
प्रत्नां गिरं कर्तुमिव प्रमाणम् ।
स्त्रीपुंसरूपार्धयुगात्मकं मे
द्वन्द्वं तदानन्दभरं विधत्ताम् ॥ २ ॥

हस्ताग्रोदस्तमम्भोनिधिजलमखिलं पातुमिच्छन्द्विजेन
क्षुण्णा केनापि सेयं सरणिरिति पुनर्यस्तदुज्झाञ्चकार ।
प्रत्यूहव्यूहनिर्भेदननिपुणपदाम्भोजसेवाप्रभावः
काल्याणानां कदम्बं कलयतु भवतां स द्विपेन्द्रः पुराणः ॥

प्राणेषु पञ्चस्विव पाण्डवेषु
प्रकाशयन्प्रीतिमकालिमां यः ।
सभागतां पालयति स्म कृष्णां
कृपानिधिं कृष्णमुपास्महे तम् ॥ ४ ॥

सौधेषु या लोचनजालकेषु
मुखाभिधानेषु चतुर्मुखस्य ।

आभाति पारावतभामिनीव
सा भारती मद्वदने चकास्तु ॥ ५ ॥

वन्दे मुनिं तं प्रथमं कवीनां
प्रकाशिता यस्य न चेद्वचोभिः ।
गणा गुणानां रघुनन्दनस्य
ज्ञातुं क ईष्टेऽद्यतनः कविस्तान् ॥ ६ ॥

आख्यातुमर्थं निगमैरनुक्तं
कर्तुं तदुक्तं च सुबोधमर्थम् ।
चकार यो भारतसंज्ञमन्यं
वेदं भजे तं मुनिसार्वभौमम् ॥ ७ ॥

प्राचेतसे या जगति प्ररूढा
या पुष्पिता सत्यवतीकुमारे ।
सा कालिदासे फलिता कवीना-
मेकोपमाने कविताल्लताभूत् ॥ ८ ॥

अन्येऽपि सन्ति भवभूतिमुरारिमाघ-
श्रीहर्षभारविमुखाः प्रथिताः कवीन्द्राः ।
तेषां प्रशंसनविधौ पटुता कुतः स्या-
त्तत्ता न मे यदुत यन्न च तादृशत्वम् ॥ ९ ॥

विधेः सकाशाद्विहितावतारा
भूयो धराया दिवमारुरुक्षुः ।
स्थिरीकृता येन हि गीरिहैव
श्रीलोकनाथं जनकं भजे तम् ॥ १० ॥

विपश्चिदग्रेसरमग्रजं तं
श्रीरामचन्द्रं नतिकर्म कुर्मः ।
चित्ते सदा यस्य शिवो वसन्न
सस्मार कैलासवटद्रुमूलम् ॥ ११ ॥

तादृङ्मन्दरशैलमूलविपुलग्रावावलीनिष्ठुरा-
घातेन क्षुभितां सुधां हसति यद्वाणी प्रसादान्विता ।
ज्यायांसं तमिमं पतञ्जलिबुधं वन्दे न वाचस्पति-
स्तुल्यो येन निरन्तरार्जवजुषा शश्वद्भजन्वक्रताम् ॥

एषा रुक्मिणीजानकीपार्वतीपरिणयाभिधप्रबन्धत्रय-संदर्भणधुरंधरेण निर्यत्नरचितचित्ररत्नाकरेण ताण्डवस्तवार्धनारीश्वरस्तवनिर्माणालंकर्माणेन चक्रकविना क्रियते पुण्यश्लोकानां पाण्डवानां चरितकथनेनाघौघविघटनप्रतिभूरनवद्यैः पद्यैरतिहृद्यैर्गद्यैश्च निरन्तरतरङ्गितध्वनिः शारदाजयकम्बुर्द्रौपदीपरिणयचम्पूः ॥

आर्याः पुर्यामेकचक्राभिधायां
सत्रा मात्रा पाण्डुभूपालपुत्राः ।
स्फारेऽगारे चक्रिरे विप्रवेष-
च्छन्ना वासं कस्यचिद्भूसुरस्य ॥ १३ ॥

उद्धृत्य मध्याद्भवतीति शब्दं
कृत्वा तमादौ धृतविप्रवेषाः ।
भिक्षामटन्तो द्विजयोषितस्ते
सविस्मयाश्चक्रुरमर्त्यभासः ॥ १४ ॥

अन्ये जनन्या सममर्धतस्ते
तृप्तिं ययुः पञ्चभिराहृतस्य ।
भैक्षस्य भीमस्तु कथं कथंचि-
दर्धेन रक्षामकरोदसूनाम् ॥ १५ ॥

शुश्रूषया प्रीणयन्तो मातरं राजनन्दनाः ।
इत्थं ते चक्रिरे वासं कंचित्कालं द्विजालये ॥ १६ ॥

कदाचिदङ्के विनिवेश्य पुत्रं
तस्मिन्गृहे रोदनमाचरन्तौ ।
उपेत्य कुन्ती द्विजदम्पती तौ
शोकस्य हेतुं स्वयमन्वयुङ्क्त ॥ १७ ॥

तया नियुक्ते सति साश्रुधारे
दृशौ कराग्रेण मुहुर्विमृज्य ।
धरासुरः स्तम्भितगाढशोकः
शुचो निदानं निजगाद कुन्तीम् ॥ १८ ॥

इह खलु यमुनातटनिकटे निस्तुलनिजबलनिरस्तसमस्तजनः, अखर्वपर्वतगर्वसर्वंकषशरीरः, पर्जन्यरवोर्जितेन कण्ठगर्जितेन निर्जरसोऽपि संतर्जयन्, मानुषामिषकुक्षिंभरिः, करालैः कङ्कालनलककपालशङ्खप्रमुखैर्नरास्थिभिर्निरन्तराणि पर्यन्तकान्ताराणि कलयन्, प्राणिहिंसासक्तचित्तः, संततं क्षुधार्ततया तरक्षुऋक्षहर्यक्षमहेभसैरिभरासभप्लवंगकुरङ्गक्रोडचिक्रोडप्रमुखं प्राणिजातमन्यदपि वन्यमहन्यहन्यश्नन्,

(क्रमशः ।)

## देशवृत्तान्ताः ॥

लोकमान्येन बालगङ्गाधरतिलक् इति सुप्रसिद्धनाम्ना महाराष्ट्रभाषया प्रणीतं गीतारहस्यविवरणं अन्यास्वपि भाषासु तत्तद्भाषाप्रवीणैः सर्वजनोपकाराय विपरिणम्यत इति ज्ञायते। तेषु विपरिणामेषु द्रामिडभाषायां तञ्जापुरवास्तव्येन पण्डितसुब्रह्मण्यशास्त्रिणा विपरिणताः केचनांशाः अस्माभिः श्रीवाणीविलासमुद्रालये यदृच्छया अनुवाचिताः गीतायाः कर्मयोगे एव मुख्यं तात्पर्यमित्यादिकं सोपपत्तिकमवबोधयन्ति। सोऽयं ग्रन्थः अवश्यं सर्वैरपि विबुधवरैः सश्रद्धं पठनीय इति मन्यामहे ॥

---

# The Sanskrit Journal

OR

## ॥ सहृदया ॥

EDITOR

R. Krishnamachariar, M.A.,

Vidyanidhi.

VOL. XXI.

No. 9—10.



PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM

AND PUBLISHED AT MADRAS.



Registered No. M. 103

# Sahridaya.

Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.

2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.

3. The last form of every issue is devoted to publishing rare and useful works.

4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.

. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, 1/3 Ormes Road, Kilpauk, Post, Madras (W).

6. Annual subscription is Rs. 3 only, including postage.

॥ श्रीः ॥

# ॥ सद्धृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ९. ] नलवर्ष मार्गशीर्षमासः । [ संचि. ९.

## सुभाषितानि ॥



न देवो विद्यते काष्ठे न पाषाणे न मृण्मये ।
भावेषु विद्यते देवस्तस्माद्भावो हि कारणम् ॥ १॥

गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥ २ ॥

नात्यर्थमर्थार्थितया लुब्धमुद्वेजयेज्जनम् ।
अब्धिर्दत्वाश्वरत्नं स्त्रीमथ्यमानोऽसृजद्विषम् ॥ ३ ॥

उपकर्तुं यथा स्वल्पः समर्थो न तथा महान् ।
प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः ॥ ४ ॥

देवे तीर्थे द्विजे मन्त्रे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ५ ॥

॥ श्रीः ॥

# ॥ श्रीवाणीविलासीयं शाकुन्तलम् ॥

महानयं खलु भारत्या भाग्योदयः यदन्वर्थनाम्नः श्रीवाणीविलासमन्दिराद्देववाण्यां प्राचीनैर्महर्षिभिः कविभिश्च प्रथितान्यमूल्यान्यपि भारतर्षीयाणामनादरेण मालिन्यमापादितानि कुत्रचित्कोणेषु पण्डितपुत्रैरसूर्यपश्यतया बिनिहितानि वम्रिभिः सोत्साहमवलीढानि ग्रन्थरत्नानि अधुना बहिरानीतानि संस्कृतानि च दृढे रमणीये च पत्रे सुष्टु प्रकाश्यमानानि प्रेक्षकाणामावर्जयन्ति मनांसीति । न केवलममुद्रिता अनादृताश्च ग्रन्थाः मुद्रणालयादस्माद्बहिरवतार्यन्ते ; परं तु अन्यत्र मुद्रिता अपि ग्रन्थाः प्रायः पत्रदरिद्राः अस्फुटवर्णाः अपशब्दबहुला वक्रपङ्क्तयः क्षुत्क्षामावयवा इव अदर्शनीयाः महाव्याधिग्रस्ता इव अस्पृश्याः जराजीर्णा इव शिथिलितसंधिबन्धनाः, तपस्विन इव असंस्कृताकृतयः, प्रहेलिका इव अक्षरच्युतकमात्राच्युतकबिन्दुच्युतकादिभिराकीर्णाः, ईश्वर इव आदिमध्यान्तरहिताः, असंसिक्तपादपा इव विशीर्णपत्राः, आसन्ननिर्वाणाः प्रदीपवर्तय इव कज्जलमषीमलिनाः, कृपणां दशामनुभवन्तीति आकलयता, 'नूतनालयप्रतिष्ठाया अपि जीर्णदेवायतनानां संस्करणं प्रशस्यतरो धर्मः' इति गुरुभिरुपदिष्टेन उदाराशयेन एतन्मुद्रणालयाधिपेन तादृशाः ग्रन्था अपि सम्यक् परिशोधिताः हृदयावर्जकेन स्पृहणीयेन अन्तर्बहिश्च समुज्ज्वलेन रूपेण प्रकाश्यमानाः कामप्यपूर्वां शोभां पुष्णन्तीत्यहो ! भागधेय-

परम्परा गीर्वाणवाण्याः ।

तादृशेषु ग्रन्थरत्नेषु 'श्रीमच्छाङ्करग्रन्थरत्नपेटिका' प्रथमोदाहरणं भवतीति पूर्वं कदाचित् सहृदया सहृदयेभ्यो निवेदितवतीति विदितं स्यादेव पत्रिकानुवाचकानाम् । अद्य तु कविसार्वभौमप्रणीतमासेतुहिमाचलमखिलैरप्यमरवाणीप्रणयिभिः अस्मद्देशीयैरन्यदेशीयैरपि अभिनन्दनीयेष्वास्वादनीयेष्वनुपमेषु रूपकेषु प्रधानत्वेन परिगणितं अभिज्ञानशाकुन्तलं नाम नाटकमभिरामीयेन विवरणेन अभिरामेण रूपेण अभिनवेन प्रकारेण आस्वाद्ययावतरणिकया दर्शनीयाभिः प्रतिकृतिभिः समुपेतमस्मत्पत्रमन्दिरमायातं आह्लादमनितरसाधारणं जनयति ॥

प्रथमं तावत्पुरस्ताद्ग्रन्थस्य बहिरेव 'शाकुन्तल' नाम गर्भाः अधः शायितायाः सद्यो मेनकागर्भाद्भुवं प्राप्तायाः वनभुवि निर्दयं परित्यक्तायाः बालिकायाः उपरि शकुन्तैर्विवृतपक्षपुटैर्निरुद्धप्रसराः भासुराः रश्मयोह्यंशुमालिनः अतिरमणीयमालिखिताः 'सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम्' इत्यत्र सूचितं नायिकायाः जन्मपोषणनामकरणादिवृत्तान्तमनक्षरमावेदयन्ति, प्रकाशयन्ति चापूर्वां प्रतिभां रसिकतां च मुद्रापयितुरस्य कोशस्य ॥

पार्श्वे च बहिरेकत्र स्वर्णरेखाभासुरा मत्स्यनिगीर्णाङ्गुलीयकाभिज्ञानमुद्रा चमत्करोति सद्यः सहृदयसमाजम् । अक्षरैः रेखाभिश्चानलंकृतः पश्चाद्भागोऽपि अभिज्ञानादर्शनेन निरालोके तमसि मज्जतो नायकस्य शून्यं हृदयमनुमापयति रसिकान् ॥

उद्घाटिते च कोशे तपोवनभुवि प्रथममालवालाम्बुसंसेच-

नपयोघटसमलंकृतहस्तया प्रियंवदया अदयपिनद्धं स्तनवल्कलं शिथिलयन्त्या अनसूयया च समुपेतायाः नवे वयसि वर्तमानायाः किञ्चिदुन्मुक्तबालभावायाः पयोधरविस्तारयितृकेन यौवनेनानुक्षणमुच्चीयमानलावण्यपूरप्रसरायाः हरिणशावकेनानुगम्यमानायाः शकुन्तलायाः प्रतिरूपकं विस्मृतनिमेषाभ्यां लोचनाभ्यां सस्पृहमापीयमानं भावुकानां मानसान्याश्चर्यस्नेहबहुमानतरङ्गितान्यातनोति ॥

अथ च मेनकया समुपास्यमानस्य, अनादृत्य नियमम्, विस्मृत्य तपश्चरणव्रतं, पञ्चभिरपि अनेकसहस्रतां गतैरिन्द्रियैराया स्यमानस्य मदनवशीकृतस्य विश्वामित्रमुनेः प्रतिच्छन्दकं 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' इत्यादिनानुवर्णितं भगवतो मकरकेतनस्य वैभवमनितरसाधारणमावेदयति ॥

अनन्तरमनङ्गवेदनसन्तप्तान्तरङ्गायाः अतिभूमिं गतां मदनावस्थामनुभवन्त्याः विषण्णमुखीभ्यां प्रतीकारकरणोद्यताभ्यां ताभ्यामेव सखीभ्यां प्रियंवदानसूयाभ्यां हरिणेन च समावृताया मदनलेखलेखनव्यापृतायाः नायिकायाः आलेख्यं निर्वर्णयन्तो वयं करुणरसेनापूरितान्तरङ्गाः साक्षात्तत्संनिधिगता इव समदुःखा भवामः ॥

ततश्चादूरकोपेन दुर्वाससा शापदानप्रसृतेन निर्दयं शप्यमानायाः वियोगानलदग्धान्तःकरणाया इव शून्यहृदयायाः दुष्यन्तादन्यत्किमपि मनस्यनाकलयन्त्याः शकुन्तलायाः प्रतिकृतिरालोक्यमाना कठोरहृदयस्यानधिगतसौभाग्यगन्धस्य दुष्टब्राह्मणस्य दुर्वाससः प्रतिशापदाने अस्माकमाग्रहमभ्यधिकमुपजनयति ॥

अनन्तरं कतिचन पत्राण्याच्छिद्यानुपश्यतामस्माकं स्वानि भाग्यानि निन्दन्ती सैव बाला बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता अप्सरस्तीर्थमारान्मेनकया समुत्क्षिप्य नीयमाना अस्मन्नयनगोचरीभूता सांसारिकदुःखमतर्कितोपनतमविज्ञातमूलमसहनीयावेगमप्रतीकार - दारुणमायासयत्यमरतरुणीसमुत्पन्नान्यप्यपत्यानीति बोधयन्ती पार्थिवसुखस्य सौदामनीस्फुरणचञ्चलतामुपदिशन्ती अश्रुबिन्दुतरलिततारकानातनोति भावुकानित्यहो! आलेख्यालेखनकौशलम् ॥

अथ नितरामुत्कण्ठितहृदयेन अङ्गुलीयकदर्शनेन सर्वमपि पूर्वोदन्तं करतलामलकवदनुपश्यता आत्मनो दारुणं वृत्तमनुस्मृत्यानुस्मृत्य विषीदता दुष्यन्तेन सकरुणमनुवर्ण्यमानं साङ्गुलीयकप्रदानं सप्रतिज्ञं च कण्वाश्रमादात्मनः शकुन्तलायाः प्रस्थानपरिरम्भणाश्वासादिकमावेदयदालेख्यमानन्दयति रसिकजनमनांसि ॥

ततः काश्यपाश्रमोपकण्ठे सर्वदमनस्यान्वर्थनाम्नः शकुन्तलातनयस्य निरतिशयं बलमाविष्कुर्वतो निरपराधमधुरवयसि वर्तमानस्य बालकस्य प्रतिकृतिर्यथावदालिखिता 'महतस्तेजसो बीजं बालोऽयम्' इति साधु प्रत्याययति प्रेक्षकान् ॥

एवं विधानन्यांश्च हृदयावर्जकान्मुद्रणसौष्ठवप्रकारानभिनन्दितवता ग्रन्थपठनाभिलाषिणामस्माकमाङ्गलवाण्या समुल्लिखिता काचन ग्रन्थावतारणिका समालोचनापदवीमवतरति । केयमवतारिणिका? कमपूर्वमर्थमभिधत्ते? शाकुन्तलं नामेदं सुप्रसिद्धं सुविदितं चासेतुहिमाचलमन्येषु च वर्षेषु । तादृशस्य नवीनया अवतरणिकया कीदृशी सुषमा समुत्पाद्यत इत्यादिकमिदानीं विमर्शकोटिमाटीकते ॥

प्रथमं तावदवतरणिकायां अखिलभारतवर्षीयविद्वद्वृन्दैरैकमत्येन दृश्यकाव्येषु अत्युत्तमत्वेन परिगणितमिदं रूपकं कविसार्वभौमस्य चराचरस्वरूपविज्ञानमनितरसाधारणं तत्तद्वस्तुतत्वानां यथावस्थितरीत्यानुवर्णनमन्यादृशं वर्णनानुगुणवाग्वैखरीमनुपदमास्वादनीयां कथावस्तुनिरूपणनैपुण्यमनुपमं च साध्ववबोधयतीति देशान्तरीया अपि निर्विवादमभ्युपगच्छन्ति । कालिदासीयकाव्येषु यस्य मनो न लगति तेन भारतवर्षीयाणां यथावस्थितस्वरूपमेव न ज्ञायेत' इत्यादि निरूपयन् मुद्रापकः रूपकस्यास्यानुवाचने महतीमुत्कण्ठां जनयति ॥

अथ कालिदासस्य ब्राह्मणकुले जननम्, अर्भकदशायामेव पित्रोर्निधनम्, गोपैरभिपोषणम्, अनधिगतविद्यागन्धस्य तस्य दृप्तराजकन्यापरिणयः, राजकन्यानुशिष्टेन वर्त्मना देवीप्रसादमुपलब्धवतस्तस्य निखिलविद्यानिदानबीजाक्षरावाप्तिः 'अस्ति कश्चिद्वागर्थः' इति राजपुत्र्यानुयुक्तेन तेन 'अस्त्युत्तरस्यां दिशि 'कश्चित्कान्ताविरहगुरुणा' 'वागर्थाविव संपृक्तौ' इत्याद्युपक्रमप्रद्यत्रयेण काव्यत्रितयेनात्मनो देवीप्रसादमहिमाविष्करणम्— इत्यादिकथां कर्णपरम्परया श्रूयमाणामनुवर्णयन्कविसार्वभौमे महद्गौरवमापादयति च ॥

तेन प्रणीतेषु काव्येषु शाकुन्तलमेव भारतवर्षीणीयाणां प्रतिभायाः परां काष्ठामावेदयति । नाटकेनानेन कविसार्वभौमस्य प्रशस्तिर्दिगन्तविख्याता 'यद्यद्रमणीयं मधुरं सरसमावर्जकं च वाग्गुम्भनमुपलभ्यते तत्सर्वं कालिदासमुखाद्विनिर्गतं स्यादिति प्रत्ययमजनयत्सर्वेषां सहृयाना चेतसि ॥

पाश्चात्या अपि विबुधाः शाकुन्तलस्य रामणीयकमन्यादृशमित्यभ्युपगच्छन्ति । मानियर्विल्लियम् नामकः कश्चन विपश्चिद्वरः कालिदासस्य प्रतिभावैशद्यमाशयगाम्भीर्यमुत्प्रेक्षानैपुण्यं सर्वास्ववस्थासु जनिमतां हृदयस्वरूपपरिज्ञानं ललितानां च भावानामभिनन्दनं भिन्नानां विरुद्धानां च मनोवृत्तीनां यथावस्थितविज्ञानं च नाटकेऽस्मिन्नाविष्कृतानि तमेनं महाकविमाङ्गलमहाकविना षेक्स्पयर् (Shakespeare) नामकेन समतुलामधिरोपयन्ति' इति विश्वसिति ॥

ऐरोपीयकविषु प्रधानत्वेन परिगणितो गीटे (Goete) नामकः शाकुन्तलमधिकृत्य— 'लोकेऽस्मिन्प्राणिनां प्रथमे वयसि अनुक्षणमुपचीयमानानुरागप्रेमप्रमोदादिरसस्फूर्तिश्चरमे च सर्वविषयनिवृत्तिपूर्वकारतिजुगुप्सावैराग्यशमदमादिसंपत्ति च एकत्र एकदैव संमिलिते संद्रष्टुमभिलाषश्चेत् सहृदयस्य शकुन्तलैव प्रमदाहरणं भवितुमर्हति' इत्यात्मन आशयमतिगभीरमावेदयामास— इत्यादि निर्दिशन्नवतरणिकाकारः मधुरया वाक्सरण्या कथावस्तु सङ्ग्रहेणोपक्षिप्य महाभारतकथातः कविनाननावान्यथयितानंशान्सरसमुपपाद्य, तमिमाशयं विस्तरेणावबोधयितुमुपक्रमते । तथा हि— प्रथमेऽङ्के अनुमालिनीतीरमरम्यामवनौ शकुन्तलायाः प्रथमे वयसि वर्तमानायाः अविज्ञातलोकवृत्तायाः केवलमनभिज्ञेयस्वरूपेणानुरागेणापूरितान्तरङ्गायाः दुष्यन्तेन समागमः, चरमे चाङ्के अतर्कितोपनतैर्दुःखाभिषङ्गैः कलुषितान्तरङ्गायाः संसारमसारमाकलयन्त्याः तपस्विन्यास्तस्या एव देवभूमौ मारीचाश्रमे तेनैवानुशयनिर्विण्णचेतसा पुनःसमागमः द्यावापृथिव्योर्भिन्नप्रकृतिकयोरेकत्र मेलनं महाकवे-

हृदयगतमवगमयति भावुकान् । भूमौ केवलमन्योन्यरूपवशीकृतान्तरङ्गयोरदूरदर्शिनोः स्त्रीपुंसयोः समागमः क्षणभङ्गुरो न सर्वथा चिरस्थायीत्यनुभूयते । द्युलोके तु अनुतापानुतप्तहृदययोः प्रायः पार्थिवभोगविमुखयोस्तयोरन्योन्यलाभः स्नेहसर्वस्वभूतेनात्मजेन भरतेन दृढीकृतः अभङ्गुरः सुश्लिष्टश्च समुपलभ्यते-' इति ॥

एवं विप्रलम्भेन अनुतापेन अनुशयेन च तप्यमानहृदययोः परस्परप्राप्तिनिराशयोः पुनः समागमे यादृशः सुखानुभवस्तादृशः सुलभलब्धे तस्मिन्न संभवतीत्याद्याशयविशेषानतिरमणीमाङ्गवाण्या समुदाहरन् चमत्करोति सहृदयान् ॥

अथ नायिकयोरन्येषां च पात्राणां यथावस्थितस्वभावं रूपके तत्र तत्र संसूचितमन्यूनानतिरेकेण वर्णयन् नायिकायाः अतिथिपूजारूपस्वधर्मविस्मारकेण अतिभूमिं गतेनानुरागेणानर्थपरम्परा समापतितेत्यभिज्ञानां मतमुपक्षिपन् कालिदासस्य जीवनकालनिर्णये काश्चन नवीना युक्तीरुपपादयन् इदं प्रथमतयात्र प्रकाशितस्य अभिरामीयविवरणस्य व्याख्यानान्तरापेक्षया विशेषमनुवर्णयन्विरमति। अवतरणिकाहीयमवश्यं सहृदयैरभिनन्दनीया नाटकस्यास्य अनितरसाधारणीं सुषमामापादयतीति सप्रमोदं निवेदयामः॥

संपादकः

॥ श्रीः ॥

# ॥ धर्मे सर्वं प्रतिष्ठितम् ॥

[ पूर्वतोऽनुवृत्तम् । ]

——*——

तस्य वचसः स्मरणमपि मास्तु, परित्यजत रे परित्यजत माम्, कति पीडयथ, न मे भ्रंशनीय आर्यधर्मः, नीचतरेण कर्मणा नेन न खलु सम्पद्यते सुकृतं भवताम्, एषोऽहं संवृत्तोऽस्मि परेतपतेरतिथिः। (विचिन्त्य) हा एते अकरुणहृदयाः, अलमेतेषां पापानां प्रार्थनया, अरण्ये रुदितं कृतमेतावन्तं समयम्, अविध अविध आनीतमानीतं तत्पललं तेन दुरात्मना। अब्रह्मण्यमब्रह्मण्यम्। (सर्वतो दृष्टिं विकीर्य) हा हन्त न कोऽप्यत्रार्यधर्मरक्षिता, विलोक्यताम्, हसन्त्येते पापाः क्रन्दन्तं मां वीक्ष्य। मूर्खाः हसथ हसथ, नीचाः। जन्मान्तरमधिगत्यापि वा निःसंदेहं करिष्ये प्रतिक्रियामस्य। हन्त हन्त अये आर्यधर्मैकजीविता भारतीयाः? धावत धावत, अनार्यमाचरन्त्येते पापाः, परिपाल्यतामार्यधर्मः। मोचयत मोचयत मामकरुणहृदयेभ्य एतेभ्यः। सम्पादयन्त्वार्यधर्मपरिपालनजन्यमार्तत्राणजन्यञ्च सुकृतम्। वितरतु भवतां भगवानेकलिङ्गेश्वरोऽनल्पं मङ्गलमिहामुत्र च ॥

दीनदीनमेवमाक्रन्दति कृष्णतनये 'हा अङ्ग न भेतव्यं न भेतव्यम्, एषोऽहं समागतः, पश्यामि बलं दुरात्मनां यवनहतकानाम् इति कुतोऽप्यश्रूयत शब्दः'। अबदूलखानः सभृत्यः कृष्णतनयं परित्यज्य ससंभ्रमं सभयं च सर्वा दिशो निरीक्षितुं प्राक्रमत। समयेऽस्मिन्नासन्नत्रिंशा निशि चन्द्रहासपाणयो रजपूतभटाः सह-

सा तत्कारागारमागच्छन् । तदात्व एव च कृष्णतनयस्य निगडं निरातङ्कं छित्वा तत्रत्यान् यवनान् स्वैरं ताडयामासुः । यवनाश्च ते तेन प्रहारेण मूर्च्छिता न्यपतन् भुवि । अबदूलखानोऽपि नितान्तं दयनीयां दशामापेदे । यवनोपाध्यायस्य पलायनमेव शरणं मत्वा कुत्रापि प्रस्थितस्य वार्ताऽपि नाम नासीत्तत्र । इतः किल सहसोत्थितः सानुरागं सखे! रामसिंह फलिताद्य मे प्रेमलतिका, एतदेव पुनरव्याजसौहार्दस्य लक्षणम् । कियन्ति वा जीवितजन्मान्यधिगत्यैतं तवोपकृतिभरं लघूकरिष्ये? भगवन् दीनबन्धो एकलिङ्गप्रभो! भवताऽपि ननु श्रुतो भक्तस्य ममार्तरवः, विश्रुतं हि भवतो भक्तवात्सल्यं जगति, इति सानन्दनिर्भरं निजगाद । रामसिंहोऽपि कृष्णतनयं सानन्दं सप्रणयञ्च गाढतरं परिरभ्य तेन सह रजपूतवीरपरिवृतः सत्वरं ततः प्रस्थितः प्रजावत्सलस्य हम्मीरचक्रवर्तिनः सान्निध्यमध्यगच्छत्सुखेन । पाठकवराः? 'धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः' इतीदं भागवतं वचनं कथं वा भवेदनृतम् ?

चिदम्बरशर्मा (बडली)

---

॥ श्रीः ॥

## ॥ श्रीरामोदन्तः ॥

---

[पूर्वतोऽनुवृत्तम् ।]

अथ निशम्य मारुतेर्वचनं क्रुद्ध आशरेश्वरः 'अद्यैव छिनद्मि प्रमदावनच्छिदोऽस्य शीर्षम्, खड्गमानयत' इति राक्षसान्स-

मादिक्षत् । तदा विभीषणः स्वार्थाबाहितचित्तः सत्यपि दोषे प्रणिध-योऽवध्या इत्यादिनीतिवाक्यैस्तस्य हननं न्यरुधत् ॥

अथाकर्ण्य विभीषणोक्तिं दूतवधो निन्दित एवेति मन्वानो रजनीचरपतिर्लाङ्गूलमेव हि भूषणमिष्टं शाखामृगाणाम् । तदेत-त्तैलार्द्रैः कार्पासवासोभिः संवेष्ट्य वह्निसात्कुर्वन्तु भवन्त इति राक्षसान्समादिक्षत् । अथ क्षपाटैस्तथाचरिते राक्षसीमुखान्निशम्य कर्णारुन्तुदमिमं वृत्तान्तं दुःखसन्तप्ता जानकी प्रयता हिरण्यरेतसमु-पतस्थे—

यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ।
यदि वा त्वेकपत्नीत्वं शीतो भव हनूमतः ॥

इति । हव्यवाहश्च प्रदक्षिणभ्रमणेन सूचयन्निव जनकसुतायै मारुते-र्भावुकोदर्कं प्राज्वलीत् । स्वास्थ्यपिशुनः प्रभञ्जनोऽपि प्रालेयानिल-शीतलो वाति स्म ॥

प्राभञ्जनिस्तु प्रदीप्तवालधिः सतटिन्मेघ इव भासमानः समु-त्पत्य तोरणं तत्रत्येन संस्तुतपूर्वेण परिघेण क्षपाटान्सूदयन्प्रतिमन्दि-रमवप्लुत्य विभीषणस्य परमुत्सृज्य निकेतनं त्रिपुरमिव रुद्रो नगरीं लङ्कां तथा ददाह— यथा हा पुत्रक! हा मातः! हा पितः! हा भ्रातः! इति क्रन्दन्तः पावकपरीतावयवा यातुधानाः परितोऽधावन् । अवदंश्च, 'किं कुर्महे! कं वा शरणं प्राप्नुमः! भगवानुषर्बुध एव सर्वराक्षसविनाशाय वानररूपेण समागतः' इति । तदनु सीतादाह-शङ्की दूयमानमानसो मारुतिस्तन्मङ्गलविषयां निशम्य चारणोक्तिम-वापामन्दमानन्दम् ॥

अथ सागरे सिक्तवालधिः सद्य एव प्रमदावनं प्राप्य तत्र

शिंशपामूलमधिवसन्तीमभिवाद्य जनकनन्दिनीं समाश्वास्य च देवि! यामि रघुनन्दनसमीपमिति ब्रुवाणः कृतनिदेशस्य तया शत्रूणां भयङ्करं रूपं विधायाकाशमुदपतत् । अथ समारुह्याऽरिष्टशैलं समुल्लंघ्याप्रतिहतमेव पाथोनिधिं समवाप्य च विविधतरुषण्डमण्डितं महेन्द्रगिरिं मन्दहासेन प्रकाशितकार्यनिश्चयस्तत्रस्थानङ्गदादीन्पारपूर्णमनोरथानकार्षीत् ॥

अथ जाम्बवदादिभिः प्रार्थितः स्ववृत्तान्तं सविस्तरमकथयत् । तदनु परमानन्दतुन्दिलहृदयास्ते समुत्पत्य महेन्द्रपर्वताग्रान्मध्येमार्गं नन्दनोपमं सुग्रीवस्य मधुवमं पवनतनयनिदेशेनाक्रम्य मधु यथेष्टमपिबन् ॥

अथ तत्पालकेन दधिमुखनाम्ना कपिना निवारयैतानित्यभिहितोऽङ्गदो हे! दधिमुख! गच्छ यथागतम् । कृतकार्यस्य महावीरस्य हनूमत आदरणीयमेवाकृत्यमपि । किं पुनः कृत्यम् । मधुपानसुखमनुभवन्तु प्लवङ्गमसेना इत्यब्रवीत ॥

तदनु भीतो वनपालकः सानुयायी सुग्रीवमवाप्योद्विग्नहृदयो वृत्तान्तमिममशिश्रवत् । तद्वार्ताश्रवणक्षण एव निश्चितदेवीदर्शनस्तपनतनयोऽमन्दानन्दभरितो बभूव ॥

सद्य एव श्रीरामदर्शनाकांक्षिणी वानरसेनाऽप्यहमहमिकयारादाविरभूत् । तच्छ्रवणपरमानन्दतुन्दिलहृदयाभ्यां दाशरथिभ्यां सादरं बहुमानादवलोकितः पवनतनयश्चूडामणिं पाणौ कृत्य सप्रश्रयं श्रीमद्रघुनन्दनचरणारविन्दयुगलमविन्दत ॥

अथाभिज्ञानसान्निध्यात्संजातानन्दथुना रघुनायकेनानुयुक्तः प्राभञ्जनिः सप्रश्रयं विज्ञापयामास ॥

देव! अद्राक्षं लङ्कापुरोद्यानवनप्रदेश आरक्षकराक्षसीभिर्भर्त्स्यमानां देवीं जनकनन्दिनीम् । इक्ष्वाकुवंशविख्यातिं कर्णानन्दकरमेव कीर्तयता दर्शयता च तद्दुःखनाशकं भवन्नामाङ्कितमङ्गुलीयकं मया कथंचिद्विश्वासिताभूत् । अथ प्रयियासौ मयि याचितवत्यदिज्ञानं चित्रकूटतटविपिनसंभूतां वासविवायसकथां निवेदयित्वानुभूतपूर्वसङ्कटस्मरणवशादतीव दूयमाना शिरोरत्नं चेदं प्रादात्' इति ॥

अथ रघुनन्दनो वैदेह्या कथितं सर्वमप्यानुपूर्व्येणाभिहितवता हनुमता दत्तं चूडामणिं सन्निवेश्य क्रोडतले संभाव्य च बहुधा तं गाढतरपरिष्वङ्गमकार्षीत् ॥

इति सुन्दरकाण्डः समाप्तः ॥



## अथ युद्धकाण्डः ॥



अथ वातात्मजाद्विदितसीतावृत्तान्तेन रघुनन्दनेन शरासनावलोकनसंज्ञया जैत्रयात्रासन्नाहाय समादिष्टस्तपनतनयः सन्नाहयामास निखिलमपि निजमनीकम् । तदन्वञ्जनातनयमेव पुष्परथमधितिष्ठति श्रीरामचन्द्रे किलकिलध्वनिबधिरिताशावकाशा साटोपं समुदजृम्भत वानरसेना ॥

अथ सहरघुनन्दना समावृतासिन्धुकूलं कुलशैलं प्राप्य प्लवङ्गमवाहिनी वाहिनीपतिव्यवधानां पवनतनयाङ्गुलिदर्शितां दिशं दक्षिणामुदक्षाऽद्राक्षीत् । समासदच्च ततस्त्वरितमेव जलदगम्भीरस्वनाभिः

कल्लोलमालाभिः शोभमानं पाथोनिधिम् । अथ वानरेन्द्रो राघवाज्ञया वेलोपवनप्रदेशे न्यवेशयत्सैन्यं स्वकीयम् ॥

चारद्वारा विदितवृत्तान्तः पदे पदे भयानकं मारुतिचरितं सभायां वदन्राक्षसराजोऽपि साकं मन्त्रिभिर्मन्त्रयामास । तदा 'देव देवासुराणामपि जेतृणामस्माकं कियान्मानवयोस्तापसयोराघवयोर्विजयः ? वानराज्जातपराभवस्तु भवदनवधानतामूलकः । भवान्ह्यनुसरन्ननुजवचनं शस्त्रव्यापादनीयस्य चपलप्रकृतेरपि कपेर्लाङ्गूलं भस्मसात्कर्तुं भृत्यान्समादिक्षत् । ते तु वालधौ वह्निं निक्षिप्य तावतातृप्यन्तस्तं घृतादिभिरपि वर्धयामासुः । प्रतिमन्दिरमुत्पत्य गच्छतस्तस्य पुच्छात्पतन्वह्निर्लङ्कामखिलामधाक्षीत् । काऽत्र वर्तते प्लवङ्गस्य शक्तिः ? त्यज्यतामियं चिन्ता । नैव न्यूनतायै स्यात्सामादिकः परिभवः । चेदाज्ञापयति भवान्करोम्यद्यैवाचलामवानराम् । सराघवापि कपिवाहिनी नालं कस्य चिदप्यस्मासु प्रातरशनायापीति' प्रहस्ते साटोपं वदत्यन्येषु निकुम्भादिषु च राममद्यैव हनिष्यामस्सलक्ष्मणमिति सायुधेषु गर्जत्सु विहितदेवतापूजो मात्रा नैकष्या धीमन् ! सद्बुद्धिमुपदिश मदोद्धताय सोदरायेति प्रहितो विभीषणो निशम्य प्रहस्तादीनां वचनं क्रुद्ध आबभाषे —

हे निशाचराः ! यदुक्तं भवद्भिर्नालं प्रातरशनायापीति तद्वदन्तु भवन्तः पणीकृत्यासून् । असहायोऽपि धनुर्मात्रायुधोऽपि पदातिरपि तापसोऽपि यो विविधमायायुतांश्चतुर्दशसहस्रसंख्याकान्राक्षसान्क्षणान्निजघान न कुरुध्वं तस्मिन्मानुषमात्रशङ्काम् ॥

हे नक्तञ्चरेन्द्र ! त्वया प्रकोपितैर्बर्हिर्मुखैर्नूनमजय्यःपरं नराकृती रामः सर्वराक्षसविनाशाय विद्धि कश्चिदुपाय उत्पादित इति । याव-

न्नाभिद्रवन्ति नखायुधाः प्लवङ्गमसैनिकाः यावच्च वज्रसमाना दाशरथिप्रेरिता बाणा नो न छिन्दन्ति शिरांसि प्रत्यर्पय मैथिलीम्। किंच, दृश्यन्तेऽशुभानि भयंकराणि निमित्तानि। कामाद्यरिषड्वर्गवश्यो मूर्खामात्यादिपरिवृतस्त्वं वेतण्डेन पादयुद्धमिव मा विग्रहं कार्षीर्ज्यायसा दाशरथिना। त्वरितमेव राघवं भज शरणम्। चेन्नकरोषि सन्धिं न रामचन्द्रेणेन्द्रादिभिश्चण्डसमीरणैरिव सन्धुक्षितो जायावियोगजोऽसह्यस्तत्क्रोधाग्निर्दहेत्सबन्धुभृत्यानस्मान्। किं संरम्भेण? नाऽन्यं पश्यामि लोके रामादधिकं समं वा पुरुषं, यदाश्रयेण विग्रहकालेऽस्माकं रक्षालाभः। यतः इन्द्रादयो देवाः प्रकोपितपूर्वास्त्वया। परमेष्ठी पुनस्तुभ्यं वितीर्य वरं किमिदमकार्यमनुष्ठितं मयेति सानुशयो वर्तते॥

अतो मन्ये सन्धिरेव श्रेयान् रामेण। नैवास्त्यन्य उपायः। न चेदेवं कुरुषेऽचिरादेव विनाशयिष्यन्ति कपिपुङ्गवाः सराक्षसामखिलां लङ्काम्। यावद्दाशरथिः स्वबाणविदारितदेहैर्निशाचरैर्न प्रीणयति गृध्रसृगालादीन्प्रणम तच्चरणारविन्दे। पश्य! क्व समुद्रपरिखारक्षिता लङ्का, क्व च वाङ्मनसातीता वानरादेकस्मादागता दुरवस्था। या त्वया प्रमदावने निरुद्धा ध्रुवं विद्धि तां सर्वराक्षसविनाशाय सञ्जातां सीतारूपिणीं कामपि मायाम्। अतो विमुञ्च जनकनन्दिनीम्। शृणु कल्याणकरं मदीयं वचनम्' इति॥

इत्थमभिदधानं नयाभिज्ञं विभीषणमनयाभिज्ञो रावणो भ्रुकुटिमाधाय लोचनमतिभयानकं कुर्वाणो दायादोऽप्ययमरातिपक्ष्यो दण्ड्य इत्यादिहृदयतोदकैरनुचितभाषणैरतीव व्यथयामास। किमस्ति व्याघ्रस्य स्वकीयपरकीयबुद्धिः॥

तदनु विभीषणः क्षान्त्या क्रोधं धैर्येण शोकं गर्वं प्रश्रयेण

च निगृह्णन् 'हे राक्षसाधिप! सुखमास्व मां विना। भिषगुक्तानि कटुकौषधान्यभक्षयन्मूढ आतुरो यदि सामयो नासावगदङ्कारस्य दोषः। ध्रुवं समुपागतस्ते विनाशकालः। यतो न गृह्णासि बन्धुना मयाभिहितमपि हितम्' इत्यभिधाय सद्य एव साकं निजामात्यैः समुल्लंघ्य पायोधिमन्तरिक्षगत एव शरणमवाप शरणागतवत्सलं दाशरथिम्। उवाद च, मारुतिमुखान्प्लवङ्गर्षभान्—

"निवेदयत मां क्षिप्रं राघवाय महात्मने।
सर्वलोकशरण्याय विभीषणमुपस्थितम्" ॥

इति। अथप्राभञ्जनिरेवमतिदीनं भाषमाणं राघवाय दर्शयित्वा सप्रत्यभिज्ञं विज्ञापयामास॥

हे रघुनन्दन! विभीषणोनामायं शिष्टः पुण्यजनो दुरात्मना रावणेन भ्रात्राऽवमानितो दुष्टनियन्तारं त्वां शरणं प्रपन्नः। दृष्टपूर्वोऽयं मया लङ्काप्रवेशसमये। सत्प्रकृतिनास्मत्पक्षपातेन बहूपकृतम्। न खलु मन्तव्योऽयं शत्रुरिति। वालिवधाद्विज्ञाय भवदीयं बलं राज्यं प्रार्थयमानो बुद्धिपूर्वमेव रक्षितारं त्वां शरणं पालय दयाकटाक्षवीक्षणेनाभयागतमेनम्'. इति॥

अस्मच्छत्रुरयं विश्वासानर्ह इत्यभिहितोऽपि तपनतनयेन—

"मित्रभावेन संप्राप्तं न त्यजेयं कदाचन।
दोषो यद्यपि तस्य स्यात्सतामेतद्विगर्हितम्" ॥

इति वदन्दाशरथिः सत्वरमेव हृदयज्ञेन पवनतनयेन स्वसमीपं प्रापिताय स्वागमनकारणमभिधाय साष्टाङ्गं प्रणमते विभीषणाय

(क्रमशः।)

॥ श्रीः ॥

# सालुवाभ्युदयम् ॥*

[ पूर्वतोऽनुवृत्तम् ]

—*—

हत्वा हिरण्यमपि तं स्वमदादजान-
    न्नात्मानमप्यखिललोकवधेऽप्यशान्तः ।
भीमाट्टहासपरुषास्यभवाग्निकीलो
    नेता श्रियः किमकरोन्नृपशुप्रभिन्नः ॥ ५८ ॥

स्वेनापि तानि विधिना तु (पुरा) शिविर्य-
    त्पारावतस्य पततामदिशत्पलानि ।
नानाविधानि नवरत्नमयानि तानि
    दानान्यमूनि बत तस्य तुलाधिरोहे ॥ ५९ ॥

कल्पद्रुमस्य जनकाङ्क्षितपूरणस्य
    वर्ण्यो वसन्त(सुहृदश्च) महोत्सवः किम् ।

---

* इदं किल डिण्डिमकविराजनाथेन अच्युतरायाभ्युदयाद्यनेकमञ्जुलकाव्यरचयित्रा प्रणीतं रसभावनिचुलितैराशयैः सरलया रीत्या समुपेतं केषांचित्सहृदयानां प्राचीनेतिवृत्तपठनाभिलाषिणामनुरोधेन सहृदययां मुद्राप्यते । परं तु एक एव शिथिलः कोशः तालपत्रलिखितः तत्र तत्र वम्रिभिराक्रान्तः समुपलब्धः । अतः महाभाष्ये अजभक्षिता भागा इवेहापि तत्र तत्र वित्रुटिताः पङ्क्तयः सहृदयानुवाचकानां रसभङ्गं जययेयुरिति जानन्तोऽपि वयं समग्रस्याप्यस्य काव्यस्य क्रमेणादर्शनं भवेदिति भीत्या यत्र क्वचिदादर्शान्तरमस्य लभ्यते चेत् त्रुटिता भागाः पुनर्मुद्रणावसरे समीकृताः स्युरिति प्रत्याशया च तमिमं काव्यं इदंप्रथमतया प्रकाशयितुं व्यवसिताः स्मः ॥

कामं मधूनि पिबतामपि गायकानां
रागोत्तरं मधुलिहां यदयं ददाति ॥ ६० ॥

सन्मार्गगोऽपि बकवृत्तिपरो मयूर-
संतोषकृन्निजमुखे.........ऽन्य: ।
सर्वोत्तरे सदृशवर्षण ऊषरेऽपि
वर्ण्य: कथं जलधरो विकृतोऽवसाने ॥ ६१ ॥

नीतौ निवेश्य सकलान्निगमानुकूलं
निष्कण्टकीकृतजगन्निजबाहुशौर्यात् ।
...........यश्चतुरोऽप्यवन्यां
संस्थापयेत्सुकृतमत्र पदैश्चतुर्भि: ॥ ६२ ॥

इत्युत्सुका नृपवधूर्हृदयानुभावा-
दासाद्य पौरुषमनाविलमात्मनैव ।
ऐच्छत्.........................पि जेतुं
पर्याकुला स्वभवनाङ्गणचङ्क्रमेऽपि ॥ ६३ ॥

सैषा गतेऽपि नृपतौ सविधं सखीना-
मालम्ब्य हस्तमभिनीतनृपोपचारा ।
स्निग्धैरनन्दयदमुं श्रममग्नतारै-
रभ्युद्गमाभिनयकारिभिरक्षिपातै: ॥ ६४ ॥

पृष्टाथ किं किमपि संप्रति वस्त्वभीष्टं
नम्रानना न किमपि प्रियमाह तन्वी ।
आलीमुखादभिमतं स निशम्य यद्य-
दस्यै तदप्यखिलमर्पयति स्म राजा ॥ ६५ ॥

तद्गर्भगस्तदनु पुंसवनाद्यशेष-
संस्कारतः शिशुरदीपि धराधिपेन ।
शाणोपलीढमणिरागमनागमाभ्यां
...जगति भो(ज) इव द्वितीयः ॥ ६६ ॥

आशीर्भिरासुमनसामखिलाश्रमाणां
भाग्यैस्त्रिलोकतपसा च पचेलिमेन ।
पञ्चग्रहोच्चगतिशालिनि सन्मुहूर्ते
मल्लाम्बिका सुतमसूत मनोजरूपम् ॥ ६७ ॥

अस्मिन्प्रयात्युदयमङ्गभवे मुरारे-
रासीदहो ध्वनिरनाहतदुन्दुभीनाम् ।
आनन्दनृ(त्यद)मरीजनपादभूषा-
नादैर्भृशं मुखरितोऽजनि नाकलोकः ॥ ६८ ॥

आनन्दनर्तनमभूदखिलस्य जन्तो-
रज्ञातभावनमचिन्तितमित्यवाच्यम् ।
(प्रेङ्खत्)प्रवालविटपाः पवमानलोला
हर्षादिवात्त(न)टन(ास्तरवोऽ)प्यभूवन ॥ ६९ ॥

आश्चर्यमत्र किमनीतिमपास्य सर्वे-
ऽप्यासन्नयैकशरणाः क्षितिपास्तदेति ।
अप्यन्वितास्तदुदयोत्सवहर्षपूरैः
सीमां न वारिनिधयो जहति स्म सर्वे ॥ ७० ॥

आहर्तुमप्यपटवः कुसु(मानि मन्दं)
मन्दं निरस्तरजसो मरुतोऽप्यगच्छन् ।

आसन्प्रदक्षिणगतिच्छलतोऽग्नयोऽपि
संसूचयन्त इव भूजयि तस्य तेजः ॥ ७१ ॥

अत्युद्धतं विचरतामवनीपतीना-
माश्लेषजातमतिदुःसहमात्मदुःखम् ।
दिष्ट्या हनिष्यति बलाच्छिशुरित्यभूत्र-
ञात्तप्रसादविभवा हरितो दशापि ॥ ७२ ॥

दत्त्वा सुतोदयनिवेदकपूर्णपात्रं
भूषा निजा विलसति स्म स भूमिपालः ।
माकन्दवृक्ष इव माधवजन्मशंसी
मन्दानिलार्थपरिमुक्तपुराणपत्रम् ॥ ७३ ॥

अव्याजहृद्यतरमस्य मुखारविन्दं
संवीक्ष्य पैतृकऋणात्स विमुक्त आसीत् ।
आयुष्करं नयनयोरमृतांशुविम्ब-
मालोक्य लोक इव रुद्धदिशोऽन्धकारात् ॥ ७४ ॥

अत्यर्कचन्द्रदहनार्भककान्तिपूरै-
राक्षिप्तरोचिरथ सूतिगृहप्रदीपः ।
एवं किला(खिल)मयं शमयिष्यतीति
राज्ञां प्रतापमिति लक्षयति स्म नूनम् ॥ ७५ ॥

अङ्गप्रभानिहतरोचिररिष्टदीपः
किं वेक्षणामृततुषारभिया हतार्चिः ।
किं वा प्रताप(रिपु)णास्य नवेन किं वा
नाथस्य संनिधिभयान्तरसिंहमूर्तेः ॥ ७६ ॥

आशा दशाप्यमितलोचनकान्तिशोण
गङ्गाकलिन्दतनयोर्मिकृताभिषेकाः ।
अस्याभवन्ननुपमाङ्गमहोहरिद्रा-
(लिप्ताः प्रणन्)तुमिममिन्द्रमुखांशजं किम् ॥ ७७ ॥

वर्णैश्चतुर्भिरिह वर्णचतुष्टयस्य
भर्तेति वा नृवर इत्यपदानतो वा ।
(नन्वा)ख्यया नरहरेर्न परं व्यतानी-
न्नामार्भकस्य नरसिंह इति क्षितीशः ॥ ७८ ॥

नानाविधाभिमतनिर्वहणैकबीजं
नान्दीमुखं नरपतिः पुरतो वितन्वन् ।
पुत्रस्य दिग्विजयनाटकपूर्वरङ्गं
जन्मादिकर्म दृढभावरसं व्यतानीत् ॥ ७९ ॥

विस्मृत्य पूर्वनिजभावमसौ विशेषा-
न्मौग्ध्यं रसादभिनयन्मधुरोक्तिहृद्यम् ।
मन्दं पदानि रचयन्मणिकुट्टिमेषु
बालोऽहरत्किमपि मानसमम्बिकायाः ॥ ८० ॥

रत्नाकरोरुरशनागुणराजमान-
धात्रीकरग्रहरसादिव साभिलाषः ।
रत्नस्थलेऽपि रजनीकरवंशकेतु-
र्धात्रीकरग्रहणकौतुकमप्यहासीत् ॥ ८१ ॥

सर्वाम्बुराशिपरिघाञ्चितभूतधात्री-
रूपैकपुर्यत्रनयुक्तमार्गलत्वम् ।

यावद्यथा भजति बाहुयुगं तथैव
बालस्य तस्य नितरामगमद्धि वृद्धिम् ॥ ८२ ॥

कर्णाव(तीत्य भवितुं) कलितभिलाषं
नेत्रद्वयं भुजयुगं च नृपेन्द्रसूनोः ।
यातः परं सकलभावगतिं न मन्द-
यानक्रमः स च भुजप्रभवः प्रभावः ॥ ८३ ॥

कर्पूरमिश्रघनसारकृतानुलेपं
वक्षःस्थलं नृपशिशोर्वलमानहारम् ।
बाहुद्वयीदृढतरार्गलबन्धमासी-
द्वीरश्रियो विहृतिमण्डपवद्विशालम् ॥ ८४ ॥

हृद्यस्य षोडशकलाधिगमाद्धिमांशो-
र्द्वैगुण्यदर्शनकृते द्युतिनिर्जितस्य ।
द्वात्रिंशतैव जनितैर्विधिना द्विजैः किं
बालस्य तस्य वदनेन्दुरलंकृतोऽभूत् ॥ ८५ ॥

वीर्यान्तरार्पणविधिर्नववीरलक्ष्मी-
केलिप्रिया नटनकेलिपयोदलेखा ।
श्मश्रुच्छटा मुखसरोरुहभृङ्गमाला
तस्याभवद्धि तरुणागमवैजयन्ती ॥ ८६ ॥

विद्याः पुरस्कृतगुरूव्यपदेशपूर्वं
तस्यान्तरङ्गपदवीमगमन्समस्ताः ।
लक्ष्मीः सरोरुहगृहेति समाहितेर्ष्या
वाग्देवता च वदनाम्बुरुहासनासीत् ॥ ८७ ॥

चन्द्रस्य षोडशकलैकतनोः स्ववंश-
केतोश्चतुर्गुणतयानुगतिं किलेच्छन् ।
सर्वाः कलाश्च चतुरुत्तरषष्टिसंख्याः
संप्रापदप्रतिमराजपदानुकूलम् ॥ ८८ ॥

विद्यापारमवापितं गुरुजनैर्नीतं पुरो वीक्ष्य तं
साष्टाङ्गप्रणतं सुतं सविनयं सस्नेहमुत्थापयन् ।
आलिङ्ग्योत्पुलकं पुनः पुनरसावाघ्राय मूर्ध्न्यादरा-
दन्तर्लीन इवात्मनात्मनि सुखादामीलिताक्षोऽभवत् ॥८९॥

सकलामुपदिश्य धर्मनीतिं
निजसाम्राज्यधुरं निधाय तस्मिन् ।
अगमद्वनमात्मवंशरीत्या
सह मल्लाम्बिकया स गुण्डयेन्द्रः ॥ ९० ॥

इति भुवि नरसिंहनाम्नावतीर्णस्य लक्ष्मीपतेः
सुचरित इह गुण्डयेन्द्रात्मजस्यातिसौम्याकृतेः ।
सबिरुदकविसार्वभौमाभिधतारापतेः सालुवा-
भ्युदय इति कवेर्द्वितीयः कृतौ सर्ग एषोऽगलत् ॥ ९१ ॥

इति मेदिनीमीसरगण्डगुर्जण्डयनरसिंहराजमहाराजचरिते
बिन्दूदकविप्रपितामहडिण्डिमकविराजनाथकृतौ
सालुवाभ्युदयनाम्नि महाकाव्ये वीराद्भुतरसे…
द्वितीयः सर्गः ॥

—✻—

# अथ तृतीयः सर्गः ॥



अथ नरपतिसूनुराश्रिताशा-
  ननयपरानखिलान्विजेतुमैच्छत् ।
अधिगतविषयग्रहाभिलाषा-
  नपि धरणीपतिरान्तरानरातीन् ॥ १ ॥

अवनिपतिसुतः स बाहुचर्या-
  दखिलदिशोऽपि विजेतुमादृतोऽभूत् ।
अपि नरपतिरासनादियोगा-
  दविरतमान्तर(मारु)तान्दशापि ॥ २ ॥

अचकमत नवीनमात्मराज्यं
  निजवशमापयितुं नृपालबालः ।
अतिचपलमनन्यसा(ध्य)मन्तः
  करणपदं च कठारिसालुवेन्द्रः ॥ ३ ॥

निखिलमरिपुरं प्रदग्धुकामो
  निजशरवह्निमुखादभून्नृसिंहः ।
नृपतिरपि नियोजिताशुगोद्य-
  द्दहनमुखात्स्वपुरं............निवासम् ॥ ४ ॥

अनुकलमनुभाव्य वीरलक्ष्मी-
  मभवदसाववनीपतेः कुमारः ।
सपुलकमुकुलः सभावबन्धं
  सकलजगज्जननीं स चादिशक्तिम् ॥ ५ ॥

वनस्थलीं वृक्षलतागुल्ममात्रावशेषां विधाय सविधस्थितमिदमपि नगरममानुषं विधित्सन्, मिलितैर्महाजनैः 'शकटपर्याप्तं मञ्जुलव्यञ्जनपुञ्जसंपन्नमन्नं कंचन पुरुषं च बलिं प्रतिदिवसं वयं प्रेषयिष्यामः, गिरिकंदर एव भवता स्थीयताम्' इति प्रार्थितो बकाभिधानो यातुधानोऽकीर्त्तिरिव समूर्तिः समवर्तीव प्रवर्तितजनार्तिजूर्तिजागर्ति । तदधुनास्मिन्नगरे निवसद्भिः कुटुम्बिभिर्यथाप्रतिज्ञं तस्मै रक्षसे पर्यायेण प्रदीयते च बलिः । अद्य महाजनेन प्रेषितो ग्रामसाधारणः कश्चन पुरुषो यमदूत इवागतः 'श्वो भवता बकाय बलिः संपाद्यताम्' इति निर्घातपातनिष्ठुरां गिरमुदीर्य निर्गतवान् ॥

क्रेतुं नरं नो धनमस्ति भद्रे
पुत्रस्तथैकः कुलतन्तुरेषः ।
कन्या परस्वं न च धर्मपत्नीं
जह्यामहं सा च न मां विमुञ्चेत् ॥ १९ ॥

किं वदामः क्व गच्छामः किं कुर्मः का गतिश्च नः ।
मग्नानापत्समुद्रेऽस्मानुद्धरिष्यति कः पुनः ॥ २० ॥

इतीरयित्वा भूयस्तं रुदन्तं भार्यया सह ।
आश्वासयन्ती कुन्ती तमूचे सकरुणा वचः ॥ २१ ॥

ब्रह्मन्निमां मुञ्च शुचं दिशामि
कंचित्सुतं पञ्चसु पुत्रकेषु ।
तं प्रेषयित्वा सविधे बकस्य
गेहे सुखं तिष्ठ सपुत्रदारः ॥ २२ ॥

पुत्रः पुरा मे निगृहीतरक्षा
बकं च हन्यादिति तं दिशामि ।
एकस्य सूनोरपि किं विपत्तिः
पित्रोर्मता पुत्रशते स्थितेऽपि ॥ २३ ॥

इति ब्रुवाणा द्विजदम्पती तौ
न केवलं तोषयति स्म कुन्ती ।
मिष्टान्नयुद्धोत्सवलाभलोभ-
समन्वितं भीममपि क्षणेन ॥ २४ ॥

अथ पृथया कथितां कथां कथयति पृथिवीसुरे तस्मिन्, उद्वेलप्रहर्षसिन्धवो बन्धवोऽतिप्रसन्नहृदः सुहृदः समुद्भूताद्भुतरसपूराः पौराश्च प्रशंसालक्ष्याणि भक्ष्याणि, प्राज्यानि च भोज्यानि, स्वाद्यानि च खाद्यानि, मनोभिरनूह्यानि च लेह्यानि, अमेयानि च पेयानि, अदूष्याणि च चूष्याणि निजनिजगृहेभ्यस्तस्मै घस्मराय भीमाय कौतूहलात्सत्वरमुपाजह्रुः ॥

अन्नं गुणसंपन्नं परमान्नं शर्कराज्यसंभिन्नम् ।
व्यञ्जनकुलमपि च मनोरञ्जनमानीतमार्तिभञ्जनदम् ॥

केचिदपूपानितरे सूपान्मुग्धं तथापरे दुग्धम् ।
नव्यं हव्यं गव्यं प्राज्यं चाज्यं परे समानिन्युः ॥२६॥

मेन्थीजीरकसर्षपहिङ्ग्वेलाकालशाकपरिमलवत् ।
ऊर्जितरसं जनौघैर्भर्जितजातं समानीतम् ॥ २७ ॥

सपदि पनसरम्भाचूतजातं फलौघं
मधु दधि नवनीतं द्राक्षया साकमेके ।
सुरभिमथितचिञ्चोपोतकीशाकिनीनां
लवणमरिचय(?)श्चानिन्युरन्ये तु सारान् ॥२८॥

कुश्माण्डकोर्वारुककारवल्ली-
निष्पावमोचाबृहतीप्रसूतैः ।
शलाटुजालैः कलितानि चान्यै-
राजह्रुरेके मृदुतेमनानि ॥ २९ ॥

अथ भीमसेनः कौतूहलाक्रान्तस्वान्तैः सपुत्रदारैः पौरैरानीतं षड्रसवत्तया माधुर्यमात्रधुर्यस्य सुधारसस्यावलेपविलोपमादधानमन्नजातमानयनपात्रमात्रावशेषं भुञ्जानश्चिरादनुन्मिषितां सौहितीमीषत्समुद्वहन्क्षुधार्ततया कालक्षेपमसहमानाद्राक्षसान्नसतो जनानिदमाचचक्षे ॥

मा भैष्ट यूयं बकनामधेया-
न्निशाचरात्संनिहितात्मनाशात् ।
बलिप्रदानं न पुनर्यथा स्या-
त्तस्मै तथाहं तरसा करिष्ये ॥ ३० ॥

बकाय न क्वापि बलिः प्रदीयते
स वायसायैव जनैस्तु दीयते ।
अतः परं यूयमपि द्विजा बके
निषूदिते यच्छत वायसाय तम् ॥ ३१ ॥

इति तद्गिरा गतप्रायबकभयाः पौरजना इतस्ततो

राक्षसभक्षणाय पुनरपि समानीतैर्विविधैर्भक्ष्यजातैः सहितेनान्नराशिना पूरितं विशङ्कटं शकटमधिरूढेन कृताग्रजजननीवन्दनेन पवननन्दनेन निवर्तितास्तस्मै रचिताशिषः प्रदर्शितनिशाचरसद्मवर्त्मानो भेजिरे निजनिजभवनानि ॥

गतेषु पौरेषु नभस्वदात्मभू-
रतीत्य तूर्णं पदवीं दवीयसीम् ।
निशाचराधिष्ठितमस्थिसंकुलं
भयानकं काननमाससाद सः ॥ ३२ ॥

अनन्तरमध्वनि गच्छन्पवनसूनुः 'नियुद्धे राक्षसमथने कृते शवस्पर्शिनो मे भोक्तुमयुक्तम्; तदिदानीमेव भोक्तव्यम्' इति मनसि निश्चित्य, अनसि स्थितस्य सूपापूपव्यञ्जनयुक्तस्य भक्तस्य फलगुलमिलितस्यैलापरागसुरभिलस्य सरसस्य पायसस्य भक्षणेन कुम्भसंभृतदधिघृतमधुक्षीराणां पानेन च धुर्ययोर्बलीवर्दयोः शकटभारं लघूकुर्वन्मध्येभोजनं दृष्टिं समन्तात्प्रेषयामास ॥

तदनु गिरिकन्दरान्निष्पतन्तं चलन्तमिवाञ्जनाचलम्, मित्रमिव वृत्रासुरस्य, बन्धुमिव कबन्धस्य, डिम्भमिव कुम्भकर्णस्य, कायान्तरमिवातिकायस्य, सहोदरमिव महोदरस्य, मेलनमिव प्रलयान्धकाराणाम्, संकेतनिकेतनं सकलपातकानाम्, आलवालं दोषाङ्कुराणाम्, ऊषरक्षेत्रं सद्गुणप्ररोहाणाम्, समष्टिं सकलविष्टपारिष्टानाम्, अरुंतुदमखिलप्राणिनाम्, विधुंतुदं वेत्रकीयपुरचन्द्रमण्डलस्य, कुटिलनिटिलनिकटस्फुरद्विशङ्कटभ्रुकुटीत्रिटङ्केन विकटदंष्ट्रा-

करालेन दन्तसंततिपरस्परघट्टनजनितस्फुलिङ्गसंगतेन ज्वलदनलकुण्डप्रचण्डतरलोचनेन संवर्तविकर्तनाबिम्बसखेन मुखेनभयंकराकारम्, क्षुधाजनितक्रुधासंकल्पितवेत्रकीयपुरवर्तिसमस्तजनयुगपद्ग्रसनम्, ओदनशकटं दिदृक्षुश्चक्षुर्दिक्षु विदिक्षु च विक्षिपन्तम्, आनीयमानविविधभक्ष्यस्मरणनिरर्गलनिर्गलल्लालाजलया जिह्वया शुष्के सृक्वणी मुहुर्मुहुर्लिहन्तम्, पिबन्तमिव सागरान्, ग्रसन्तमिव त्रिलोकीम्, वमन्तमिवानलज्वालाम्, हरन्तमिवाखिलप्राणान्, हसन्तमिव युगान्तकृतान्तम्, अद्रिगुहायामामर्दितकपालदामानं बकनामानं राक्षसमद्राक्षीत् ॥

ततो निशाचरोऽपि गाम्भीर्यनिर्जिताम्भोधिम्, धैर्यावधीरितधराधरम्, प्रतापनिर्धूतप्रभाकरम्, हिडिम्बकुटुम्बिनीवैधव्यदशाविधानकुशलभुजबलम्, घटोत्कचकालमेघोदयवर्षासमयम्, पुरोचनदहनश्मशानीकृतजतुवेश्मानम्, आरभ्य शैशवान्निर्दयमर्दितधार्तराष्ट्रशतम्, नागराजवितीर्णदशकलशरसायनसेवनाधिगतनागायुतबलम्, निरवद्यपाकविद्यावैशद्यहृद्यनिजचातुरीकम्, उद्धतरक्षेत्रमुत्साहस्य, केलीगृहं साहसस्य, भीतिगन्धरहितम्, असंभ्रमलेशम्, अनाकुलहृदयं पवनतनयं निरीक्ष्य 'कस्त्वम्? आसन्नमृत्युतया कृत्याकृत्यविवेकशून्यः समीपमापतन्तं मामविगणय्य मदीयं बलिमपि जम्बुक इव मृगराजबलिं भुञ्जानो विशङ्कं वर्तसे' इति कथयन्निर्घातनिष्ठुरेण मुष्टिना तमाजघान ॥

निर्घातघातानिव मुष्टिघाता-
न्पार्श्वे कचिद्राक्षसमादधानम् ।

तृणाय मत्वाशनराशिमभ्य-
भ्यजगाद वाचं जगदेकवीरः ॥ ३३ ॥

पार्श्वेऽस्मिन्विश्लिष्टाः कबलाः श्लिष्टाः कृताः प्रहारैस्ते ।
राक्षस तथा प्रहारैर्विरचय पार्श्वान्तरस्थितानपि तान् ॥

इतीरयित्वा समीरकुमारो निर्विघ्नं प्रशस्तवस्तूनामास्वादनेन शकटस्थितानि कटाहपिठरघटमणिकशरावादीनि पात्राणि स्वरूपमात्रावशेषाणि वितन्वन्क्षालितमुखपाणिपादो यातुधानेन मृधं विधातुं मनो विदधे ॥

तमापतन्तं कृतान्तदुर्निरीक्षं निरीक्ष्य क्षुभितहृदयो राक्षसो रूक्षतराक्षरां वाचमाचचक्षे ॥

मदर्थमानीत इह त्वदीय-
कुक्षिंगतो वस्तुचयो य आसीत् ।
यत्नं विना मानुषकीट सद्यः
कुक्षौ स मे स्याद्ग्रसतो भवन्तम् ॥ ३५ ॥

रे जाल्म, कृतापराधस्य भवतोऽवयवैः प्रथमं प्राणाहुतिकर्म निर्माय पश्चान्मह्यं द्रुह्यन्तं भवन्तं प्रेषितवतामेकचक्रनिवासिनां जनानां युगपत्कबलीकृतैः कलेबरैर्निर्वर्तितभोजनविधिः कृतकृत्यो भवितास्मि ॥

परुषं पुरुषादं तमित्थं कृतविकत्थनम् ।
अब्रवीदुद्धतं युद्धे सादरः स वृकोदरः ॥ ३६ ॥

'रे संकल्पमात्रशूर यातुधानाधम, शरत्पर्जन्यमिव वृथा गर्जन्तं भवन्तं हिडिम्बमिव निष्पिष्य सत्वरमेकचक्रन-

गरीं क्षेमभरगरीयसीमयं जनो विधास्यति । भवानपि त्वद्भक्षितशरीरान्परलोकगतान्साधुजनानचिरेण द्रक्ष्यति । अथ वा बह्वाशित्वेन प्राणिहिंसया च पातकवतो भवतो रौरवकुम्भीपाकासिपत्रवनकालसूत्रप्रमुखघोरतरनरकनिकरातिथेः पुण्यकृतां तेषां दर्शनं कुतो भविष्यति' इति वदति पाण्डवे, तद्वचसा च निष्ठुरनिजमुष्टिप्रहारसाहिष्णुतया च निःशङ्कशकटगतौदनास्वादनेन च तं हिडिम्बशासिनं निश्चित्य किंचिदुद्विग्नमनाः पुनर्धैर्यमवष्टभ्याभ्यभाषत ॥

'अरे मानुषापशद, न केवलं घटोत्कचस्य मातुलघातिनो भवतो निषूदनेन, कृतान्तनिशान्ते भवन्तं द्विषन्तमागच्छन्तमालोकयतो हिडिम्बस्यापि प्रीतिमुत्पादयामि । यः पुनर्बह्वाशीति दोषोऽभिहितः स च शकटगतौदनमात्रेण पूर्णोदरस्य मम वा, तेनाप्यपूर्णं पृष्ठलग्नं कृशतरं वृकस्येवोदरं वहतो भवतो वा?

निघण्टवो नः पुरुषादसंज्ञां
वदन्ति यत्पुण्यजनाभिधां च ।
तन्नः प्रमाणं न नराधिकारं
शास्त्रं न हिंस्यादिति भाषमाणम् ॥ ३७ ॥

न चेदेवं सदा प्राणिहिंसासंसक्तमानसाः ।
सिंहशार्दूलभल्लूका लिप्येरन्पापकर्मभिः ॥ ३८ ॥

तदृषीणामामिषाणि भुञ्जानैः कबन्धदशकंधरकुम्भकर्णखरप्रमुखैः पूर्वैराचरितं कुलधर्मं परिपालयतो मम पुण्यम-

नाघ्रातनिघण्टुरविज्ञातशास्त्रार्थोऽपरिशीलितरामायणपुराण-जातो भवानन्यथा मन्यते। तदलमतिप्रसङ्गेन। तरङ्गितसं-गरासङ्गं मदन्तरङ्गं न क्षमते कालक्षेपम्' इति राक्षसश्चिक्षेप तदुपरि विपुलानुपलान्॥

न रक्तं न व्रणं नापि श्वयथुं न च वेदनाम्।
कर्कशेऽजनयंस्तस्य काये ते किं तु चूर्णिताः ३९॥

'सालांस्तालान्रक्तमालांस्तमाला-
ञ्जम्बूनिम्बोदुम्बरद्रून्कदम्बान्।
प्लक्षानक्षान्पूगपुंनागनागा-
न्हन्तुं रक्षो मङ्क्षु चिक्षेप भीमः॥ ४०॥

वृक्षावशेषं विदधे वनं तद्राक्षसः पुरा।
वृक्षैरपि मरुत्सूनुः शून्यमाजौ चकार तत्॥ ४१॥

विनाशितेषु द्रुममण्डलेषु
विध्वंसितासूपलधोरणीषु।
उत्साहवन्तावुदितक्रुधौ तौ
कर्तुं नियुद्धं समुपाक्रमेताम्॥ ४२॥

रणाङ्गणं तयोरुद्यत्कचाकचिभुजाभुजि।
विरराजतरां स्पष्टमुष्टीमुष्टितलातलि॥ ४३॥

आश्लिष्टकण्ठमन्योन्यं निरन्तरनखक्षति।
बभौ तयोः सघर्माम्भो नियुद्धं स्मरयुद्धवत्॥

जानुमुष्टितलाघातक्षुभितास्रकलेबरौ।
मिथो भुजाभ्यामाश्लिष्टौ तौ धरायां निपेततुः॥

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ९. ] नलवर्ष पौषमासः । [ संचि. १०.

## सुभाषितानि ॥



अनुक्षणमनुक्षणं क्षितिप रक्ष्यमाणा त्वया
प्रयाति विदिशो दश प्रबलकीर्तिरेकाकिनी ।
इयं नियतमर्थिषु प्रतिदिनं वितीर्णा रमा
जहाति न तवान्तिकं द्वितयमेतदत्यद्भुतम् ॥ १ ॥

इन्दुं निन्दति चन्दनं न सहते विद्वेष्टि पङ्केरुहं
हारं भारमवैति नैव कुरुते कर्पूरपूरे मनः ।
स्वर्गङ्गामवगाहते हिमगिरिं गाढं समालिङ्गति
त्वत्कीर्तिर्विरहातुरेव न मनागेकत्र विश्राम्यति ॥ २ ॥

क्षितिप किमपि चित्रं जागरूकेऽपि युष्म-
द्यशसि शशिकदम्बे त्वत्प्रतापेऽर्कबिम्बे ।
नयनकुवलयानि त्वद्विषत्कामिनीना-
मपि च वदनपद्मान्याशु यत्संकुचन्ति ॥ ३ ॥

॥ श्रीः ॥

# ॥ श्रीमती सती कमला ॥



मङ्गलकरो वैभातिकः समयः, भगवतो लोकबन्धोरुदयोदन्तं घोषं घोषं कथयितुं ससम्भ्रमं धावमानाया भगवत्या उषादेव्यास्त्रुटितमुक्ताहारात्परिभ्रष्टानि मुक्ताफलानीव नीहारबिन्दवः पेलवपादपपल्लवेषु हरिततृणाङ्कुरेषु च व्यराजन्त । ऐहिकतापप्रशमकारिणीं निद्रां स्वैरमनुभूय प्रतिबुद्धानां विहङ्गमानां कलकलरवः श्रीमत्या उषाभगवत्याश्चरणकमलयोर्झणत्कुर्वतोर्नूपुरयोर्मंजुलविराव इव सर्वतोऽश्रूयत, निशाकृतमशेषममङ्गलं तमस्काण्डमपहृत्य लोकानशेषान्प्रकाशयितुमुद्यन्तं भगवन्तं विवस्वन्तमर्घ्यदानादिना सम्भावयितुं प्रसुप्तानशेषान् जनान् प्रतिबोधयितुं धावन्धावं दीर्घमुच्छ्वसन्त्या उषादेव्या उच्छ्वास इव वाति स्म मन्दं मन्दं समीरणः, नक्तन्दिनं पीयूषरसं पायं पायं पविलितान्तर्बाह्यमूर्तेर्मधुरं सुरभि चोच्छ्वसन्त्या उषासुन्दर्या उच्छ्वासपरिमल इव प्रफुल्लानां मालतीमागधीमाल्लिकापाटलचम्पकमुखानां सुरभितमानां प्रसूनानां सौरभ्यं सर्वतोऽप्रसरत्, प्राचीनाचलचूलावुद्यन्तमादित्यं स्वागतवचसा सम्भावयितुमिव तारतरं कूँ कूँ इति कूजतां कुक्कुटानां विरावेण प्रबुद्धा द्विजाः पठन्ति स्म मङ्गलकराणि प्राभातिकानि पद्यानि, प्रशान्तबहुले भद्रतमे च हृदयङ्गमे समयेऽस्मिन् काचन राजकन्यका हृदयान्तरायमाणया गिरिजाभिधया सख्यान्विता भगवन्तमम्बिकाधवमर्चितुं निजोपवने

वर्तमानं शिवमन्दिरं गच्छति स्म। तदा तस्याः सखी सानुरागं सखि भर्तृदारिके? गरीयान् किल व्यतीतः समयो भगवन्तं गङ्गाधरं सभक्ति समर्चयन्त्या भवत्याः। किमासादितं फलं मे सख्या? सर्वथा वृथेदं पर्जन्यबहुले वर्षासमयेऽस्मिन् शीतलेनाम्भसा स्नानम्। भवत्यानुभूयमान एष श्रीश्रीकण्ठपूजाप्रयासो जनयति मे चेतसि हन्त महीयसीं व्यथाम्। अलमलम् सखि! प्रयासेनानेन। न मे राजनन्दिनि! रोचते। इति सहसा राजकन्यकायाः पाणिमगृह्णात्। मनोरथशतशून्यहृदयायास्तस्या राजकन्यायाः करकमलात्परिभ्रष्टमर्घ्यपात्रं भूमावपतत्तदा। धर्मैकतानजीवितस्य पितुराजनिसहवासेन वर्धितायास्तस्या हृदयं नितान्तं विव्यथेऽनेनार्घ्यपात्रपतनेन अधीरमनाश्चाधोमुखी पतितं पूजासम्भारं सर्वं विचेतुमुद्यता। परं किं तत्र सुवर्णमयं कुङ्कुमकरण्डकं दूरात्पतितमासीत् रजसा मिश्रितं कुङ्कुमञ्च, रौप्यमयं दीपपात्रं पतितमेकत्र, अन्यत एव तद्वर्ति घृतम्, वर्तिकापि नामावशेषिता नास तत्र, कुसुमानि बिल्वदलानि च स्वैरं वहता वायुना दूरं नीतानि न संवृत्तानि नयनगोचराण्यपि, संवृत्ता सुरभितमा धूपशलाका नीहारेण क्लिन्नाः, उपहारार्थमानीता शर्करा हिमजलविकीर्णा समभूत्। अथापि नाम नेयं भूपालदारिका मनागपि सख्याममर्षमदर्शयत्। न च परुषतममेकमप्यक्षरं मुखान्निःसारयामास। केवलं दीर्घमुष्णञ्च निश्वसन्ती सकरुणम् सखि गिरिजे एहि, गृहं गत्वा पुनः पूजासंभारमादायागच्छाव:, आगच्छेति निगद्य साकं सख्या प्रतिनिवृत्ता गृहम्। अहो राजदारिकायाः शान्ता प्रकृतिः। परिचारिकामपि गिरिजां जीवितसखीं भावयामास राजकन्य-

कैषा । अन्यच्च, अन्य एव पुनः सतां पंथाः, प्रमादो हि समेषां सहज इति ते जानन्ति, प्रमादेन कृतं कर्म प्रशान्तेन मनसा मर्षयित्वा परिचारकेभ्यः साधयन्ति निजं कार्यं हितोपदेशेन साधवः । यानि पुनः कशाघातेनापि परिचारकेभ्यो दुःसाध्यानि भवन्ति, तान्येते निरायासं सौहार्दमरन्दपरिस्यन्दिवचःपारितोषिकेण साधयन्ति । सेव्यसेवकभावोऽयमभिनन्दनीयः । पाठकवराः ? विमृश्य पश्यत यः खल्वायोधनेषु निरातङ्कं निजं चतुरङ्गबलं प्रशास्ति, सोऽपि नाम सेनानीः कस्यापि परिचारक एव । यो वा मंत्रिपदमधिष्ठाय निखिलमपि राज्यतन्त्रं निरायासं निरातङ्कञ्च निजमन्त्रकौशलेन सुव्यवस्थं प्रचालयति सोऽपि प्रधानामात्यः कस्यापि परिचारक एव । यस्य हि पुरतः संग्रामेषु निजजीवितमपि तृणीकृत्यात्मनोऽनितरसुलभेन शौर्येण वीरवीरानरातीन् निर्जित्य स्वसंग्रामपाटवं प्रकटीकरिष्यन्ति सेनान्यः, अमात्याश्च स्वमतिवैभवमखिलमपि व्ययीकृत्य स्वविषयेषु शान्तिसाम्राज्यं विस्तार्य प्रजासु प्रभुषु परस्परं पवित्रतमं जनयन्त्यनुरागम् , यश्च स्वमण्डले वर्तमानासु प्रजासु स्वात्मजबुद्धया, मानवेन पथा निजावनिमण्डलपरिपालनेन च, निजराजशब्दं सार्थकयन् शरच्चन्द्रचन्द्रिकाधवलेन यशःपटलेन विशदयति दशापि दिशः, सोऽपि नाम मण्डलेश्वरः सार्वभौमस्य प्रभोः परिचारक एव । एष सार्वभौमो वा कश्चित्स्वतन्त्रः, सोऽपि ननु प्रजापरतन्त्र एव । किम्बहुना, यो वा भगवानिदं मायामयं जगत्सृजति, पाति, प्रत्यवहरति च, सोऽपि सर्वतन्त्रस्वतन्त्रोऽपि भक्ताधीन एव ननु । पाठकप्रवराः! प्राची-

नानां भूपालानां चरितमन्यादृशमासीत्। व्ययीकृतं खलु तैर्मही-पालैरखिलमपि स्वीयं बलं आयुश्च प्रजाहितसाधन एव। अनाथ-परिपालनं नाम तेषां कुलव्रतमासीत्। आस्तामलमप्रस्तुतप्रशंसनयानया। गिरिजा तदवितर्कितं घटितेनात्मनः प्रमादेन परां व्यथा-मापन्ना निन्दन्ती चात्मानं चेतसि तदा राजदारिकया समं दुर्गं प्रस्थिता॥

अयि पाठकप्रवराः! प्रायस्तत्रभवतां चेतांसि 'केयं राज-कन्या, कुत्रत्या, किमभिधानमस्याः, कियद्वास्या वयः, कोऽस्याः पिता, किमेषा परिणीता न वा' इत्येवमादिविविधतर्कसमाकुलानि स्युः। नास्याः लेखन्या एवमार्याणां चेतःसमाकुलीकरणमुचितं खलु। एषा सर्वं विशदं लिखति। विदितं खलु समेषां 'विद्यते-अस्यां सर्वसहायां देहली (दिल्ली) नाम्नी विश्रुता नगरीति। तस्याः प्रान्ते पञ्चषयोजनदूरे 'गाझी आबाद संज्ञकं नातिलघु नाति-महच्च सर्वाङ्गहृदयङ्गमं नगरम, तस्य च द्वित्रक्रोशदूराद्दुर्गमतरो-ऽतुलगडनामको दुर्ग आसीत्। दुर्गस्यास्य सर्वात्मना प्रभुत्वं दयालुसिंहनाम्नो राजपूतकुलप्रभवस्य राज्ञोऽभूत्। पञ्चपञ्चाशद्व-र्षात्मकं स्यादस्य वयः, शैशवाद्वर्तमानेन बलवता कासामयेन ग्रस्तं जीर्णं संवृत्तं कलेबरञ्च। महिष्यपि खलु राज्ञोऽस्य पञ्च-दशसमाभ्यः पूर्वमेव लोकान्तरं गतासीत्। सैषा मरणसमय आत्मनः स्मरणमिति वा, निजजीवितेश्वरेण स्वहृदये चिराद्रोपितस्य प्रणयपादपस्य फलमिति वा, अगाधाव्याजनिर्मलप्रणयसागरे वल्लभे-न साकं गाहं गाहं विविच्यानीतमनर्घतमं रत्नमिति वा वल्लभस्य दयालुसिंहप्रभोर्हस्ते कमलाभिधानां कमनीयतमां कन्यकामेका-

मार्पयत् । एषा कन्यका शैशवे पित्रा जीवितनिर्विशेषं परिपालिता बालभावसुलभा विविधाः क्रीडाः क्रीडन्ती निखिलं तं दुर्गमेवानन्दयति स्म, पितापि चैतां काले काले सवात्सल्यमशिक्षयत् तासु तासु विद्यासु । अधिगता सर्वलिपिलेखने, तदनुवाचने, पञ्चषभाषाभाषणे, तुरगारोहणे, लक्ष्यवेधने, मृगयायाम्, शस्त्रविद्यासु, अन्यासु रजपूतकुलसमुचितास्वपि विद्यासु परं प्रावीण्यम्, सफलयन्ती च पितुः प्रयासं तमानन्दयत् । एतावता कालेनास्याः व्यतीतं पञ्चदशवर्षदेशीयं वयः । विलोकनसमकालमेवास्याः 'कच्चिदेषा राजदुहिता भूतलकृतावतारा भगवती कन्दर्पदयिता वा?' इति तर्को निरायासं निखिलजनताया श्चेतसि पदं करोति स्म । सौन्दर्यमेव तादृशं तस्याः यथेयं राजनन्दिनी लावण्येन, तारुण्येन, धिषणया, विद्यया च पोषमध्यगच्छत्, तथास्याः पितुर्निर्व्याजं वात्सल्यम्, दुरन्ता चिन्ता च प्रचयं प्राप्नोति स्म । जायते कन्यका पितुश्चिन्तया सममेव ननु । यतो हि कन्या जननकाल एव 'अहो मे कन्या जाता, अनुरूपः पतिर्लभेत वास्याः? पतिगृहे सुखं यास्यति वा? जीवितं भद्रकरं भवेद्वा?' इत्येवमादिचिन्तापरम्पराः प्रादुर्भवन्ति पित्रोश्चेतसि ॥

अवसरेऽस्मिन् शास्ति स्म देहलीनगरे महीमण्डलीमकबरनामा महीपालः । एष राजा भारतीयेषु तदीयधर्मे चातिमात्रं स्निह्यति स्म । इयेष च यवनेषु भारतीयेषु परस्परं परिणयनादिव्यवहारेणानुरागमुत्पादयितुम् । स्वयं पर्यणैषीच्च मानसिंहनाम्नो रजपूतकुलसंभवस्याम्बेराधिपतेः कमनीयतमां कनीयसीं सोदरीम् । राज्ञोऽनेन कर्मणा केचन यवना हठात्कारेण रजपूतकन्यकाः

परिणेतुं प्रारभन्त । एवं गच्छति कियत्यपि काले परां काष्ठामारुढ एष हठात्कारोऽतिशयस्य । अनर्थपरम्परा अनेन नक्तन्दिनं भवितुं प्रारब्धाः । भारतीयेषु बाढं प्रतिभयतमः समय आपतितस्तदा । बहवो हि रजपूतकुलप्रसूताः कुलयुवतयोऽनेन हठात्कारेण भीताः समिद्धतमे वह्नौ देहमात्मनः पातयित्वा प्रातिष्ठन्त लोकान्तरम्, यवना अपि प्राणापायंकराण्यनल्पानि व्यसनानि प्रत्यहमन्वभवन् । राज्ञो निदेशः पुनर्न जातु हठाद्भारतीयकन्यकाः परिणेया इति । परं केचन यवनहतका निजविभवप्रमत्ता न मनागपि राजनिदेशमेतमन्वमंसत । एतदर्थमेव दयालुसिंहमहाराजो विव्यथे चेतसि । हन्त कुतो नु वैषा मे कन्या जाता ? जाता वा तदात्व एव कुतो नु न मृता, अमृता वा लावण्यवती कुतो न्वेवम् ? लावण्यवती वा कुतो नु गुणशालिनी ? हा हन्त अतिमात्रं खल्वेते पापा यवना अनार्याचरणे बद्धपरिकराः, एषा च मे कन्यका लोकोत्तरसुन्दरी । अहञ्च बलवता कासामयेन पीडितो विगतबलो गात्रयष्टेरस्या भारं वोढुमप्रभविष्णुरस्मि । किमत्र कर्तव्यम् । कथं सन्तरेदेतं यवनहठात्काराकूपारं सुकुमारतमा मे वत्सा ? इति सर्वदा चिन्ताकुल एव कालं यापयति स्म दयालुसिंहभूपालः ॥

प्रेष्ठाः ! पाठकवरेण्याः ! इत आगच्छत, तत्रोपवने मनागिव दृष्टिं निक्षिपत, के पुनरेते तरुण्यौ तस्मिँल्लतानिकुञ्जे किमपि संलपन्त्यौ शिलातल उपविष्टे । अपि परिचिते भवतामेते, निपुणं निरीक्ष्य कथयन्तु, किं ब्रूथ ? 'किं पृच्छसि ? तयोरेका नः परिचिता राजकन्या कमला, अपरा च तस्याः सखी गिरिजा'

इति । तर्हि तूर्णमागच्छत, तत्र गत्वा तयोः संलापं शृणुमः ।।

कमला— हला गिरिजे? यदद्य मे तातेन विवाहविषयकः प्रस्तावः कृतः, न खलु साम्प्रतं कृतम् । नाद्यतनो वासरो मनागपि मङ्गलकरः ।

गिरिजा— सखि राजकन्ये? किमेवं वदसि, एष प्रस्तावः पुनरद्यैव वा प्रारब्धः, भवत्या जननकाल एव मनसा महाराजेनोपक्रान्तः खलु ।।

कमला— हला! भणतु भवती किमपि वा । परमतिमात्रं खल्वधीरं मे हृदयम् । पश्य प्रातरद्य भगवतः सर्वमङ्गलावल्लभस्यार्चनाय प्रस्थितताया मे करतलात्परिभ्रष्टं मध्येमार्गमर्घ्यपात्रं सहसा, देवालये च लोहशृङ्खलया लम्बमानोऽभिषेकघटः पतितः, स्फुरति वामेतरं नयनमद्य मे, एष प्रस्तावोऽपि पुनरभद्रतमे समये । एतानि सखि! काश्चित् लक्षणानि मङ्गलकराणि वा । कथं सोदरि! ममायतिर्मङ्गलकरी भवेत् । (इति रोदितुं प्रवृत्ता) ।।

गिरिजा— (सकरुणं) सखि? किमिदम्, अलमलम्, प्राकृतजनसुलभमेतद्रोदनम् । भवती पुनर्जाता महति प्रवीरजनकीर्तनीये रजपूतकुले, एतस्या भवत्या नयनयोरेवमविरलाभद्रतमाश्रुधारा असाम्प्रतं सर्वथा राजकन्यके! असाम्प्रतम् । एतानि प्रथममश्रूणि मार्जय, कुतो न्वेवं बिभेषि दुरात्मभ्यो यवनहतकेभ्यः । किङ्करिष्यन्त्येते पापाः, जीवितस्यापायः संभवेन्ननु, गच्छतु जीवितम्, किं तेन,

(क्रमशः ।)

॥ श्रीः ॥

# ॥ श्रीरामोदन्तः ॥

[ पूर्वतोऽनुवृत्तम् । ]

———*———

माभैषीरित्यभयप्रदानमकार्षीत । प्रतिशुश्राव च दशकण्ठराज्यम् ।

तदनु दशकन्धरबलमखिलमप्यभिधाय सरस्वदुल्लङ्घनसाधनस्य सेतोः कृते प्रार्थय पाथोनिधिमिति विभीषणेन विज्ञापितो दाशरथिर्ध्यायन्नपांनिधिं परिष्कृतभूमिमिव पावकः कुशास्तीर्णं भूमिमधिशिश्ये ॥

इत्थं नियमेन ध्यायतोऽस्य तिस्रस्त्रियामा व्यतीयुः । तथापि सागर आभिमुख्येन नान्वग्रहीत् । अथ प्रलयरुद्र इव क्रुद्धः श्रीरामचन्द्रः क्षोभयाम्यद्यैवाक्षोभ्यमपि रत्नाकरमिति वदन् तत्क्षणमेव सरित्पतिशोषणायाग्नेयमस्त्रं धनुषि सन्दधे ॥

तदा संधीभूतेषु गङ्गादिसिन्धुदारेषु माङ्गल्यभिक्षां प्रार्थयत्सु विगलितमदो जलनिधिरुपायनीकृतविविधरत्नराशिः काकुत्स्थं शरणमवाप्य नतिपूर्विकाभिर्नुतिभिः संतोषयामास । अथ रामचन्द्रो दुःसहं तदाग्नेयास्त्रं सागरप्रार्थनया पापात्मनामाभीरप्रमुखानां दानवानां निवासस्थाने न्यपातयत् । तदनु रत्नाकरः 'हे रघुनन्दन ! मृष्यते मया पाथः प्रतिबन्धः । एष नलो नाम विदधातु त्वन्नामस्मरणपूर्वकं सेतुम्' इति वदन्सद्य एवान्तरधात् ॥

नलोऽपि रामाज्ञया प्लवङ्गमाहृतैः शिलोच्चयैः शतयोजनायतं दशयोजनविस्तीर्णं सेतुमबध्नात् । तदनु सेतुपथेन तेन सन्तीर्य

वाहिनीपतिं सुवेलाख्यं पर्वतं लोचनगोचरीकुर्वत्यः प्लवङ्गमसेना अमन्दमानन्दमविन्दन्त ॥

अथ ताश्चारद्वारा विदितवृत्तान्तेन राक्षसराजेन प्रहितौ कपिवेषच्छन्नौ शुकसारणौ विभीषणचोदनया गृहीत्वा व्यथयाञ्चक्रुः॥

रावणोऽपि दयमानमानसेन काकुत्स्थेन विमोचिताभ्यां ताभ्यां सत्वरमेव स्वसमीपमागत्य विज्ञाप्यमानान्सुग्रीवादीन्हर्म्यमारुह्यावलोकयन्दाशरथिस्तावकौ तावुपेक्ष्य शार्दूलमुखेभ्यो गूढपुरुषेभ्यो विज्ञातराघवसैन्यप्रवृत्तिस्तद्विजयोपायं चिन्तयन्नेवावर्तत ॥

अथासौ मायाविनं विद्युज्जिह्वं समाहूय मायाकल्पितं राघवस्य शिरः सधनुः प्रदर्श्य विमोहय जानकीमिति समादिश्याशोकवनिकामगात् । स्वनिदेशमनुसृत्य तदानीतेन च्छिन्नेन शिरसा विमोह्य जनकनन्दिनीं प्रहस्तप्रहितेन राक्षसेनात्ययिकं कार्यं विज्ञापितः सद्य एवाशोकवनिकातो जगाम॥

भर्तृमुखतुल्यं तन्मुखं विलोक्य विलपन्त्यां सतीयां सरमा नाम विभीषणदुहिता सखि! वैदेहि! किमर्थं दूयसे? मायया खलु मोहितासि दुर्वृत्तेन रावणेन । अल्पेनैवानेहसा द्रक्ष्यसि कृतार्थं रघुनन्दनमित्यसान्त्वयत् । तदनु मातामहेन माल्यवता 'कुरु राघवेण सन्धिम् । न चेदनर्थः सम्भवेन्महान्' इति बोधितोऽपि दुरात्मा रावणस्तद्वचनमनादृत्यात्मानं विकत्थमानो युद्धसन्नद्धो भूत्वा प्रतिद्वारं प्रहस्तादीन्राक्षसानस्थापयत् ॥

दाशरथिरपि कामचारिभ्यो विभीषणसचिवेभ्यो विज्ञातपौलस्त्यनगररक्षावृत्तान्तः प्राग्द्वारादिषु संस्थाप्य नीलादीन्ससौमित्रिः साकं वानरबलैः समरोन्मुखेन दशमुखेन पालितमुत्तरगोपुरद्वारं

न्यरुणत्। लङ्कां प्लवङ्गमनिरुद्धां विलोक्य तत्प्रवेशनिरोधाय दत्तकवाटेषु पौलस्त्यकिंकरेषु तत्क्षणमेव दाशरथिः साकं हरिसैन्यैरधिरुह्य सुवेलगिरितटं विविधारामविराजितां पौलस्त्यनगरीं लोचनगोचरीकुर्वन् तत्राऽतिरमणीयं कमपि सौधमधिवसन्तं रक्ताम्बरसंवीतं सन्ध्यातपसंछन्नस्य मेघराशेः शोभां विडम्बयन्तं राक्षसराजमद्राक्षीत्॥

सद्य एव तद्दर्शनोद्दीपितमन्युस्सुग्रीवस्समुत्पत्य "दासोऽस्मि रामस्य लोकाभिरामस्य" इति गर्जन्राक्षससार्वभौमं तृणाय मत्वाकृष्य च तस्य किरीटं धरातले न्यपातयत्। तदनूभयोर्महति युद्धे प्रवृत्ते स्वरक्षणार्थं दशग्रीवं प्रक्रान्तमायं विज्ञाय कपिराजस्सत्वरमेवाऽवाप रघुनन्दनसमीपम्। अनन्तरं—

असम्मन्त्र्य मया सार्धं तदिदं साहसं कृतम्।
एवं साहसयुक्तानि न कुर्वन्ति जनेश्वराः॥

इति कृतपवनतनयोपालम्भेन दाशरथिना सचिवैस्सम्मन्त्र्याऽनुमत्या च विभीषणस्य राजधर्मं विचिन्त्य प्रहितः कनकाङ्गदोऽङ्गदस्समुल्लंघ्य प्राकारं प्रविश्य च लङ्कां निर्भीक एवाऽब्रवीत्कबुरपतिम्। कोणपेश्वर दासोऽहं कोसलेन्द्रस्य रघुनन्दनस्य! इत्थमाह त्वां शरणागतवत्सलो दाशरथिः! 'अयि क्रव्यादाधम! मैथिलीं प्रत्यर्पय न चेच्छरणमभ्येषि कर्ताऽस्म्यवश्यं लङ्कामराक्षसां' इति।

तदनु क्रुद्धेन निशाचरपतिना वध्यतामयं वानर इत्यादिष्टैः क्षपाटैर्गृहीते तारेये स्वचातुर्यादर्भकानिव निष्प्रयासं तान्समादायान्तरिक्षं समुत्पतति तदुत्पतनरयनिर्धूताश्चत्वारस्ते यातुधानाः क्षोण्यां

निपेतुः । ततः पादप्रहारेणैकेन सौधशिखरं भङ्क्त्वा प्रतिभटमलभमानो गर्जन्स्वकीयं नाम विश्राव्य समुत्पत्य विहायसा सद्य एव प्राविशद्दाशरथेः शिबिरम् । तदन्वङ्गदवचनाद्रघुतनये भ्रुकुटीं कुर्वति सुग्रीवाज्ञया वानरैर्लङ्कायां परिवृतायां तत्क्षणं प्राप्तसंक्षोभैः कोणपैराहते दुन्दुभिवाद्ये तन्निर्घोषेण प्लवङ्गमकोलाहलजनितरोषेण च चोद्यमानाः कर्बुरभटाः समुत्क्षिप्तचापबाणकृपाणादिविविधप्रहरणाः प्रविश्य समराङ्गणं छिन्धि भिन्धि विदारयेति गर्जन्तः शरवृष्टिभिर्वानरसेनाः प्राकिरन् ॥

तदनु वानरराक्षसयोरतिभयङ्करे समरे समुज्जृम्भमाणे हनुमदादिभिः प्लवङ्गमैर्बहुषु क्रव्यादेषु यमपुरागन्तुकेषु कृतेषु अङ्गदेन निर्जितो रावणिः सद्य एव मायया निलीय लक्षीकृत्य रामलक्ष्मणौ घोरान्नागमयान् शरान्ववर्ष ॥

अथ नागशराचितौ विलोक्य निश्चेष्टौ राघवौ सुग्रीवादिषु वानरेषु दूयमानेषु मेघनादादमुं वृत्तान्तं निशम्य हृष्टान्तरङ्गस्य दशकण्ठस्याज्ञया राक्षसीभिरानीतायां पुष्पविमानारूढायां सीतायां विलोक्य राघवौ विलपन्त्यां समाकर्णितोदन्तस्य श्रीराघवरक्षायै समागच्छतो नागान्तकस्य छायया त्रुटिता बभूवुर्नागपाशाः ॥

तदनु सैंहिकेयमुक्तौ पुष्पवन्ताविव शोभमानौ विलोक्य रघुनन्दनौ वानरयूथपा योद्धुकामाः सिंहनादानकार्षुः । पुनरपि सैन्ययोर्द्वयो रणे प्रवर्धमाने राक्षसमुखादाञ्जनेयप्रभृतिभिर्धूम्राक्षादीन्निहतान्निशम्य क्रोधारुणाक्षो दशकण्ठः समरोत्कण्ठः सुमेरुशृङ्गाभं मनोनन्दनं स्यन्दनं समारुह्य ससैन्यः समाजगाम समराङ्गणम् । स्वागमनं विलोक्य क्रोधात्तपनतनयेन प्रेर्यमाणानि महामहीधराग्राणि तप-

नीयपुङ्खैः सायकैर्विच्छिद्यान्येन केनचित् बाणेन प्रविध्य च तमधः पातयामास ॥

तदनु सुग्रीवं विसंज्ञं दृष्ट्वा यातुधानेषु गर्जत्सु तत्क्षणमेव गवाक्षादिभिरात्मानं लक्षीकृत्य विक्षिप्तान् शिलोच्चयान्निजसायकैर्विफलीचकार ॥

प्रच्छादयामास च विविधैः शरजालैर्वानरसैन्यम् । अथ रावणशरोपप्लुतान्विलोक्य प्लवङ्गमान्सद्य एव दाशरथिनादिष्टः सौमित्रिरभिवाद्य श्रीरामचन्द्रं बभूव युद्धोन्मुखः ॥

अथ धनुर्विस्फारयन्तं 'हे लक्ष्मण! दिष्ट्या समागतोऽसि दृष्टिमार्गम् । क्षणादेव करोमि त्वां शमनपुरातिथिमिति गर्जन्तं पौलस्त्यं 'राक्षसेन्द्र! जानामि बलं त्वदीयं किमर्थं विकत्थसे' इति वदन्सौमित्रिर्बहुभिः शिताग्रैर्बाणैर्विव्याध। चिच्छेद च निष्प्रयासं तत्प्रयुक्तान्सप्त शरान् । तदनु निकृत्तभोगान् फणीन्द्रानिव निकृत्तान्निजशरान्विलोक्य विचार्य च बहूनां बाणानां वैयर्थ्यं क्रोधताम्राक्षो रक्षोधिपतिः सधूमाग्निसमानां शत्रुवित्रासिनीं शक्तिं लक्षीकृत्य लक्ष्मणं चिक्षेप ॥

समापतन्ती सा सौमित्रिणा निवार्यमाणापि बहुभिर्बाणैः प्रविश्य तस्य भुजान्तरं तं मोहाकुलमकार्षीत् । निपतितमपि तं नागास्त्रवृत्तान्तं विचार्य पुनरुज्जीवनभिया पीडयन्तं पौलस्त्यं क्रुद्धः प्राभञ्जनिर्वज्रोपमेन स्वमुष्टिना वक्षसि तथा जघान । यथास्यास्येभ्यो नेत्रेभ्यः श्रवणेभ्यश्च रुधिरनद्यस्त्रेधा प्रावहन् । बभूव च विसंज्ञः ॥

तदनु विशल्यो भूत्वा बाणान् विस्फारयति पौलस्त्ये दाशरथिर्वैनतेयमिव नारायणोऽधिरुह्य हनूमन्तं गम्भीरया गिराशरपति·

मवादीत् । 'अयि दुर्बुद्धे! क्षपाट! तिष्ठ तिष्ठ मा पलायस्व एषोऽहं मृधे सबान्धवस्य तव भविष्यामि मृत्युः' इति ॥

तदनु विचिन्त्य पूर्ववैरं राक्षसेन विविधैः शरजालैर्हन्यमाने हनूमति तत्क्षणमेव क्रोधारुणमुखो रघुनन्दनः कालानलज्वालैर्बाण-जालैः ससारथिं पौलस्त्यं सरथं विनाश्य कोटिसूर्यप्रकाशं तस्य किरीटं चाच्छिदत् ॥

उवाद च दयापरीतः कृत्तकिरीटं गतश्रियं तम् 'राक्षसराज! हताश्वसूतस्त्वं प्रशान्त इति कृत्वा न हन्मि त्वामिदानीम् । अतः प्राप्य लङ्कां किंचिदाश्वस्य च रथी समागच्छ । द्रक्ष्यसि तदा मदीयं वीर्यम्' इति । पौलस्त्योऽपि लज्जावनतमुखः पुरीं प्राविशत् ॥

तदनु पराजयविह्वलस्वान्तेनामुनाकाले कथमपि प्रबोधितो निद्रालुः कुम्भकर्णो विज्ञाय सर्वमपि वृत्तान्तजातं सत्वरमेव विलंघ्य प्राकारं समराङ्गणं प्राप्य विधमन्निव महीध्रान् विडम्बयन्निवाशनि-निर्घोषान् गम्भीरमेव जगर्ज ॥

समायान्तमतिभयङ्कराकृतिं समरोत्कण्ठं दशकण्ठानुजं विलोक्य मत्तमतङ्गजदर्शनान्मार्जारेष्विव भीतभीतेषु नीलादिषु वानरेषु प्रद्रवत्सु वालितनयोऽङ्गदः स धीरमवादीत् । हे प्लवङ्गमाः? स्ववीर्यमपि विस्मृत्य प्राकृताः कपय इव कुत्र वा त्रस्ता गच्छथ? कापि विभीषिका खल्वियं निकषात्मजानाम् । नालं युद्धायासावस्माभी राक्षसः । निवर्तध्वम्, क्षणादेवैनं विधमिष्यामः' इति ॥

तदन्वङ्गदवचनात्समाश्वस्तैः प्लवङ्गमैः प्रतिनिवर्त्य सपक्षपर्वत इव चलतो विलिखतश्च मूर्ध्ना दिवं तस्योपरि समुत्क्षिप्ता बहवः

प्रांशवः शिलोच्चयास्तद्वक्षःसंघट्टनाददालिषुः। पुनरपि कपिपुङ्गवैः प्रेर्यमाणान् महाद्रुमान् चूर्णीकृत्य शूलं भ्रमयन्नागान्तक इव नागान्वानरान् भक्षयितुं प्रावर्तत। तदनु कपिराजो नैसिर्गिकसाध्वसेन दाशरथिमेव शरणं प्राप्नुवतः प्लवङ्गमान्समाश्वास्य विक्षिप्य चातिमहतो महीधरान्महाभयङ्करं समरं कुर्वाणोऽपि कोणपविसृष्टशैलश्रृङ्गाभिहतः पपात नष्टचेतनः। सद्य एव तमादाय पुरं प्रति पलायमाने पौलस्त्यानुजे संहृष्टान्तरङ्गेषु च क्रव्यादेषु लब्धसंज्ञस्तपनतनयो विलूय तस्य कर्णनासिकं सत्वरमेव समुत्पत्य रघुनन्दनसमीपं समाजगाम॥

निकृत्तकर्णनासिकोऽपि भूयः शाखामृगान्संपरिष्वज्य बाहुभ्यां संघशः खादन् क्रुद्धेन सौमित्रिणा विविधैः शरजालैः प्रच्छादितोऽपि कियानयं मत्पराक्रमस्येति तमलक्षीकृत्य विक्षिपन्नेव शिखरिशिखरं राघवमभिदुद्राव। रघुनन्दनोऽपि विच्छिद्य सप्तभिः शरैस्तद्विमुक्तं पर्वतश्रृङ्गं वाल्यादिविनाशकानामपि बाणानां तस्मिन्मोघतामालक्ष्य त्वरितमेव विक्षिपन्वायव्यास्त्रं तस्य बाहुमच्छिदत्। पुनरपि समुत्पाट्य वृक्षान्समभिद्रवतस्तस्यापरं च भुजं विच्छिद्य निशिताभ्यामर्धचन्द्राभ्यां पादावप्यच्छैत्सीत्। निकृत्तपाणिपादस्याप्युच्चैर्गर्जतो रक्षसो मुखं शिताग्रैः शरैरापूर्य भूयोऽपि महेन्द्रदेवताकेन सायकेन महीध्रकूटोपमं चलत्कुण्डलं तदुत्तमाङ्गं चालुञ्चीत्।

तदनु क्रव्यादमुखाद्विदितकुम्भकर्णनिधनेन दूयमानेन दशकण्ठेन समाज्ञप्ता देवान्तकादयः समादाय शिरसा तच्छिष्टिं समराङ्गणं प्राप्य समरोन्मुखा बभूवुः। अथ संयति प्रमापितेषु तेष्व-

ङ्गदादिभिः सेनानायकेषु समुत्कटरोषाक्रान्तान्तःकरणः समागत्याति-कायाख्यो राक्षसः सौमित्रिणा सहातानीज्जन्यमाश्चर्यंकरम् । लक्ष्मणोऽप्याग्नेयादीनि विविधान्यस्त्राणि तस्मिन्नकिंचित्कराण्यालोच्य पर्याकुलस्वान्तोऽपि ब्रह्मदत्तवरोऽयमवध्य इति समीरणद्वारा विज्ञाय सद्य एव प्रायुङ्क्त शतानन्दास्त्रम् ॥

अतिकायेन शूलादिभिर्निवारितमपि तत्तदीयान्यायुधानि निष्फलानि विधाय विच्छिद्य च कनककिरीटजुष्टं तदुत्तमाङ्गमधः पातयामास ॥

तदनु निशम्यातिकायवधं बाष्पपरीताक्षं रावणं 'तात! मयि जीवति न शोचितुमर्हति भवान् । अद्यैव करोमि गतायुषं रामं सलक्ष्मणम्' इति वदन् मेघनादः सद्य एव धनुष्पाणिः समरभुवं प्राप्य नियोज्य च रथगुप्त्यै रक्षोवीरानसन्तर्प्य चाज्यादिना प्रदक्षिणज्वालमाश्रयाशं मन्त्रनैपुण्याधिगतानि बहुविधान्यस्त्राणि दधानो माययान्तरीक्षेऽन्तर्धाय तत्रस्थ एवारातिजिघांसया ववर्ष निशिताग्रान्सायकान् ॥

तदनु बहुषु वानरेषु हतेषु हतशेषेषु च भयाद्विद्रवत्सु मायावी स रामलक्ष्मणावपि विशस्तावकार्षीत् । इत्थं सर्वानपि स्वसामर्थ्याद्विमोह्य कृतकृत्यः पुरीं प्राविशत् ॥

तदनु विभीषणो राघवौ लब्धसंज्ञौ विज्ञाय गृहीतोल्कः 'रघुव्याघ्रौ जीवतः मा भैष्ट' इति वदन् दुःखितान् प्लवङ्गमान्प्रीणयामास ॥

(क्रमशः ।)

॥ श्रीः ॥

# साळुवाभ्युदयम् ॥*

[ पूर्वतोऽनुवृत्तम् ]

——*——

शुचिसचिवसखस्य मन्त्र......
......मताभिमतार्थसिद्धिमेकः ।
शमपरमुनिसार्थसेव्यतीर्था-
न्तरगमनान्नृपतिश्च योगसिद्धिम् ॥ ६ ॥

अथ निजगुरुणा विभक्तमन्तः
स्मरणबलेन वितीर्णतन्मयत्वम् ।
............तागमप्रविष्टः
सविनयमेत्य समाह मन्त्रिवर्यान् ॥ ७ ॥

निजगुरुविरहाग्नितान्तखिन्नो
यदि भवसिंहरमासखावतारः ।
अनिशवित्ररवीक्षणोन्मुखाना-
मवसर एष नखं भवेदरीणाम् ॥ ८ ॥

निजभुजबलनिर्जिताखिलाशाः
शमनिरताः सचिवे निधाय भारम् ।

---

*अस्य काव्यस्य आदर्शान्तरं समीचीनं यस्य कस्यापि वशे विद्यते चेत्, स महाभागः श्रीवाणीविलासमुद्राशालाध्यक्षस्य सविधं प्रति तमिमं कोशं कृपया संप्रेष्य सहृदयानां कृतज्ञतापात्रं भूयादिति प्रार्थयामहे ॥

सह हरिणगणैश्चरन्त्यरण्ये
शशधरवंशभुवो हि सालुवेन्द्राः ॥ ९ ॥

तदिह विसृज तत्कृते विषादं
.........नरसिंहमूर्तिरुर्व्याम् ।
अरुणखरमुखादुरो विभिन्द-
न्हर सुरवैर्यवतारवैरिवीरान् ॥ १० ॥

अयमवसर एव जैत्रयात्रा-
मनुपमपौरुषवारिधे विधेहि ।
समुचितसमयोप्तबीजरीत्या
प्रकृतमिदं फलवद्भवेत्प्रकामम् ॥ ११ ॥

शिशुरयमचिरागतप्रतिष्ठः
श्रयति न मूलबलं स्थिरावलम्बम् ।
इति किल भवतो निरस्तशङ्कं
नृपतिकुलं निखिलं निरुद्यमं यत् ॥ १२ ॥

अगणितपरमन्त्रमात्मसीमा-
क्रमणपराः क्षितिपाः स्वमण्डलस्थाः ।
परविवरगवेषिणोऽथवान्ये
फणिवदविश्वसनीयतां भजन्ते ॥ १३ ॥

प्रकटितकिटिमुद्रिकः पुरस्ता-
त्प्रशमपरो हि भयस्य तानशेषान् ।
स्वयमिह गमयन्स्वमण्डलाग्रं
नवमपि दर्शयते नरेन्द्रभावम् ॥ १४ ॥

निरवधिकुभुजङ्गनिग्रहेच्छौ
त्वयि क इव प्रभवेत्स्वरक्षणाय ।
परचालितकुलाद्रिपक्षपाते
पतगपतौ क नु पन्नगप्रसङ्गः ॥ १५ ॥

अवतरति समीकमात्तशस्त्रे
त्वयि कथमुद्भविता पुरीशवार्ता ।
क नु दनुजकुलं भवेदुदीर्णे
नखरसखे नरसिंहनाम्नि धाम्नि ॥ १६ ॥

तव पतति शरोत्करो न याव-
द्विलसति तावदरातिवीरवादः ।
दिशि दिशि दिननाथभानुजाले
भवति कुतो भविता तमिस्रवार्ता ॥ १७ ॥

प्रसरति भविता प्रतापभानौ
कथमुदयेदरिकौशिकप्रसङ्गः ।
प्रलयसमयमारुते प्रवृत्ते
तुलितकुलाद्रिकुले न तूलवार्ता ॥ १८ ॥

त्वमसि सकलदेवतास्वरूपो
नरहरिरेव हि नामतोऽपि धाम्ना ।
त्रिभुवनसुभटस्य ते पुरस्ता-
त्प्रभवति किं नु विरोधिनां प्रभावः ॥ १९ ॥

समय इह जयोचितोऽवतीर्णः
सदयनरोधकृतो घनास्त एते ।

लयमखिलहरिन्मुखेषु यान्तो
रिपुसदृशामिव भावि सूचयन्ति ॥ २० ॥

अखिलभुवनमाश्रितस्वसीमं
हृतघनरोधमतिप्रसन्नमेतत् ।
लसति हृषितराजहंसलीला-
विहरणभू (?) कमलाभिवृद्धिहेतुः ॥ २१ ॥

कलुषतरघनावलोकमात्रा-
द्विसृमरनर्तनविभ्रमोद्धृतानाम् ।
विरमति पततां विशिष्टवर्ण-
प्रसृमरसंकरताजुषां प्रमादः ॥ २२ ॥

अभिनवनरसिंहमूर्तिभाज-
स्तव रिपुदारणचातुरीं दिदृक्षुः
भवति किमु परास्तयोगनिद्रः
फणिवरतल्पगतः पुमान्पुराणः ॥ २३ ॥

अपि च निजधिया विमृश्य सर्वं
कलय यथोचितकार्यमात्मनैव ।
अनुगतहरिणो रघूद्वहोऽभूत्
अपरमतादपवादपात्रमेव ॥ २४ ॥

अनिशपरवशो मदादुदग्रा-
द्बलभृदनाशयदात्मना स्ववंशम् ।
दशरथतनयस्य दारकामा-
द्दृढमगमद्दशमीं दशां दशास्यः ॥ २५ ॥

अदित पणमुदारमात्मदारा-
नपि रिपवे सुकृतात्मजोऽक्षकेल्याम् ।
परुषकलिवशो नलोऽपि पाण्डु-
र्विपदमगान्मृगयाविहारमिच्छन् ॥ ॥ २६ ॥

सुकृतकथनतः सुरैर्निरस्तः
स्वयमपतत्सुरसद्मनो ययातिः ।
नहुष इव शचीनवानुरागा-
कुलितमनाः स च कुम्भसंभवेन ॥ २७ ॥

अवहितहृदयोऽवधूय तन्द्री-
मखिलजनानवलोकयन्स्वबुद्ध्या ।
अवति य इह वैष्णवाद्दते(स्मा)-
द्भुवि न भवेत्स पुनर्जगत्कुटुम्बी ॥ २८ ॥

इह जगदवनस्य यस्य सत्यं
भवति परं वशिता दयाप्यहिंसा ।
कलिमपि कृतवद्वित(न्वतासौ)
घटितचतुश्चरणो हि तेन धर्मः॥ २९ ॥

अवति सततमाश्रमांश्च वर्णा-
नपि चतुरश्चतुरोऽपि सादरं यः ।
स खलु सकललोकवन्दनीयः
शतमखपूर्वदिगीश्वरांशजातः ॥ ३० ॥

(...पि) शुनदुष्टकामचारि-
श्रुतिरिपुहिंसकचोरदुर्मदानाम् ।

निरसननिरतोऽत्र यः स्वसीमां
नयति जगत्स पिता न किं जनानाम् ॥ ३१ ॥

शिबिरदित पलं दधीचिरस्थि
त्वचमहिमांशुसुतः (किमार्जितं तैः) ।
वितरितुमपि यस्त्वसून्व्यवस्ये-
द्दिशति (जना भयमेव दानवीरः) ॥ ३२ ॥

अहरहरपि चारयन्प्रतापा-
दधिगतजीवनमात्तदण्डचक्रः ।
अवहितहृदयश्च यः समन्ता-
दवति पशून्द्विपदः स एव शौरिः ॥ ३३ ॥

ऋषिरिह तपसैककोऽपि वन्द्य-
स्तदखिलतापसरक्षणार्जितानाम् ।
निरवधितपसां निधिर्नृपालः
स भवति राज(पदाभिधः स) वन्द्यः ॥ ३४ ॥

उचितचतुरुपायकृत्त्रिशक्त्या
षडपि गुणान्(सु)खपूर्वसंधिसिद्ध्यै ।
कलयति य इहाङ्गसप्तकाढ्या
धरणिमवत्ययमाद्वितीयशब्दः ॥ ३५ ॥

सकलमपि विलोक्य (चारदृष्ट्या)
तदनु विधेयमपि स्वकीयबुद्ध्या ।
य इह सकलं मनस्वकार्यः
स भवति भूभरणेन सार्वभौमः ॥ ३६ ॥

अतिशयिनि न सामभेददाना-
न्यनलमरावधुना त्वया प्रयोक्तुम् ।
(अधिकम)कृपणैः परैरुपायै-
र्जय निखिलानवलम्ब्य दण्डमेकम् ॥ ३७ ॥

तदिह भवति यावदर्थसिद्धि-
र्निजमपि मूलबलं क्वचिन्निधेहि ।
भवति भुवि जयश्रियः (स पात्रं
प्रियम)तुलोऽपि च यस्तु शुद्धपार्ष्णिः ॥ ३८ ॥

तदिह स कुल(रक्षणा)वधानो
विहरति शार्ङ्गधरो हि वेङ्कटाद्रौ ।
सविधभुवि तदाहितावनायां
नृपवर चन्द्रगिरौ (निवत्स्यसि त्वम् ) ॥ ३९ ॥

शिरसि मुनिभयाद्दधत्किलाब्धिं
यदुदयदुर्गगिरिस्तटाकलक्ष्यात् ।
स्फटिकमयदरीमुखप्रकाशै-
र्हसति किमद्रिमगस्त्यशीर्णशृङ्गम् ॥ ४० ॥

स्फटिकरुचिबिसेन पार्श्वदीर्घ-
......खर्युदकं निपीय कामम् ।
विसृजति बहुधा तटाककुल्या-
शतकपटान्किल यत्र शैलदुर्गः ॥ ४१ ॥

यदुदयगिरिदुर्गवारिराशेः
सलिलकणैः शमिताध्वखेदरथ्यः ।

अपहृतपवनोग्रताप:
  शममयते शनकैर्ध्रुवं विवस्वान् ॥ ४२ ॥

प्रतिफलितवधूमुखाक्षिकेशै:
  प्रकटितपङ्कजमीनशैवलालि: ।
दिवि च सुरदृशां ददाति मोहं
  म.......स्य च यत्र दुर्गवापी ॥ ४३ ॥

सुरतरुवनिता द्विपार्श्वपूर्वा-
  न्प्रतिफलितानुदरे दधत्प्रकामम् ।
जल(धिरपि) यदीयदुर्गसिन्धु-
  र्विबुधगणेन विलोक्यते नु... ॥ ४४ ॥

उदयगिरिदुर्गराजधान्यां
  हरिणदृशाममरावतीसभायाम् ।
अधिगतविखरास्वभेदभाजा-
  ममरवधूष्वनिमेषतो विशेष: ॥ ४५ ॥

यदचलजलधौ हिमाम्बुलेशै-
  स्तपनकृतां सुदृशां श्लथै: कचाग्रात् ।
गमयति जलदान्किलाभिपूर्णान्
  तटतरुपोषणकुम्भदासभावम् ॥ ४६ ॥

अपि सुरसुदृशामपास्य केशा-
  नमरतरुप्रसवाश्रिता (?) द्विरेफा: ।
अपि सुरधुनिपङ्कजेष्वनास्था
  यदमलपद्मसर:सु यान्ति वासम् ॥ ४७ ॥

तं लाघवात्पवनसूनुरधो विधाय
वक्षस्तदीयमधिरुह्य करद्वयेन ।
तत्कण्ठपीडनमकुण्ठबलो निरुद्ध-
श्वासानिलाधिकसमेधितकुक्षि चक्रे ॥ ४६ ॥

निशाचरो वर्धितमेकचक्र-
निवासिनो यद्बलिभिर्जनस्य ।
अत्याहितं संजनयन्नराणां
नित्याहितं तद्वपुरुज्झति स्म ॥ ४७ ॥

अनन्तरमन्तरिक्षगतैरमरैरुक्ताभिर्मुक्ताभिः प्रशंसावाग्भिः कल्पतरुपुष्पवृष्टिभिश्चान्तर्बहिरामोदभरमुद्वहन्नयत्नमाकृष्टमपासो राक्षसस्य शरीरमुपशल्यभुवि निक्षिप्य सान्द्रतमःस्तोमकृतदृष्टिप्रमोषे प्रदोषे पौरजनैरविदितागमनः सदनं निजमाससाद भीमसेनः ॥

कथयित्वा जनन्यै तां वार्त्तां भ्रातृजनाय च ।
सुखं सुष्वाप शयने रणश्रान्तो वृकोदरः ॥ ४८ ॥
प्रातः पुरोपकण्ठे तद्वीक्ष्य रक्षोवपुर्महत् ।
अज्ञातभीमचरितैः पौरैरिति विचिन्तितम् ॥ ४९ ॥

पूर्वेद्युः प्रेषितेन चिरक्षुधितेन भिक्षुकेण नानाविधैरसमहृत्तैर्भक्ष्यैस्तृप्तिमुपेयुषापि तेन चापलाद्भक्ष्यमाणं शकटस्थितं स्वभक्ष्यं वस्तु निरीक्ष्य राक्षसः क्षुधार्तो नूनमेतत्पुरवासिनः समस्तानपि जनानागतो युगपत्कबलीकर्तुम् ॥

इत्थं रचितविचारान्पौरांस्त्रासेन तत्पुरं हित्वा ।

दिक्षु रयाद्विद्रवतः पवनसुतो वारयन्नुवाच वचः ॥

पौरा विजहित भीतिं निहतः समरे निशाचरः स मया ।
आकृष्टं च भवद्भ्यो दर्शयितुं तद्वपुः पुराभ्याशे ॥ ५१ ॥

इतीरितास्तेन पुरोपकण्ठ-
मासाद्य कायं रजनीचरस्य ।
ऐक्षन्त पौराः सुरराजवज्र-
विदारितं शृङ्गमिवाञ्जनाद्रेः ॥ ५२ ॥

अथ यातुधानवधप्रहृष्टैर्मुहुर्मुहुर्भीमसेनं प्रशंसद्भिरद्भुतरसभरितान्तःकरणैः पौरजनैः प्रतिदिवसं सबहुमानं सरसैरन्नैः प्रतिगृहं कृतातिथ्या दूरविक्षिप्तभिक्षापात्राः समुद्धृतकण्टकायामेकचक्रायां कंचिकालमतिष्ठन् ॥

पुत्रं चक्रकविं गुणैकवसतिः श्रीलोकनाथः सुधी-
रम्बा सा च पतिव्रता प्रसुषुवे यं मानितं सूरिभिः ।
तस्याभूद्द्रुपदात्मजापरिणये चम्बुप्रबन्धे महा-
नाश्वासः प्रथमो विदर्भतनयापाणिग्रहभ्रातरि ॥

इति प्रथम आश्वासः ॥

—*—

## द्वितीय आश्वासः ॥

——*——

अथ कदाचिदाविरासत्किामराजकीर्त्तिप्रतापायमानहिमानीकामिनीपयोधरोष्मभरः, सूरातपक्लेशानभिज्ञपथिकजनासे-

वितस्निग्धपादपच्छायः, स्वेदकणोदयरहितसुरतक्रीडायासः, हिमपवनजनितव्रणेषु विलासिनीनामधरबिम्बेषु तत्कपोल-तलेष्वेव निर्वर्तितमुखचुम्बनकृत्यविलासिजनः, तुषारवर्षसं-प्लुष्टसारसवनसरसीसंचरद्राजहंससंसत्प्रतीक्षितवासन्तवास-रोदयः, बुभुक्षितैरपि कुण्डलिभिः शीतभीततयानास्वादित-हिमानिलः, पिपासुभिरपि हरिणगणैरपीतशीतोदकः, भिम-ङ्क्षुभिरपि वनकासरैरनवगाढशीतलकासारपूरः, चन्द्रिकाच-यवत्सुखस्पर्शमध्याह्नातपः, विकचारविन्दकन्दलदमन्दमकर-न्दरसभोजनालाभादेकादशी मधुलिहाम्, मृदुमृणालभक्षणा-भावजनितक्षुधार्ततया दिवानिशं विनिद्राणां शिवरात्रिः कल-हंसानाम्, धनुर्गतो भास्कर इति सत्वरमुषःकालपूजासाद-रार्चकनिवेदितसार्द्रकदधिमिश्रान्नघृतगुलफलमिलितमुद्गौदन-स्वीकरणात्पारणादिवसो देवतानाम्, घुसृणमसृणहरिणमदा-नुलेपबहलपरिमलमहिलाजनोष्मलनिर्भरकुचकुम्भपरिरम्भार-म्भसंभ्रमविजृम्भमाणोत्साहविदग्धजनः, हिमसंहतिच्छन्नतया प्रथमशिखरिशिखरमधिरूढेऽपि दिवसपरिबृढेऽनन्यविदिता-भिसारिकाजनपुनरागमनः, युगान्तकालः कान्तारहितानाम्, सुचरितपरिपाकः सवधूकानाम्, उद्भववासरः परिरम्भसुख-संपदाम्, सामन्तः शरत्समयस्य हेमन्तः ॥

मदनाग्निजमुष्णमङ्गना-
कुचकुम्भोष्णभरोऽनुरागिणाम् ।
हरति स्म हिमर्तुवासरे
न किमुष्णः शममुष्णतो व्रजेत् ॥ १ ॥

विवाहकर्माभवदग्निसाक्षिकं
पुरावयोरित्यबलाविलासिनौ ।
हसन्तिकायन्त्रगताग्निसाक्षिकं
तदादधातां स्मरकेलिकर्म किम् ॥ २ ॥

यत्र खलु किंनराः प्रागेव निजवधूनां पयोधरावसृजता विश्वसृजा संत्याजितगाढपरिरम्भविभ्रमसुखाः, व्रणमुत्पादयता नीहारसमीरणेन तदधराणामास्वादनेऽपि विघटिते चिरादनुभूयमानब्रह्मचर्याः, मुखचुम्बनाडम्बरमात्रसुरतरसामात्मजातिनिन्दास्पदतामनयन् । तदा नीहारे पर्वतसार्वभौमसमाश्रयतागर्वादिव सत्यवतीपराशरसंगमकारणतामदादिव सुधामयूखपरिग्रहावलेपादिव कलितरोदसीसमाक्रमणे, धनिकजनाः कालागरुधूपितेषु समन्ततः साङ्गारहसन्तिकासंततिशमितशीतभरेषु गर्भभवनेष्वास्तीर्णमृदुकम्बलसमञ्चितान्मणिमञ्चानधिशयानाः, कस्तूरिकाकुङ्कुमपङ्कानुलिप्तवपुषः, वीटीचर्वणं विदधानाः, गाढोपगूढाङ्गनातुङ्गवक्षोजाः, दृढतरप्रच्छदपटाच्छादितसर्वाङ्गाः, हिमपवनदुरवलेपानभिज्ञाः, विषमशरसमरजनितश्रमा रजनीषु निद्रासुखमन्वभूवन् ॥

क्रमेण धनूराशिं विहाय मकरराशिं संक्रान्ते कमलिनीकान्ते पाण्डवाधिष्ठितं निशान्तमधिदिनान्तं वस्तुमभजन्त निरन्तराध्वसंचारविलङ्घितवासरा भूसुराः ॥

तद्गृहस्वामिना विप्राः कृतातिथ्या गतश्रमाः ।
विचित्राः कथयामासुर्नानाराजाश्रयाः कथाः ॥ ३ ॥

द्रुपदस्य कथां तेषु कथयत्सु कथान्तरे ।

अनन्यमनसोऽशृण्वन्पाण्डवास्तां विशेषतः ॥ ४ ॥

तां कथां श्रोतुकामांस्ताञ्ज्ञात्वा पाण्डुसुतान्द्विजाः ।
वक्तुमारेभिरे तेभ्यो यथावद्विस्तरेण ते ॥ ५ ॥

'अस्ति क्षितौ सद्गुणरत्नसिन्धुः
पाञ्चालराजो द्रुपदाभिधानः ।
याजप्रसादात्समभूदपत्य-
द्वयं च तस्याध्वरवेदिमध्यात् ॥ ६ ॥

तस्मिन्द्वये द्रोणवधाय धृष्ट-
द्युम्नाभिधः कश्चन सूनुरासीत् ।
धन्या तथान्या समभूच्च कन्या
कृष्णाभिधाना खलु पाण्डवार्थे ॥ ७ ॥

स राजा पाण्डवान जतुसदनदहने पतङ्गतां गतानाकर्ण्य शोकविदीर्णहृदयः सहेतुभिर्निजपुरोहिताभिहितैरपनीतशोकः ते जीवन्ति चेदागमिष्यन्तीति पौषमासि वलक्षपक्षे वासरे च शुभंयौ द्रौपदीस्वयंवरमहोत्सवं विधित्सन्राज्ञामानयनाय विरचितदूतसंप्रेषणो वीर्यशुल्कायाः सुतायाः कल्याणे मिष्टान्नाष्टापदपट्टाम्बरधेनुभुवां प्रदानैर्द्विजानां प्रीतिं चिकीर्षन्समागतानामपि भवतां मनोरथं पूरयिष्यति ; स चोत्सववासरस्त्रिरात्रान्तरितः ; तज्झटिति गन्तव्यम्' इति द्विजानां वचनेन सानन्दाः पाण्डुनन्दना गतायां रजन्यां जनन्या साकं सदारं तमापृच्छय भूसुरं तैः सहिता द्विजैः सहायैर्विहायैकचक्रां प्रस्थिताः सत्वरमगच्छन् ॥

मार्गे तेषां गच्छतां पाण्डवानां
व्यासः श्रीमानाविरासीत्पुरस्तात् ।
अम्भोवाहव्यूहतत्तादृशाभां
क्षिप्तां कुर्वन्देहभासां विलासैः ॥ ८ ॥

गौरं मूर्ध्नि जटाकलापमलिके भस्म त्रिपुण्ड्रं कर-
द्वन्द्वे दण्डकमण्डलू मृदु कटीदेशे च कृष्णाजिनम् ।
सत्यं वाचि दयाक्षमाधृतिभरांश्चित्ते वहन्सन्ततं
साक्षाल्लोकहिताय यः क्षितितले देवोऽवतीर्णो हरिः ॥

यः सर्वविद्रचयति स्म पुरा पुराणा-
न्यष्टादश स्मृतिमपि स्वयमातनिष्ट ।
व्यस्तं च यः श्रुतिगणं विदधे समस्तं
गूढं तथोपनिषदर्थमसूत्रयद्यः ॥ १० ॥

यः खलु पञ्चपाण्डवसुपर्वोर्वीरुहपञ्चकोदयविराजमानं द्रुपदनन्दनेन्दिराप्रभवोदन्तशोभितमितिहासशतमणिनिकुरुम्बकरम्बितम्, गोब्राह्मणप्रशंसापूरपूरितम्, पुरुषार्थतरङ्गकुलसंकुलम्, प्रकाशितमुरशासनसंपादितक्षोभम्, संदर्शितदुर्योधनचारितदुर्वारौर्वानलम्, पर्वजातविजृम्भणोपशोभितम्, प्रकटितगीतासुधासारम्, विजृम्भितद्यूतविहारहालाहलम्, प्रदर्शितवाहिनीशतनिपतनम्, प्रकटीकृतवैभवतीर्थसार्थं भारतसागरं सृजति स्म । यः पुनरुद्यानभूर्विद्यालतानाम्, उद्भवक्षेत्रमद्भुतानाम्, विहारपदं शारदायाः, रोहणधरो गुणमणिधरणीनाम्, संचारस्थली सदाचाराणाम्, मेलनस्थानमनसूयाप्रियोक्तिविरक्तीनाम्, अस्मृतः स्मृतिभुवा, अनाघ्रातः

क्रोधेन, अदृष्टचरो लोभेन, अश्रुतपूर्वो मोहेन, अस्पृष्टो मदेन, अनालीढो मात्सर्येण, सहितः शमदमाभ्याम्, रहितो रागद्वेषाभ्याम्, अद्वैतस्थानमद्वैतविद्यायाः, पारिजातभूरुहो वसिष्ठकुलजलधेः, पचेलिमफलं पराशरतपस्तरोः सत्यवतीशुक्तिमुक्ताफलमशोभत । आश्चर्यचर्यः स पाराशर्यस्तपोधनशिखामणिर्निजचरणारविन्दकृतवन्दनान्पाण्डुनन्दनानाशिषा संयोजयन्संदर्शितवात्सल्यां श्रेयोविधानकल्यां सुधारसतुल्यां वाणीमभाणीत्– 'वत्स, भीमसेनोपज्ञं जतुसदनदहनम्, स्कन्धसीम्नि निधाय स्वपतां भवतामानयनम्, वनभुवि कृतजनडिम्बस्य हिडिम्बस्य कदनम्, भवदनुज्ञया तद्भगिन्यां घटोत्कचनामधेयस्य सुतस्योत्पादनम्, एकचक्रायां ब्राह्मणसुतसंरक्षणाय बकाभिधरक्षोविक्षोदनं च ब्रह्मवेषप्रच्छन्नानां युष्माकं तत्र पुरे क्लेशाननुभूयावस्थानं च मया दिव्यदृशा सर्वमवगतम् । इतः परं यूयमुत्कचकस्थितं धिषणयारूढधिषणसाम्यं धौम्यमधिगम्य तं पुरोधसं विधाय तेन साकमहर्निशं गच्छन्तः पदवीं दवीयसीं झटिति विलङ्घ्य गरीयसीं द्रुपदनगरीमधिगताः स्वयंवरे पाञ्चालदुहितरमासाद्य कृतार्था भविष्यथ । स च राजा साक्षान्मृत्युवदनादिव लाक्षासदनाद्विनिर्गतान्भस्मावकुण्ठानिव पञ्चाग्नीन्वेषान्तरेण प्रच्छन्नान्कुत्रचिन्निवसतो भवतो गुरुमुखात्सम्यगवगम्य कन्दलितानन्दो विदेहनरपतिरिव दुहितुरयोनिजायाः फल्गुनेतरेणेदमशक्यमिति प्रचण्डस्य कोदण्डस्यारोपणं पणं वितन्वन्राज्ञामानयनाय तत्तद्देशेषु निदेशवर्तिनो दूतान्विसृज्य समारब्धस्वयंवर-

महोत्सवो भवदागमनं प्रतीक्षते' इति वदन्स मुनिरभिमतं देशमयासीत् ॥

तस्मिन्गते तापससार्वभौमे
भागीरथीतीरभुवं निशायाम् ।
प्रपेदिरे पाणिधृतोल्मुकार्चि-
र्धूतान्धकारेण वनाध्वना ते ॥ ११ ॥

तत्र सान्द्रतरशरच्चन्द्रचन्द्रिकाबान्धवे सैरसैन्धवे स्रोतसि निजोरुशोभाविधूतद्विविधरम्भाडम्भगुम्भाभि:कुम्भस्थनीभि: सह सविश्रम्भमम्भ:क्रीडाडम्बरकरम्बितादरं 'क एते पुरुषा:' इति रुषा परुषभाषिणं तूर्णमर्णस: समुत्तीर्णं रोधसि तरोरधस्ताद्वधूजनं निधाय मृधाय रथमास्थाय समापतन्तं शरासारवर्षिणं पर्जन्यमिव गर्जन्तं दुर्जयं निर्जरगायकं चित्ररथं दुर्जनतर्जनोर्जितकीर्तिरर्जुनो दर्भाग्रसंहितेन पावकास्त्रेण क्षणसंनिधावेव दग्धरथं विदधान:, सस्मितैरपतकादयै: सोदर्यैश्च महतादरेण मुहुर्वीक्ष्यमाण:... ॥

अवगतनिजतत्वेन मात्सर्यमुत्सार्य कलितमैत्रीकेण तेन तां तरङ्गिणीं संतारिता: पाण्डवा: कृत्वा च धौम्यमाचार्यं तेन सार्धमध्वानं दीर्घं लघु विलङ्घ्य रजन्यारम्भे जनन्या समं राजधान्यां द्रुपदस्य निवेश्य किंचन कुलालभवनमभजन्त ॥

पादसंवहनं मातुस्तत्र कृत्वाधिशर्वरि ।
अहर्निशाध्वसंचारश्रान्तास्ते सुषुपु: सुखम् ॥ १२ ॥

(क्रमश: ।)

---

'वर्षेऽस्मिन् सार्वजनीनत्वेन एकैव भाषा एकैव लिपिः एकमेव मतं एकैव जातिः यदा भविष्यति तदैव हिन्दुजनानामभ्युन्नतिर्भाविनी' इति केचन मनीषिणो विश्वसन्ति- तमिममभिप्रायमधिकृत्य पण्डिताः स्वाशयविशेषान्सोपपत्तिकं गैर्वाण्यां विलिख्य सहृदयायां प्रकाशनाय अनुमन्यन्ते चेद्बहूपकृतं भवेत् ॥

---

# The Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITOR

R. Krishnamachariar, M.A.,

Vidyanidhi.

VOL. XXI.

No. 11-12.



PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM

AND PUBLISHED AT MADRAS.



Registered No. M. 103

# विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.

Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, 1/3 Ormes Road, Kilpauk, Post, Madras (W).

6. Annual subscription is Rs. 3 only. includingpostage.

॥ श्रीः ॥

# ॥ सहृदया ॥

सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ९. ]  नलवर्ष माघमासः ।  [ संचि. ११.



## सुभाषितानि ॥



परिपूर्णेऽपि तटाके काकः कुम्भोदकं पिबति ।
अनुकूलेऽपि कलत्रे नीचः परदारलम्पटो भवति ॥ १ ॥

दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः ।
बालः पयसा दग्धः दध्यपि फूत्कृत्य भक्षयति ॥ २ ॥

विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी स कुलद्वेषी पुनः पिशुनः ॥ ३ ॥

लब्धोच्छ्रायो नीचः प्रथमतरं स्वामिनं पराभवति ।
भूमिरजो रथ्यादावुत्थापकमेव संवृणुते ॥ ४ ॥

उपकृतमनेन सुहृदयमित्यसतामस्ति न कचिदपेक्षा ।
होतुः स्वहस्तमाश्रितमुद्धृत्तोऽग्निर्दहत्येव ॥ ५ ॥

॥ श्रीः ॥

# ॥ श्रीरामोदन्तः ॥

[ पूर्वतोऽनुवृत्तम्। ]

---

अथोभयोः सेनयोः प्रतिभये समरे समुज्जृम्भमाणे कम्पनाकम्पनप्रजङ्घेषु वालिसुतेन प्रमापितेषु विशसितयोश्च मैन्दद्विविदाभ्यां शोणिताक्षयूपाक्षयोः, कुम्भनिकुम्भयोश्च सुग्रीवमारुतिभ्यां चरमां गतिं गमितयोः क्रोधान्धेन पौलस्त्येन प्रहितः खरात्मजो मकराक्ष इक्ष्वाकुनन्दनेन साटोपं युध्यमानः स्वपितुर्गतिमवाप ॥

तदनु तातशासनं शिरसा वहन्मेघनादोऽन्तर्धानशक्त्यान्तरिक्ष एव तिष्ठन् बाणपरम्परामभिवृष्य व्यथयन्नपि शास्त्रवान्सर्वथा दिव्यास्त्रबलेन जिघांसति मां रामचन्द्र इति तदभिप्रायं विज्ञाय निवर्त्य चाहवात्स्वपुरं प्राविशत् ॥

तदनु निकुम्भिलां गन्तुकामोऽयं मायावी पश्चिमेन द्वारेण गच्छन्निजगमनविघातकं विलोक्य दाशरथ्योर्युद्धोद्योगं तन्निवारणार्थं कामपि मायामयीं सीतामुत्पाद्य समक्षमेव हनूमतः खड्गेनाऽच्छिदत्।

तद्दर्शनाद्व्याकुलितान्तःकरणे युद्धनिराशया निर्गते प्राभञ्जनौ सत्वरमेवावाप्य निकुम्भिलां सप्ततन्तुमुपाक्रमत। प्रतिनिवृत्तेन मारुतिना निवेदितवृत्तान्तो राघवः 'हा सीते' इति रुदन् छिन्नमूलो महीरुह इवाब्धः पपात। विललाप च बहुधा। निशम्य कर्णारुन्तुदां हनूमदभिहितां वार्तां सर्वेषु दूयमानेषु विज्ञातमेघनादमोहनव्यापारो विभीषणः महाभाग! दाशरथे! किमर्थं दूयते भवान्? निष्प्रत्यूहयागकृत्यनिष्पादनार्थं पापः स माययास्मान्विमोह्य निकुम्भिलामगदत्।

अतो मा विलम्बध्वम् । अद्यैव तत्र गच्छाम इति वदन् तत्क्षणमेव लक्ष्मणं पुरस्कृत्य साकं हरिसैन्यैर्निकुम्भिलां न्यरुणत् ।

तदनु निशम्य कपिकोलाहलं शत्रुजिघांसौ मेघनादेऽसमाप्यैवाध्वरं युद्धाय निर्गच्छति हनूमत्प्रहिताः प्लवङ्गमाः बहुभिर्गिरिकूटैर्वृक्षैश्च तं निजघ्नुः । तदनु क्रोधताम्राक्षोऽयं "पाप! कथमिह जातस्त्वमिहैव क्रूरं कर्मारभथाः" इति विभीषणमाक्रुश्य बहुभिर्बाणैः सलक्ष्मणं तमविध्यत् । सौमित्रिरपि विविधैः शरैरिन्द्रजितो हयान्प्रमथ्य सरथं तस्य सारथिं चाभनक् ॥

तदनु राक्षसविसृष्टमासुरं माहेश्वरेण विष्टभ्य भूयोऽपि महेन्द्रदेवताकेनास्त्रेणारातेः शिरोऽलुञ्चात् ॥

सुत्रामजितोऽपि पुत्रस्य वधं निशम्य बहुधा विलपन् रक्षःपतिः वैदेही किल सर्वराक्षसविनाशमूलमिति विचार्य तां जिघांसुः खड्गपाणिर्जगामाशोकवनिकाम् ॥

तदा पैर्मन्त्रिभिर्निवारितोऽयुक्तमेतदिति ततः प्रतिनिवर्त्य प्रविश्य समराङ्गणं विस्फूर्जथुतुल्येन निर्ह्रादेन दिगन्तान् प्रतिध्वनितान् कुर्वन् सर्वलोकविनाशनायोद्यतोऽन्तक इव भयङ्कराकृतिर्जगदद्यारावणमरामं वेति निश्चित्य युद्धसन्नद्धो बभूव ॥

अथ प्लवङ्गमराक्षसयोर्महति समरे प्रवर्धमाने बलद्वयसंक्षोभात्सर्वत्र व्याप्नुवता रजसास्मीयापरज्ञाने व्यपनीते जाते च समराङ्गणे निरालोके राक्षसान् राक्षसा वानराश्च वानरान् निर्दयं प्राहरन् । तदनु हतबान्धवो रक्षःपतिः प्रायश आयुधानां विचार्य वैयर्थ्यं क्रोधान्धो मयमायाविहितां महास्वनाममोघामष्टघण्टां महाशक्तिं लक्ष्मणमुद्दिश्य चिक्षेप । फणिराजजिह्वोपमया तया वक्षसि प्रविद्धो लक्ष्मणः सद्य एवाधः पपात ॥

शक्तिघाताद्विदीर्णहृदयं विलोक्य सौमित्रिं भ्रातृस्नेहाद्विषण्णहृदयो दाशरथिः पर्जन्य इव गर्जन् शितैर्विविधैर्बाणैः पौलस्त्यमवाकिरत् । सोऽपि रामबाणोपद्रुतो युद्धभूमिमत्याक्षीत् ।

दाशरथिस्तु सद्य एव सौमित्रेर्हृदयलग्नां शक्तिमाकृष्य हनूमदानीताभिरोषधिभिस्तं विरोपितव्रणमकार्षीत् ।

भूयोऽपि स्यन्दनमन्यत्समारुह्य युद्धाय समागच्छति पौलस्त्ये श्रीरामचन्द्रः 'क्षितिष्ठस्य रथस्थेनायोधनमसाम्प्रतम्' इति विचार्य मघवता मातलिद्वारा प्रहितं सशस्त्रं रथं समारुह्य बाणानां शतसहस्रेण पौलस्त्यमाच्छाद्य विनाश्य च धुर्यान् सरथं तस्य सारथिं चादुनोत् ।

अच्छैत्सीच्चाऽपरेण सायकेन तस्य ध्वजम् । विलोक्य ध्वजोन्मथनं क्रुद्धेन रावणेन विद्धा अपि दाशरथेर्दिव्यास्तुरङ्गा नैवाऽस्खलन्, नापि बभ्रमुः । तदनु राक्षसेन प्रकटितानि मायानि शिरांसि तत्क्षणमेव लक्ष्मणाग्रजेन शिलीमुखैर्वृश्च्यन्ते स्म ॥

इत्थमत्यद्भुतमेव युध्यमानयोः श्रीरामरावणयोः सप्त दिनानि व्यतीयुः । समरसमुत्सुखोऽपि दाशरथिर्युद्धकेल्यासक्त्या विलम्बे क्रियमाणे जनकानन्दिन्या भविष्यति महान्क्लेश इति विचार्य सत्यपि विदलनेऽङ्कुरितानि तच्छिरांसि मातलिसंभारितेन ब्रह्मास्त्रेण निकृत्य समवर्तिनः प्रधानोपायनान्यकार्षीत् ॥

तदनु विलोक्य दीर्घनिद्रां गतं रावणं एकोदरसम्बन्धसंजातं शोकं सोढुमपारयति विभीषणे स्वप्राणत्राणार्थं भ्रातृघातितया कदर्योऽहमित्यात्मानं विनिन्द्य दोदूयमाने विज्ञातभर्तृनिधनवृत्तान्ता मण्डोदरी निकृत्ता घनलतेव दशकण्ठोपरि निपत्य क्रन्दन्ती बहुधा विललाप ।

तदनु विभीषणः तथा परिदेवमानां तामारोहणाग्निप्रवेशान्निषिध्य समाश्वास्य च—

मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम्।
क्रियतामस्य संस्कारो ममाप्येष यथा तव॥

इति रघुनन्दनस्याज्ञया रक्षःपतेः पितृमेधं यथाशास्त्रं व्यतानीत्।

रामचन्द्रोऽपि भ्रातृनिधनशोकाकुलमनं समाश्वास्य लङ्काधिपतिं विधातुं पुण्यतीर्थानीतैः पाथोभिरभ्यषिञ्चत्।

तदनु विभीषणेन शिबिकामारोप्य समानीतां वियोगदुःखस्मरणविह्वलां विलोक्य जनकनन्दिनीं प्राप्तचारित्रसन्देहो दाशरथिरित्थमवादीत् 'सीते! न मेऽस्ति कार्यं त्वया। गम्यतां यथागतं, यतः पौलस्त्योत्सङ्गपरिश्लिष्टा त्वं मम दुःखोत्पादिकाऽसि। अङ्गीकुरु सुग्रीवं राक्षसेन्द्रं वा। आहोस्वित्, भरताद्भुङ्क्ष्व भोगान्। क्व विख्यातो रघोर्वंशः क्व त्वं परगृहोषिता?'

अथ परमपतिव्रता जनकसुता प्राणप्रियस्य दाशरथेः प्रत्ययोत्पादनाय साक्षीकृत्य सन्निहितान्शतक्रतुप्रमुखान्बर्हिर्मुखान्सर्वदेवताप्रणामपूर्वकं सप्तार्चिषमवजगाहे।

तदनु मूर्तिमान्हुतभुक् हस्ताभ्यां समादाय जनकात्मजां राममवादीत् 'काकुत्स्थ! वीर्योत्सिक्तेन रक्षसापनीतापीयं सदा त्वच्चिन्तापरायणैवाऽवर्तत। सद्वृत्तेयं वाचा मनसा बुद्ध्या वा नाऽत्यचरत्प्राणप्रियं त्वाम्। अतो विशुद्धशीलां निष्पापां प्रतिगृह्णीष्व विदेहराजसुताम्॥

अथ दाशरथिर्भगवतः कृपीटयोनेर्वचनादङ्गीकृत्य जनकन-

न्दिनीमात्मानं स्तुवता परमेष्ठिना 'एष तव पिता त्वद्दर्शनार्थं समागत इति प्रदर्श्यमानं नमस्कृत्य दशरथं 'भ्रातृभिः सह राज्यस्थो दीर्घमायुरवाप्नुहि' इति तत्कृतमाशीर्वचनमुत्तमाङ्गेनाऽभ्युपगम्यातः स विभीषणैः सुग्रीवादिभिः साकं सीतया सौमित्रिणा चाऽयोध्यां जिगमिषुः स्वपराक्रमविजितं समारुरोह कौबेरं विमानम् ॥

अथाम्बरं पुष्पकेण विगाहमानः श्रीरामचन्द्रः सञ्चार्य सर्वतश्चक्षुषी 'प्रिये! विश्वकर्मणा विनिर्मिताऽमरावत्या अपि रचितकलङ्का लङ्केयम् । बन्धुरगात्रि! गङ्गादिसिन्धुदारः सिन्धुरयम् । जनकनन्दिनि! जनस्थानवर्तिनामृषीणामाश्रममण्डलमिदम् । पङ्कजनयने! अभ्रङ्कषं माल्यवतः शृङ्गमिदम् । सारसचरणे! सारसपङ्क्तिविचित्रिता गोदावरीयम् । चञ्चलाक्षि! शूर्पणखाप्रहितानां खरदूषणादीनां निधनस्थानमिदम् । स्वर्णघटस्तनि! अर्णप्रसादकस्य घटजस्याश्रमोऽयम् । रञ्जितप्रिये! पञ्चाप्सरो नाम शातकर्णेः क्रीडासर इदम् । रुचिराङ्गि! शरभङ्गस्याहिताग्नेस्तपोवनमिदम् । पवित्रचरित्रे! चित्रकूटोऽयम् । सुन्दरास्ये! अमन्दानन्दसन्दायिनी मन्दाकिनीयम् । कञ्जनेत्रे! सञ्चितसुकृतस्यात्रेराश्रमपदमिदम् । विशालाक्षि! निषादाधिपतेर्गुहस्य पुरमिदम् । अरविन्दमुखि! शिशिरानिला सरयूरियम्' इति विविधाः शंसन्श्राव्यवाचः भरद्वाजस्य भगवतः पावनं तपोवनमयासीत् ।

तत्र च मुनिकृतातिथिसत्कारस्ततोऽप्यतिदूरमतिक्रम्य मार्गं हनुमत्कथितप्रवृत्तिना पुरोहितपुरःसरेण भरतेन प्रत्युद्गम्यमानोऽतिवात्सल्यात्तद्दर्शनद्विगुणितानन्दः सेवाविचक्षणसुग्रीवदत्तहस्तावलम्ब

आशरपतिदर्शितेन बद्धस्फटिकेन सोपानमार्गेण विमानादवातरत् ।

तदनु कुलगुरुं प्रणम्य प्रापितमणिपादुकं निजपादयोः साष्टाङ्गं प्रणमन्तं भ्रातरमत्यानन्दादस्वजत् । भरतोऽपि 'ममापद्बन्धुरयं हरीश्वरः, आयोधनेषु पुरःप्रहर्ता एव विभीषणः' इत्यग्रजेन दर्शितौ प्लवङ्गराक्षसेश्वरौ प्रणिपत्योपचर्य च यथार्हं प्रणमतो मन्त्रिवृद्धान्कृपार्द्रैर्दृष्टिपातैः कुशलप्रश्नैश्चानुगृह्णन्तं श्रीरामचन्द्रं पुष्पकारूढं सगौरवमानन्दयन्प्रापयामास नन्दिग्रामाख्यं निजनावासस्थानम् । तत्र कौसल्यां कैकेयीं सुमित्रां च क्रमेण वन्दमानः, स्वावलोकनसन्तुष्टाभिस्ताभिश्चन्द्रमा इव तरङ्गमालाभिः समाश्लिष्यमाणोऽविन्दतामन्दमानन्दम् ।

तदनु सचिववर्गो वसिष्ठाज्ञया गङ्गादिपुण्यसलिलैर्दाशरथिमभ्यषिञ्चन् । अथोपचारासक्ताभ्यां सौमित्रिशत्रुघ्नाभ्यामभितो वीजितबालव्यजनो भरतधृतस्वच्छमुक्तातपत्रः तूर्यस्वनैर्नागरिकानानन्दयन्ननुगतवानरसैनिकः सौधोद्धृतलाजवर्षामुत्तोरणामयोध्यां प्राविक्षत् ।

तत्र भ्रातृभिरनुदिनमुपचर्यमाणः सुग्रीवादीन्प्रियसुहृदः प्रतिनियते स्थाने संस्थाप्य साकं जनकनन्दिन्या भोगानैहिकान्स्वच्छन्दमनुभवन् चिराय पयोधिरशनावच्छेदिनीं मेदिनीं अद्वितीयः परिपालयामास । इति ॥

इति युद्धकाण्डः समाप्तः ॥

पि. शंकरसुब्रह्मण्यशास्त्री ।

---

|| श्रीः ||

# ॥ वल्लभोपदेशः ॥

---※---

(आदावतितरां दारिद्र्यदेवतानुकंपदृगंचलभाजनीभूय गच्छति काले केवलं स्वकीयसततोद्योगेनैव अगणितां संपदं संपाद्य लोकविख्यातेषु कुबेरकल्पेषु श्रीमत्सु अग्रगणनीयोऽयं महाभागः 'महाता शैसा' नाम सिंहलद्वीपीय (तिलोन्) मनुजः । अयमेकदा नवपरिणीतामात्मीयगृहिणीं ग्रहमादाय मातुः समीपे चागत्य साकं सहचर्या तदीयचरणपङ्कजमभिवन्द्य मातुराशीर्वादं गृह्णतः तस्याः समक्षं मधुरतरं पत्नीमुपदिदेश । सोयमुपदेश उपह्रियते सहृदयापाठकपाठिकागणोपयोगायाऽस्माभिः)

'हे, सहधर्मिणि त्वमतीव कुलीनस्य श्रीमतः कंन्यकेत्यहमवगच्छामि । त्वं बाल्यादारभ्य समयमेतावन्तं संपूर्णैश्वर्ये परिपोषितेत्येतदपि न हि न जानामि । परं त्वहं निष्कांचनः सर्वस्मिन् वसुधातले दारिद्र्यमेव मदीयसंपत् । परं त्वदीयदृष्टिपथमिदानीमारोहति किल स एव मम पर्णकुटीरः मम प्रियतमपरिवारस्य निवासस्थानम् । त्वमवगन्तासि खलु अहमकिञ्चनोऽपि तव भर्तेति । त्वं धनवतः तनुजा स्याः; अथापि मम सुखदुःखविभागग्रहीतीह्यसि । जानासि खलु ममार्धाङ्गी त्वमिति । अद्यप्रभृति इदमेव पर्णकुटीरकं अवितथं तव गृहम् । सर्वाङ्गसुन्दरं वैजयन्तोपममपि त्वदीयजनकमन्दिरमिदानीं विस्मरणीयमप्रश्यम् । पत्युः सुखदुःखभारस्वीकरणमेव खलु पतीनां धर्मः । मम दरिद्रस्य मन्दिरे तूष्णीमेव आसितुं न लभ्यते ते समयः । संधार्य रमणीयमुपानदादिकं (बूट्स्टॉकिंग्) सुन्दरसुन्द-

रैर्वसनैर्विभूष्य कलेवरम्, सुगन्धद्रव्यैर्वासांसि परिष्कृत्य, निरुद्योगी भूय मनो विनोदयितुं न लभ्येतावसरः । विस्मरतु भवती भवदीय तातस्य सर्वं वैभवम् । उद्यमः कर्तव्यः, तल्लब्धेनाशनजनितदेहयात्रा कर्तव्या । इदं मम तत्त्वम् । त्वयापीत्थमेवाचरणीयम् । परिश्रामय वपुः, जक्षिहि भिस्साम् । निरलसतां समुह्य ग्रहकर्माणि निर्वर्तनीयानि । अयमेव साध्वीनां गृहिणीनां धर्मः । भ्रूविक्षेपादिचेष्टितेषु आलस्ये सुखोपभोगे च सर्वं कालं नयन्ति वराङ्गनाः; न तु कुलस्त्रियः ।'

अहो ! कीदृशमुपदेशस्य सौन्दर्यं, कीदृशी कमनीया नीतिः । अपि नाम कण्ठे चिकीर्षेयुः सहृदयायाः प्रियसहोदर्यः ?

केशवशर्मा । (गलगली)

---*---

॥ श्रीः ॥

## ॥ श्रीमती सती कमला ॥

(पूर्वतोऽनुवृत्तम्)

---

शीलस्य कृते यदि गच्छेज्जीवितं का वा हानिः, न खलु धर्माद्गुरुतरं जीवितम्, कुलयुवतीनां पातिव्रत्यपरिपालनमेव परो धर्मः, यावदस्मिन् देहे प्राणाः, तावत्परिपालनीयो निजो धर्मः, न श्रुतं वा भवत्या चित्र (चितोर) गडीयप्रमदानां पवित्रतमं चरित्रम् । किमाचरितं ताभिः स्वधर्मपरिपालने ! ता एव कश्चिद्रजपूतकुलसंभवाः प्रमदाः ? न वा भवती ? मातः परं रुदिहि, पश्य अमङ्गलं खलु रोदनम् । सखि, न मे रोचते ।

कमला— (तदात्व एव बाष्पाणि प्रमार्ज्य, सस्मितं) सखि, सर्वथा त्वमसि सेनापतिपदेऽभिषेक्तुं योग्या । वीरजनसुलभान्येतानि ते भाषितानि । एवं विधैर्भाषितैरेव द्विगुणितोत्साहा सैनिका वीरावेशपूर्णहृदया जीवितं तृणीकृत्यापि साधयेयुः स्वामिकार्यम् । नास्त्यत्र संशीतिलेशोऽपि । भवतु सखि, यदि समापतिष्यति प्रतिभयतमो यवनहठत्कारसमयो भवत्याम्, किं वा करिष्यति मे सखी ।

गिरिजा-- रजपूतकुलनन्दिनि ! किं वा करिष्येत्येषा सखीति पृच्छसि ? शृणु, कथयामि, न मे शीलाद्गुरुतरं जीवितम्, जीवितमपि परित्यजेय, परमार्थशीलं न परित्यजामि । न मे पापेभ्यो यवनेभ्यो भीतिर्मनागपि । यद्यागच्छेयुः पाप मां संश्रयितुम्, कथमपि कृत्वा तान् तदात्व एव प्रापयिष्याम्यन्तकान्तिकम् । ततः परित्यजामि जीवितम् । ततः किमपि वास्य देहस्य भवतु । एष एव सखि, मे निश्चयः । प्रमाणं पुनरत्र भगवानेकलिङ्गप्रभुरेव ।

कमला— हला गिरिजे ! ममापि पुनर्निश्चय एष एव ।

गिरिजा— तर्हि कुतो न्वेवमौदास्यमावहसि ? नाहं पश्याम्यत्र मनागपि निदानम् । मा वादीरेव भद्रां वाणीं जातु, समयो वा कस्तादृशः सम्प्रति समागतः ? इतः परं यदि वदसि वचोऽभद्रम, न ते सखि, मुखमपि द्रक्ष्यामि, पश्य, सर्वदाशुभं ब्रूयादिति हि राद्धान्तः सार्वत्रिकः, तूर्णमागच्छेन्महाराजप्रेषितपत्रस्योत्तरम्, पाणिग्रहणमङ्गलमपि भवत्याः सत्वरमेव निरातङ्कं निर्वृत्तं भवेत् ।

पाठकवराः! पुनश्च विच्छायं संवृत्तं राजदारिकाया वदन-सरोजम्, निःसृता नयनाभ्यां मन्दमन्दं बाष्पावलिः, किं बहुना, तदीयमखिलमपि गात्रं तदा बाढमाक्रान्तमिवाबभास।

गिरिजा— (विलोक्य स्तोकं कुपितेव) किं पुनरौदास्यं भजसि, नन्विदानीमेवोक्तम् 'पाणिग्रहणमङ्गलं भवत्याः सत्वरमेव निरातङ्कं निर्वृत्तं भवेत्' इति। अपि न श्रुतमिदं भवत्या? भवतु, यथा रोचते तथा करोतु भवती, नाहमधिकं कथयामि, एषा गच्छामि, दर्शनमपि भवत्या मा......

कमला— (दीर्घमुष्णं च निश्वस्य सकरुणम्) किमेवमयि करिष्यसि, सोदरि! न कांचिद्भवती बहिश्चरं हृदयम्! न खलु निदानमस्यां ममोदासीनतायां केवलं विवाह एव, न मे केवलं विवाहेनैव साफल्यं विन्देत जीवितमिदम्।

गिरिजा—— किं तर्हि भवत्या जीवितस्य साफल्यम्! किं ते मनसि वर्तते! कुतो न्वेवं वृथा सन्तापभाजनं भवसि। दुरात्मनः सर्वानप्येतान्यवनान् भस्मसाद्विधाय तदीयं राज्यं वा स्वायत्तीकर्तुमभिलषसि।

कमला—— न खलु सखि सुकरमेतत्, बहून्यत्रानुभूतानि सुगृहीतनामधेयेन प्रतापसिंहमहाराजेन व्यसनानि। अथापि नाम नास्य मनोरथः फलितः।

गिरिजा— किं तर्हि भवती सिषाधयिषति।

कमला—— स्वार्थम्।

गिरिजा—— हन्त को वा तादृशः स्वार्थः, भवद्विधानां राजदारिकाणामनुरूपवल्लभवरणमेव गुरुतरः स्वार्थः।

**कमला**— एवं सखि, परम्—

**गिरिजा**— परं किं राजदारिके, निरातङ्कं निःशङ्कञ्च ब्रूहि। मैवं साशङ्कं वद। नाहन्ते विश्वासभाजनं सखी। स्फुटं वद किं भवत्या हृदये वर्तते, रहस्यं वा तादृशं किं, यन्ममापि पुरतो न वक्तव्यम्।

**कमला**— आत्मजनसम्मतिमन्तरा कृतं कर्म सर्वथानुतापाय भवतीति यत्प्रचक्षते, तदवितथं खलु। पश्य कथमहं सम्प्रत्यनुभवामि व्यसनानि।

**गिरिजा**— यदि प्रसन्नेन मनसा सर्वं विशदं वदसि, समागतेष्वपि परःशतेषु व्यसनेषु साधयामि भवत्याहितं प्राणानपि सोदरि, व्ययीकृत्य।

**कमला**— यदि भवद्विधा चतुरा सखी कार्याणि साधयितुं प्रयतेत, निश्चितं भवन्ति साधितान्यसाध्यान्यपि। कथयामि सखि, मदीयं रहस्यम्।

**गिरिजा**— कथय कथय, अवश्यं साधयामि। कुतो न्वियती ते शङ्का? अपकृतं वा किमपि मया पूर्वम्? किं वाहं कथयामि, यथा रोचते भवत्याः।

**कमला**— मैवं वादीः, मनसाऽपि नाहं मनागपि भवतीमविस्रम्भभाजनं भावये। यदि वाचा वदामि 'भवती परमविस्रम्भस्य भाजनम्' इति, नूनमेषा तदा मे रसना छिन्ना भवेत्। न खल्वागताया इह ते पूर्णतया पञ्चापि समा व्यतीताः, अथापि भवतीमाजान्मसखीमवगच्छामि। आवयोर्देह एव भेदः। न पुनर्हृदये।

गिरिजा-- एवम् परं स्फुटं न वदसि।

कमला-- बहुतिथात्कालादेकं रहस्यं त्वत्तोऽपि सखि! सुगुप्तं रक्षितमिति त्रपते मे चेत:। महानेष कृतोऽपराधो मया।

गिरिजा-- एतावन्तं समयं सुगुप्तं रक्षितं रक्षतु, इदानीमपि ननु न स्फुटं वदसि। किमस्य कुर्याम्। अहो तवाव्याजं सौहार्दम्।

कमला-- श्रृणु, कथयामि, (कर्णे कथयति)

गिरिजा-- एतावदेव ननु, मयि जीवत्यां कुतो न्वस्येयती चिन्ता। अलं चिन्तया। पश्य सख्यास्ते चातुर्यम्। अवेहि फलितमद्य मनोरथम्। एहि गृहं गच्छाव:, महीयसी व्यतीता वेला। महाराजोऽन्वेषयेन्नौ।

वाचकवरा:! गते ते उभे अपि स्वालयम्। वयमपि मनागिव विश्रान्तिसुखमुपभोक्तुं गच्छाम:, आगच्छत।

प्रियपाठकमहाशया:! आसादितं वा मनागिव श्रीमद्भिर्विश्रान्तिसुखम्। आगच्छत, तत्र विजने विपिने पादपमूले कोऽपि पुरुष उपविष्ट:। एवं कुतो वात्रैकाकी तूष्णीमुपविष्ट:। विद्यते वास्य परिचयो भवताम्, नो चेत्तत्र गत्वा परिचयमस्य कारयाम:। हन्त हन्त काप्येषा तरुणी कुतोऽपि द्रुतपदं गच्छति। कैषा? पाठका:! एषा राजकुमार्या: कमलाया: सखी गिरिजा वा! सैव सैव। कुत्र वा गच्छति परम्! किम् पादपतलोपविष्टस्य पुरुषस्य सविधे। हन्त गतैव, अहो प्राक्रमत च वक्तुम्।

गिरिजा-- महाभाग शिवसिंह! समयोऽस्त्येति, दीयतां भवत: संग्रामोचितो वेष: तुरङ्गमश्च जङ्घाल:।

शिवसिंह:-- कुतो नु सुन्दरि! अपि जिगमिषति वा दिल्लीश्वरं जेतुम्! अन्यं वा कमपि वीरं।

गिरिजा-- नायं समयश्चेष्टायाः। तूर्णं देहि सज्जं वाजिनम्।

शिवसिंह:-- निदानं पुनरादौ कथय। नाहमन्यथा दास्ये।

गिरिजा-- (सामर्ष) किं वा कथयामि भवतः। अनभिज्ञः सर्वथा समयस्य भवान्। महाभाग! वर्तते किमपि राजकुमारिकाया गुप्तं कर्म, तत्र नियुक्तास्मि तया, तत्साधयितुमिदानीमेव प्रच्छन्नवेषेण गन्तव्यं मया। अतोऽहं भवन्तमेवं...

शिवसिंह:-- किं भर्तृदारिका कर्म। हन्त तर्हि तदतिमात्रं गुप्ततरं भवेत्। यन्नियोजयति सा हृदयान्तरायमाणां भवतीमेव तत्र।

गिरिजा-- एवम् खलु महाभाग। अत एवानुसृत एष पन्थाः।

शिवसिंह:-- गच्छ सुन्दरि! अवहिता साधय कर्म। अन्यथा--

गिरिजा-- अन्यथा किम्?

शिवसिंह:-- भर्तृदारिका यं वा दुर्गमतरं दुर्गं वशीकर्तुं प्रेषयति भवतीं चतुरां सखीमात्मनः कृते, भवती पुनस्तत्र तं तत्रैव जित्वा...

गिरिजा-- (मनागिव स्मितं कृत्वा) महाभाग! अलं चेष्टया। सर्वदा एवं विधा एव चेष्टाः।

शिवसिंह:-- सुन्दरि, किं कथयामि। को वा दुर्गाधिपो न भवेदनेन भवत्या भ्रूयुगात्मना परिणते भवतोऽनङ्गस्य जैत्रधनुषा विजितः। प्रेयसि, भगवान् मन्मथो भवत्या हृदि वसन्

अक्षयाभ्यां त्वन्नयननिषङ्गाभ्यामादायादाय भ्रूयुगशरासनेन सावेगं प्रेरितैर्निशिततरकटाक्षविशिखैः प्रहृत्य प्रहृत्य तरुणजनसार्थं जर्जरीकरोति। हां मा तान् कटाक्षान् निक्षिप, नितान्तं खलु विदीर्णं मे हृदयम्।

अत्रान्तरे सनीडवर्तिन एव लतागुल्मात्मकोऽपि शब्दोऽश्रूयत। तेन तावुभावपि कातरावभूताम्। सायन्तने समये विजने कानने भाषमाणावावां कोऽपि निरीक्षेत यदि, तदोभावप्युपहासाय भवेवेति चिन्ताकुलौ च संवृत्तौ। विदितमासीत्समेषामपि गिरिजाशिवसिंहयोः प्ररूढं परस्परं प्रणयमिति। निश्चितश्च दयालुसिंहमहाराजेन वत्सायाः कमलायाः विवाहमङ्गले गिरिजाशिवसिंहयोर्विवाहमङ्गलमपि। एष शिवसिंहो महाराजस्य दयालुसिंहप्रभोः परमं विस्रम्भभाजनं परिचारक आसीत्। अथापि संशयाकुलं संवृत्तमनयोर्हृदयम्। स्वमुखेनोदीरितानि शृङ्गारचेष्टाप्रचुराणि भाषितानि केनापि श्रुतमिति शिवसिंहस्य चेतो बाढं विव्यथे। गिरिजापि स्वरहस्यं कस्यापि श्रवणपथं गतमिति नितान्तं खिद्यति स्म। ततः कञ्चित्कालं तावुभावप्यालेख्यगते इव तूष्णीं स्थितौ।

शिवसिंहः—— वायुना कम्पितास्तरव इति प्रतिभाति। (निर्वर्ण्य) हन्त एष मे प्रियतमकुक्कुरो मामन्वेषयन्नागतः।

गिरिजा—— हं कथय अपि ददासि वा, न वा, गच्छाम्यहम्।

शिवसिंहः—— अयि कुपिता वा भवती। मा मा। किमपेक्ष्यते भवत्या? सङ्गमोचितो मदीयो नेपथ्यः, जङ्गालुरश्वश्च वा? भवतु कदा वा गच्छति भवती। कथय, किमन्यदपेक्ष्यते मदीयं साहाय्यम्?

गिरिजा— नान्यत्किमप्यपेक्ष्यते, मुहूर्तादितो गमिष्ये तत्पूर्वमेव तुरङ्गमोऽपेक्ष्यते।

शिवसिंहः— प्रेयसि, दूरं गन्त्री पुरुषवेषेण। समयः पुनः सम्प्रति वाढं प्रति भयतमः। को वा जानाति, सुखेन भवति प्रति---

गिरिजा— हन्त किं वा कथनीयं भवते? गमिष्यन्त्या मे कृतं महाभाग, कृतमपशकुनम्, अस्तु समयः प्रतिभयतमः। किं तेन। न मे भीतिः कुतोऽपि।

शिवसिंहः-- नायं सुन्दरि मे प्रश्नो भयस्य। यदावयोर्हृदयं चिरात्प्ररूढं पवित्रतमं प्रणयम्, तदेवं मां मुखरयति। प्रेयसि यदि--

वचसानेन गिरिजा क्षणं प्रतिपत्तिशून्या संवृत्ता। वार्षिकेण समयेन शीतले स्थले स्थिताया अपि तस्या अखिलं गात्रं खिन्नमासीत्। नयनाभ्यां निस्सृतानि बाष्पजलानि, कण्ठः स्तम्भितः, न खल्वेकमप्यक्षरं निःसृतं तदीयवदनाम्बुजात्।

शिवसिंहः— मुग्धे, किमेवं ननु करिष्यसि।

गिरिजा— (सगद्गदम्) जीवित, यद्यहं सुखेन सख्याः कार्यं निर्वर्त्य प्रत्यागच्छेय, नूनं तदिदं मे गात्रं भवदीयमेव। अन्यथा--

शिवसिंहः-- भीरु, तिष्ठ, मैवमभद्रं वचो वदतु।

(क्रमशः)

॥ श्रीः ॥

# सालुवाभ्युदयम् ॥*

[ पूर्वतोऽनुवृत्तम् ]



सुरहिमधुनिषेकपङ्किलाः
सुरतटिनीकनकाब्जधूलिकाभिः ।
........ गिरिदुर्गहेमसालं
प्रतिदिवसं पवनो नवीकरोति ॥ ४८ ॥

नवमहिमसयन्नगेन्द्रदुर्गे
प्रतिभवनं प्रतिबिम्बिताङ्गलक्ष्मान् ।
बहुविधनिजरूपविभ्रमा ये
बियति भवन्नत एव चित्रकाराः ॥ ४९ ॥

दुरधिगमयदीयदुर्गशृङ्गे
सुरसुदृशां सुरताहवादुतीतम् ।
श्रममपनयती द्विपादपाली
प्रतिनवपल्लवतालवृन्तवातैः ॥ ५० ॥

असममिह गिरीन्द्रदुर्गमादौ
स्ववशयतो भवतः सुमेरुपूर्वाः ।

---

* अस्य काव्यस्य आदर्शान्तरं समीचीनं यस्य कस्यापि वशे विद्यते चेत्, स महाभागः श्रीवाणीविलासमुद्राशालाध्यक्षस्य सविधं प्रति तमिमं कोशं कृपया संप्रेष्य सहृदयानां कृतज्ञतापात्रं भूयादिति प्रार्थयामहे ॥

अपि कुलगिरयो भवेयुरात्म-
धवलकिरिलक्ष्यजयाङ्कसूत्रधाराः ॥ ५१ ॥

कपटनृपतिकालकूटसङ्ग-
प्रभवमपास्य चिरात्प्रमोहमन्त्रः ।
चतुरुदधिपटान्तवांसकूटे
विहृतिमुपैतु विशृङ्खलं धरित्री ॥ ५२ ॥

अखिलगुणनिवाससमाश्रिता त्व-
मपरमिवाच्युतमम्बुराशिकन्या ।
सकलनृपतिसङ्गदोषजातं
सपदि विमुच्यतु सापि चञ्चलत्वम् ॥ ५३ ॥

इति सचिवगिरा स राजसिंह-
स्तदचलदुर्गवरं निवेश्य सर्वम् ।
अचकमत दिगीश्वरांशजोऽसा-
वखिलदशां विजयाय दण्डयात्राम् ॥ ५४ ॥

तदनु हृदि विभाव्य तत्प्रतापं
चरमगिरेः शिखरं गतोऽपि भीत्या ।
अपरजलधिमाश्रयन्निव स्वा-
नरिसदसे किमसूचयद्विधेयम् ॥ ५५ ॥

सपदि कमलिनीं विहाय तस्मि-
न्नपि निधृतांशुकपल्लवामदृश्ये ।
किमु रजनिमुखेन आविराजो-
चितमिति मुद्रितमब्जकोशगेहम् ॥ ५६ ॥

अतिकरुणखगारवन्तदानी-
 महरनुचिन्त्य निजेशमप्रयातम् ।
अगमशिखरलग्नमंशुमालं
 दृढमवलम्ब्य जवात्तमन्वयासीत् ॥ ५७ ॥

अपरजलधिमग्नमर्कबिम्बं
 निजदयितां च निरीक्ष्य निश्चलेन ।
मुखगलितबिसेन मोहभाजा
 करुणमराणि रथाङ्गकामुकेन ॥ ५८ ॥

अधिजलधि मुक्तमानलास्त्रं
 रविमवमृश्य रमेश्वरांशजेन ।
बहुलभयविमुक्तमात्स्यधर्मं
 कुलमभवज्जलचारिणां कुतश्चित् ॥ ५९ ॥

सकलमपि च दुष्टसत्त्वजातं
 वनचरमप्यवमृत्तधैर्यबन्धम् ।
भयभरविवशैः समं पतद्भिः
 शरणितशैलतटान्तरं तदासीत् ॥ ६० ॥

प्रसृमरतरसांध्यकान्तिलक्ष्या-
 त्प्रकटरुचेर्नृपतिप्रतापवह्नेः ।
तिमिरमजनि धूमजालदेश्यं
 ततमुरुभिर्दिवि तारकस्फुलिङ्गैः ॥ ६१ ॥

अविरलमभिपूरयन्निहाशा-
 मखिलजनस्य दृशाप्यलक्षणीयम् ।

भजनि नृपचमूवदन्धकारो
विषयजुषां स्खलयन्पदं विशेषात् ॥ ६२ ॥

तिमिरमखिलदिग्जयोत्सुकैस्त-
त्तुरगचमूखुरधूलिपालिकेव ।
सकलमपि तिरोऽकरोत्तदानीं
त्रिभुवनवस्तु न यत्किलैकभागः ॥ ६३ ॥

अवनिभरमसौ हरिष्यतीति
प्रमदभरादिव सेवितुं प्रजेशम् ।
उडुपम.... निकायमुद्गिरन्त-
स्तिमिरनिभादभवन्दिशागजेन्द्राः ॥ ६४ ॥

विभुरथ स विसृज्य मन्त्रिवर्गं
विरचितसांध्यविधिर्विशेषवेदी ।
सह कवितिलकैः सभावमकार्षी-
त्सरस....... भोगरागी ॥ ६५ ॥

तदनु कृतबुधोदयप्रशस्तिः
सकल....गुत्पलहर्षसंविधाता ।
अगमदुद्यमाश्रयः कलाना-
मखिलहितो मृदुना करेण राजा ॥ ६६ ॥

घनतिमिरहिरण्यमन्तरन्तः....... दारयन्करालम् ।
तदसृगुपमसांध्यकान्तिरिन्दुर्नवमकरोन्नरसिंहविभ्रमः किम् ॥

उदयगिरितटात्समुद्यतेऽस्मिन्नुडुपथभाजि विधावुदग्रधाम्नि ।
अभजत हतशेष........कन्दरमन्दिरं किमन्यत् ॥ ६८ ॥

शमिततमसि तत्र जातसीमाः
सकलदिशोऽपि समन्ततः प्रसन्नाः ।
अखिलमधिगतप्रहर्षमासी-
त्कुवलयमप्यधिकं सतां कुलं च ॥ ६९ ॥

अखिलभुवननेत्रशुक्तिलेह्यै-
.... ...... स्मृतांशुनाभिमृष्टैः ।
तपनकरजतापविक्लबानां
सदृशमभूदवनं चराचराणाम् ॥ ७० ॥

निखिलमपि जगन्नयन्निजाज्ञा-
मसममनस्विजनस्य मानहारी ।
अधिगत........रेभू
दविकलमण्डलवर्तिनोऽस्य कामः ॥ ७१ ॥

आनन्दामृततुन्दिलः कुलगुरोरालोकहर्षादिव
श्वः प्रातर्हरितां जयोद्यम इति स्वोद्योगमुद्घोषयन् ।
सर्वान्पार्श्वचरान्विसृज्य च कवीन्संनाहिना चेतसा
निर्निद्रो नृपतिर्जयं च हरितां वाञ्छन्ननैषीन्निशाम् ॥

इति गुण्डयराजसागरेन्दोः नरसिंहचारित्रनाटिकायाम् ।
जयडिण्डिमराजनाथकाव्ये ललितः सर्ग इहागलात्तृतीयः ॥

इति धरणीवराहविरुदमण्डनगुण्डयनरसिंहराजमहाराजचरिते
चेरचोलपाण्ड्यप्रथमाराध्यडिण्डिमकविसार्वभौमराजनाथकृतौ
साळुवाभ्युदयनाम्नि महाकाव्ये तृतीयः सर्गः समाप्तः ॥



## ॥ उपमानिरूपणम् ॥

[ पूर्वतोऽनुवृत्तम् । ]

——*——

दृश्यमात्राधानमुपमा । 'उपमायाः किञ्चिदिवातिरिक्ता उत्प्रेक्षा अवर्ण्यस्य प्रकृतस्थलानयनहेतुमपि भंग्यन्तरेण प्रतिपाद्य तदवर्ण्यस्य तादात्म्यसंभावनामपि वर्ण्यस्य ददाति' इति । तथाहि 'धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणां' इत्यत्र धूमस्तोमस्य तमसश्च परस्परं सादृश्यमस्ति । तदा उपमा स्यात् । परन्तु धूमस्तोमरूपमवर्ण्यमत्र 'कोकीविरहशुष्मणाम्' इति हेतुर्भंग्यन्तरेणानीय तमसो धूमस्तोमतादात्म्यशंकामावहन् असिद्धत्वं परिकल्पयति । कथंकथञ्चिदनन्तभट्टेन भंग्या प्रस्तूयमानाप्युत्प्रेक्षा कल्पितत्वादविश्वसनीया वर्तते । विमृश्यमाने वस्तुतत्वे उत्प्रेक्षायाः समधिकं सौकुमार्यमुपमाया बोभवीति निस्तरामित्यत्र नास्ति लेशतः शङ्काकलङ्कावकाशः । 'स्वतस्सिद्धेन भिन्नेन' इत्यादिलक्षणविशिष्टामुपमां सर्वातिरिक्तां, यः प्रयुङ्क्ते स एव प्रत्यासन्नात्मानन्दसन्दोहः परानलङ्कारान् निर्भयमवमन्यते । भाषासाहित्यमनितरसाधारणेन वेषेण भूषयितुमुपबृंहयितुं सपदि मनः क्षोभयितुं परहृदयनिहितं भावाकूतं सुनिपुणमवगमयितुं च शक्नुवतीं ललितकलाविलासवलयमांसलाम्प्रकृतिपेशलां प्रमेयगमनिकोज्ज्वलां सहृदयगलरत्नमालां बालार्कभिन्नजलजदळसाम्यकोमलां बालामुपमां को वा नाभिनन्दति ? लोकेषु विषमेष्वपि समेषु ।

"स्वतस्सिद्धेन भिन्नेन संमतेन च धर्मतः साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा' इत्युपमाधिकृत्य सुस्पष्टमाशयमाकलितवान् विद्यानाथस्सिद्ध एव आलंकारिकेषु ।

अयं हि, 'स्वतस्सिद्धेन' इत्यनेन कविकल्पनादुष्टामसिद्धामुत्प्रेक्षां व्यावर्तते। 'भिन्नेन' इत्यनेन द्वितीयसदृशवस्त्वभावादेकस्यैव उपमानोपमेयत्वदानेन परस्परमुत्पीडयन्तमनन्वयं गळहस्तिकया बहिष्करोति। 'सम्मतेन' इत्यनेन लिङ्गवचनभेदादिभिरसमञ्जसामसंभावितां चोपमां भाययति। 'धर्मतः' इत्यनेन 'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव' इत्यादौ गुणक्रियारूपधर्मसाम्यं विहाय शब्दसाम्यमात्रपरेण इवशब्देन निरूढं श्लेषं साभ्यसूयमिव सोपानपथादवतारयति। 'अन्येन वर्ण्यस्य' इत्यनेन प्रकृतेन वर्ण्येन सह अप्रकृतस्य अवर्ण्यस्य सादृश्यमनूदितवतः प्रतीपस्य श्मश्रुनिकरं समग्रमुन्मूलयति। 'वाच्यम्' इत्यनेन व्यङ्ग्योपमां इंगालजलेन अभिषिच्य धावयति। विद्यानाथस्येदं मतं विचारचारुतां प्रपद्यते, तथापि अभिप्रेतेषु विषयेष्वेषु 'सम्मत' पदेन लिंगवचनभेदादिभिरुपमा दुष्यतीति कथा न विचाररमणीया। अस्मिन् प्रसंगे ह्याचार्याणां महाकवीनां च वर्तते महती रणरणिका। 'लिंगसंख्याविभेदेऽपि ह्युपमानोपमेययोः' विभक्तिः पुनरेकैव चोपमानोपमेययोः इत्ययं विशेषः कस्मादप्याचार्यान्निर्गम्य 'अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरं' 'शास्त्राणि दृशं द्व्यधिकां' इत्यादिभिरनेकैः प्रयोगैः श्रीहर्षस्य समजनयत् समाश्वासं हृदयस्य।

उपमानोपमेययोः दृश्यत्वश्रव्यत्वादिदोषपरीतत्वादुपमां दुष्टामाहुरन्ये। तदप्ययुक्तम्।

'प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी,' 'तां हंसमालाः शरदीव गङ्गाम्'

इत्यादिभिः प्रयोगैः कालिदासेन पार्वत्या उपमानभूतानां

'शिखा' 'त्रिमार्गा' 'गी:' इत्येतेषां दृश्यत्वश्रव्यत्वरूपेण परिकल्पितत्वात् । सर्वथा अनभिभवनीयोऽयं महाकवीनां पन्था: ।

यदायमुपमानांशो लोकतः सिद्धिमृच्छति
तदोपमैव येनेव शब्दः साधर्म्यसूचकः ।
यदा पुनरयं लोकादसिद्धः कविकल्पितः
तदोत्प्रेक्षैव येनेव शब्दः संभावनापरः ॥'

इत्युपमोत्प्रेक्षयोरिवशब्देन साधर्म्यसंभावनापरत्वम्, उपमानांशयोः सिद्धत्वमसिद्धत्वं च प्रतिपादयन्तं चक्रवर्तिनमभिमुखीभूय, 'उपमायाः स्वतस्सिद्धत्वेन कथमुत्प्रेक्षाव्यावृत्ति:' इत्यापृच्छ्य 'न नित्यमस्मिन् परिपूर्णतेति त्यक्त्वा नभः क्षोणितलावतीर्णः, आनन्दयन्निन्दुरिव स्वधाम्ना विभाति लोके नवकाकतीन्द्रः' इत्यनेन उत्प्रेक्षाया उपमानस्य स्वतस्सिद्धत्वं सिद्धान्तयित्वा 'इन्दोः क्षोणितलावतीर्णत्वाकारेण कविकल्पितत्वादसिद्धत्वं' इति पुनरप्युत्तितीर्षुं असिद्धत्वपक्षपातिनं चक्रवर्तिनं चन्द्रबिम्बादिव विषं चन्दनादिव चानलः परुषा वागितो वक्त्रादित्यसंभावितोपमा' इत्यनेन असंभावितोपमायामपि विषानलयोः स्वतःसिद्धत्वेऽपि चन्द्रचन्दनप्रभवत्वेन कविकल्पितत्वमूलकासिद्धत्वं कथमापतेत् ? इति तिलशः खण्डयत्यप्पयदीक्षितः ।

परस्परमेवं कलहायमानानां आचार्याणां मध्ये कथं प्राणिमो वयं । कथं काव्यकुलमाकलयिष्यामः । कथं भाषासाहित्यकलामुपबृंहयेम । ततः आपादमधुरामधरीकृतामृतरसां तरसा सरसामुपमां निर्बाधां भजन्तु सुधियः कवयः । इति सप्रश्रयं अभ्यर्थयमानः

एन्. के. केरळपण्डितः ।

अथोदिते सवितरि कर्म धर्मभू-
रहर्मुखोचितमखिलं समाप्य सः ।
द्विजाकृतिः सममनुजैः समासद-
त्स्वयंवरं क्षितिपतिजालसंकुलम् ॥ १३ ॥

अनन्तरं जनकर्णपथातिथीभवन्मङ्गलतूर्यनिस्वनं समन्ततः प्रसृमरकालागुरुधूपबहलपरिमललोभपरिभ्रमद्भ्रमरझंकारमुखरितहरिन्मुखं चञ्चलपताकाञ्चलप्रभवपवनापनीताध्वश्रमखेचरं सुरपतिचापसरूपतोरणधोरणीकं नीलांशुकवितानलम्बमानमुक्ताफलस्तबकं शातकुम्भमयस्तम्भगुम्भोपशोभितमासाद्य स्वयंवरमण्डपम्, तदन्तरे मणिसिंहासनासीनान्पार्श्वद्वयोद्धूतचामरमरुत्किशोरप्रचलदुत्तरीयान् 'पुरा पुरान्तकादेकाकितया परिभूतिरभूत्' इति मनोभुवा कलितानिव कायव्यूहान्पीताम्बरकरम्बितश्रीकरानितम्बाबिम्बान्मणिमयमकुटकटकहारकेयूरकुण्डलाङ्गुलीयकहंसकप्रमुखालंकारधारिणो नरपतीन्पश्यन्तः, 'अकृत्रिमैरेतैरौदार्यधैर्यशौर्यादिभिः साकं करहृदयभुजादिषु कृत्रिमा वयं कथं निवत्स्यामः' इति स्वयमेवाङ्गसङ्गं परिहरद्भिरिव गुणगणनिबिडिते वपुषि क्वचिदप्यवकाशमलभमानैरिव 'समन्ततः कलितैरेतैर्वयं स्थगिता भवितास्मः' इति शरीरशोभाभिः प्रतिषिद्धैरिव भूषणगणैर्विरहितसमस्तगात्राः पाण्डुपुत्राः कचिद्विष्टरेषु निविष्टाः 'पाञ्चालराजः कन्याप्रदानमहोत्सवे गोभूमिहेमवसनमिष्टान्नानि प्रदास्यति' इति दिगन्तरेभ्यः समागतैर्ब्रह्मवर्चसभासुरैर्भूसुरैः 'क एते महानुभावाः पुरुषोत्तमाः' इति निज-

दर्शनसंजातसंभ्रमैः 'इत इतः' इति सादरं निर्दिष्टानि भेजिरे कुशविष्टराणि ॥

तत्राजगाम द्रुपदस्य कन्या
तारुण्यलावण्यविशेषधन्या ।
आस्थाय हैमीं शिबिकां सखीनां
सरूपवेषैर्निवहैः परीता ॥ १४ ॥

कस्तूरिकाकर्दमिते तदीये
गात्रे पतित्वा क्षितिपक्षिभृङ्गाः ।
तल्लग्नपक्षा इव गाढमास-
न्न स्पन्दितुं नोच्चलितुं प्रगल्भाः ॥ १५ ॥

यत्रार्पिता द्रुपदजावयवेषु यस्य
दृष्टिर्नरेन्द्रशतलोचनसंकुलेषु ।
अन्यत्र सा निरवकाशतयेव गन्तुं
तत्रैव निर्भरतरां स्थितिमाससाद ॥ १६ ॥

पूर्वस्मिञ्जनने निजाक्षिगलितैर्बाष्पाम्भसां निर्झरै-
र्हैमाब्जान्यसृजत्सुपर्वतटिनीस्रोतःसु नालायनी ।
पाञ्चालेन्द्रसुतात्मना क्षितितले सैवावतीर्णा पुन-
र्नीलाब्जान्यसृजद्दिशासु तरसा श्यामैः कटाक्षोत्करैः ॥

या खलु सुभटमण्डलीव महितकुन्तलाभा, वसन्तलक्ष्मी-रिव स्फुटतिलकालिकानना, ग्रीष्मश्रीरिव पाटलाधरा, नटीव मञ्जुलास्या, वृक्षवाटिकेव कर्णिकाराचितरुचिः, वनभूमिरिव पृथुलकुचा, प्रावृडिव घनजघनशोभा, शूरसंहतिरिव

निजोरुकाण्डनिरस्तहस्तिहस्ता, शरदिव हंसकविलसत्पद पङ्कजा, पुरारामसीमेव श्यामलतावासभूः, शस्त्रीव शैत्यलसद्धारा, राजसभेव स्फुरद्धीरभूषिता, शतमुखसेनेव स्वरूपचितकीर्त्तिः, विमतावलिरिव लसद्वे(द्वे)षा, प्रदोषवेलेवोत्तम(:)श्रीः, त्रिविष्टपश्रीरिव निजप्रभावधूतकुवलया, हेमन्तस्फूर्तिरिव व्यापकप्रथमहिमान्विता, शिशिरोत्पत्तिरिवानलसमुदितानुरागधन्यहृदया, कृष्णपक्षरजनीव बहुशोभान्विता, विभाषेव भाषायाः, अनुवाद इव दामोदरदाराणाम्, पुनरुक्तिरिव कात्यायन्याः, वर्णिकेव स्वर्णाथवरवर्णिन्याः, आदेश इव शम्बररिपुकुटुम्बिन्याः, वीप्सेवाप्सरसाम्, अन्याकृतिरिव मोहिन्याः कन्या पाञ्चालभूपतेरशोभत ॥

कलिन्दजावारिझरीं सभङ्गां
पुष्पंधयालीं पुनरात्तगन्धाम् ।
दत्तार्धचन्द्रं च मयूरबर्हं
व्यधत्त नूनं कबरी यदीया ॥ १८ ॥

पाञ्चालभूपालसुताकचश्री-
चौर्येऽभिलाषं दधतोऽनुवेलम् ।
अहो कलापाः शितिकण्ठयूना-
मासन्विपक्षा जगतोऽखिलस्य ॥ १९ ॥

यदीयफालश्रियमाप्तुमानन-
श्रियाभिभूतोऽपि सुरापगातटे ।

शुचिः कृशः शंभुजटाटवीगतः
सुधांशुराभाति तपश्चरन्निव ॥ २० ॥

फालस्थली पार्षदकन्यकाया
विनिर्मितार्धेन विधोर्विधात्रा ।
चिह्नैकदेशोऽपि निषेवते तां
कुरङ्गनाभीतिलकच्छलेन ॥ २१ ॥

पाञ्चालपृथ्वीपतिनन्दनाभ्रू-
र्धनुर्लताशोभत सा स्मरस्य ।
ज्यारोपणं बाणविमोक्षणं च
विना जयं या जगतां विधत्ते ॥ २२ ॥

आसीद्धृतेः पाणिगतेन केली-
शुकेन तद्भक्षितमिक्षुचापम् ।
तया धृतं पुष्पधनुश्च केशे
यद्भ्रूः स्थिरं चापमभूत्स्मरस्य ॥ २३ ॥

दस्रौ तावादधातामनिमिषभिषजौ यक्ष्मणस्ते चिकित्सां
शाणोल्लेखेन बिम्बाद्व्यपनयतु स ते विश्वकर्मा कलङ्कम् ।
ब्रह्मा निर्मातु नासामधरमलिकमक्षिभ्रुवं ते श्रुती द्वे
पश्चान्मैत्री भवित्री शशधर भवतो यन्मुखाब्जेन साकम् ॥

न मञ्जुवाणी न कटाक्षवीक्षा
न भ्रूविलासो न च मन्दहासः ।
अब्जे ततस्तस्य यदाननेन
स्पर्धां विधातुं पटुता कुतः स्यात् ॥ २५ ॥

मुखसुधासरसः सुदतीमणे-
नयनयोर्युगलं युगमब्जयोः ।
उत विकस्वरमुत्पलयोर्द्वयं
शफरयोरथ वा मिथुनं ध्रुवम् ॥ २६ ॥

यदक्षिणी मग्नतनोरगाधे
मुखाभिधेन्दोः सुषमासुधौघे ।
प्रयासभूम्नोन्नमिताननस्य
न्यङ्कोः कलङ्कस्य दृशाववैमि ॥ २७ ॥

पाञ्चालकन्यामणिनासिकाभा-
स्तेये प्रसक्तं नवचम्पकं यत् ।
तत्तस्य सङ्गं परिहृत्य पुण्ये
सदालयोऽद्यापि वसन्त्यरण्ये ॥ २८ ॥

कर्णद्वयं पार्षदकन्यकाया
रेजे निजाभ्यर्णभुवं गतस्य ।
स्निग्धस्य ताटङ्कयुगस्य हर्षा-
द्गाढं परीरम्भमिवादधानम् ॥ २९ ॥

कपोलयुग्मं विमलं विरेजे
कर्णद्वयेनायतलोचनायाः ।
संद्रष्टुमात्मानमनल्पभूष-
माराद्धुपात्ता मुकुरद्वयीव ॥ ३० ॥

सुतनोर्मुखेन शुभमब्जयुगं
तरसाभिभूतमिति सेर्ष्य इव ।

निजया रुचा रुचिरया नितरा-
मजयत्प्रवालयुगलीमधरः ।। ३१ ।।

अम्बुराशिरशनाधराधिभू-
कन्यकाधरसमानतां वहन् ।
आबभौ यदधरो रसोत्तरः
कान्तपञ्चमुखचुम्बनोचितः ।। ३२ ।।

स्मितशुभ्रपटा रदावली-
नवहारामलवर्णशालिनी ।
मृदुताविलसत्पदा च य-
द्वदनाब्जे वसति स्म शारदा ।। ३३ ।।

अन्यवधूचिबुकानां यच्चिबुकमजायतैकमुपमानम् ।
उपमानं तस्य पुनर्वस्तु न किंचिद्बभूव भुवनेऽस्मिन् ।।

कम्बुं विनिर्जित्य यदीयकण्ठो
बलादुपात्तैरिव तस्य गर्भात् ।
मुक्ताफलैराकलितान्दधानो
हारान्बभासे हिमबिन्दुगौरान् ।। ३५ ।।

शिरीषपुष्पेण तनुं समस्तां
व्यधत्त मृद्वीं नियतं विधाता ।
केन प्रसूनेन ततोऽपि मृद्वीं
विनिर्ममे यद्भुजयोर्द्वयीं सः ।। ३६ ।।

छिन्नाणि धत्तां समतां दिनानि
यत्पाणिनाताम्ररुचिः प्रवालः ।

वर्णं वहन्नन्यमथो कथं स्या-
त्समोऽमुना संततपाटलेन ॥ ३७ ॥

समुदितां त्रिकुचद्वयमद्वह-
त्प्रथमवर्णविमोचनतः श्रियम् ।
समजनिष्ट कुचद्वयमङ्गना-
जनमणेर्हरिचन्दनचर्चितम् ॥ ३८ ॥

जनाक्षिभृङ्गावलिपुष्पगुच्छौ
शरीरशोभासरसीरथाङ्गौ ।
अवैमि शृङ्गाररसस्य कुम्भौ
कुचौ महीपालकुमारिकायाः ॥ ३९ ॥

अधः स्थितो मेऽवयवोऽपि कश्चि-
दश्वत्थपत्रश्रियमग्रहीष्ट ।
इतीर्ष्ययेवोदरमुत्पलाक्ष्या
न्यग्रोधपत्रस्य जहार लक्ष्मीम् ॥ ४० ॥

वर्ण्यो वचोभिः स कथं कवीनां
मध्यः कुमार्या द्रुपदस्य राज्ञः ।
स्वस्पर्शनात्पाण्डुसुतान्कृशोऽपि
करिष्यते यः खलु पूर्णकामान् ॥ ४१ ॥

अवैमि नाभिं कुसुमायुधाग्नि-
कुण्डं धरित्रीपतिकन्यकायाः ।
रोमावलीं श्यामलतां वहन्तीं
तदुद्भवां धूमलतामुदग्राम् ॥ ४२ ॥

द्रुपदात्मभुवः सुषुमायमुना-
पुलिनं तदवैमि घनं जघनम् ।
अपि तद्रशनामणिकिङ्किणिका-
रणितं वरसारसचारुरुतम् ॥ ४१ ॥

पाञ्चालभूमीवलशासनस्य
कुमारिकारत्नमयत्नलेशम् ।
निजोरुशोभाविजितां व्यधत्त
रम्भाद्वयीमञ्चितसौकुमार्याम् ॥ ४४ ॥

दुहितुर्धरणीबिडौजसो
महिताशोभत जङ्घयोर्द्वयी ।
युगलीव निषङ्गयोर्नवा
रतिजानेः किल सव्यसाचिनः ॥ ४५ ॥

लब्धुं श्रियं यच्चरणद्वयस्य
क्रमेण रागं निबिडं विहाय ।
अद्यापि वातातपजर्जराणि
वने प्रवालानि तपश्चरन्ति ॥ ४६ ॥

धृष्टद्युम्नस्तां सभां भूपतीना-
मासाद्यारात्तत्र निक्षिप्य चापम् ।
तूणीरं चायोमुखश्रेणिपूर्णं
गम्भीरं तानेवमाचष्ट वाचम् ॥ ४७ ॥

भूपा भवत्सु य इदं धनुराततज्य-
मादाय लक्ष्यमिषुणा चलमन्तरिक्षे ।

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ९. ] नलवर्ष फाल्गुनमासः । [ संचि. १२.

## सुभाषितानि ॥



अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥ १ ॥

विध्वस्तपरगुणानां भवति खलानामतीव मलिनत्वम् ।
अन्तरितशशिरुचामपि सलिलमुचां मलिनिमाभ्यधिकः ॥

प्रायः प्रकाशतां याति मलिनः साधुबाधया ।
आग्रसिष्यत चेदर्कं कोऽज्ञास्यत्सैंहिकासुतम् ॥ ३ ॥

प्रायः परोपतापाय दुर्जनः सततोत्थितः ।
अवश्यकरणीयत्वान्न कारणमपेक्षते ॥ ४ ॥

यथा गजपतिः श्रान्तः छायार्थी वृक्षमाश्रितः ।
विश्रम्य तं द्रुमं हन्ति तथा नीचः स्वमाश्रयम् ॥ ५ ॥

॥ श्रीः ॥

# ॥ श्रीमती सती कमला ॥

(पूर्वतोऽनुवृत्तम्)

---

इति निगद्य तस्याः करकमलमेकेन पाणिनादायान्येन तदीयं चुबकमुन्नमय्याधरमरन्दं पायम्पायमतृप्तो गाढमालिङ्ग्य क्षणमन्वभवत्कमप्यानन्दम् । गिरिजायास्तस्यास्तदा वदनपङ्कजे भासमानं तेजो वर्णयितुं न खलु प्रभवतीयं लेखनी—

५

व्यतीतः प्रथमयामात्मकः समयो दिवसस्य । अच्छतमे शुक्लवर्णभासुरे नभोमण्डले भगवान् बालमरीचिमाली निजान् किरणान् सर्वतो विस्तारयति स्म । समयेऽस्मिन् कोऽपि युवा भगवत्याः कलिन्दकन्यकायास्तटे पीतजलमश्वमेकस्मिन् पादपमूले बध्वा सह समानीतं पाथेयेन प्रातराशं निर्वर्तयितुं प्राक्रमत । अत्रान्तरे कुतश्चिन्महीयसा जवेन समापततां तुरगाणामश्रूयत हेषारवः । श्रुत्वा च तं हेषारवं स तरुणवीरः ससम्भ्रमं प्रातराशमनिवर्तयन्नेव तुरङ्गमान्तिकमागतस्तमारोढुमुद्यतः । समयेऽस्मिन् समागतास्त्रयोऽश्वारूढा यवनभटाः । तेष्वेकः पप्रच्छ तरुणवीरम् । महाभाग कस्त्वम्? कुतः समागतः? कुत्र वा गच्छसि? इति ।

तरुणवीरः—— वीर, उदयपुरम् । तत्र मे मातुलो वर्तते । तं साक्षात्कर्तुम् ।

यवनवीरः—किम उदयपुरं गच्छति भवान्? नायमध्वा महाभाग, उदयपुरगामी। मृषा खलु वदसि। कच्चिदस्माकं सैन्यनिरीक्षणाय समागतोऽसि। आगच्छ। किं रे पश्यथः! अश्वादवतीर्य बध्यतामेषः।

ततोऽन्यौ यवनभटावेतत्स्वस्वामिवचनमाकर्ण्य सरभसमवातरतामश्वाभ्याम्। अकरोत्तरुणवीरो निशिततरं निजं खड्गं कोशादाकृष्य पाणौ। प्रायतत च तेन खड्गेन यवनान् प्रहर्तुम्। परं नायं तस्य प्रयासः फलितः। यतस्तावुभावपि कशाघातेन ताडयित्वा संयन्तुमेतं प्राक्रमेताम्। बहवः खलु विदधिरे मोचन आत्मनोऽनेनोपायाः परं ते सर्वेऽपि वृथा गताः। संभ्रमे पुनरस्मिन् शिरसोऽस्य पपातोष्णीषम्। तदा मध्येमस्तकं जटेव निबद्धः प्रमदाजनोचितः केशकलापः स्रस्तोंऽसयोऽस्य। विलोक्येदं विस्मितो यवनवीरः सस्मितं— हन्त हन्त! तरुणीयं कापि। हहह! अहो मे दिष्टम। धन्योऽस्मि सर्वथा। इति विचिन्त्य तुरङ्गमात्सानन्दमवतरन् हं परित्यज्यतां परित्यज्यताम्, अबला खल्वेषा, लघु मुच्यताम्, इति परिचारकावाज्ञापयामास। तावपि करतलात्खड्गमाकृष्य तदात्व एव मोचयामासतुस्ताम्।

पाठकवराः! आसीद्वा परिचयोऽस्यास्तरुण्या। एषैव खलु स्वामिकार्यार्थं वीरपुरुषवेषेण प्रस्थिता नः परिचिता राजकन्यकायाः सखी गिरिजा। कृतान्तकर्मणां दुरात्मनां यवनानां पाणौ लग्नाया अस्या दुःखपरम्पराधभागभाजो भवामः, आगच्छत।

प्रेष्ठाः पाठकवराः! नासीन्मनागपि गिरिजायाः आत्मनः

प्राणापायभीतिः प्रियसख्या राजकुमार्याः प्रति श्रुतं कार्यं न खलु साधितमिति नितान्तं विव्यथे सा प्रियतमस्य शिवसिंहस्य स्मरणसमकालमेव तस्या नासीद्व्यथाया: परा काष्ठैव । आस्ताम्, किमप्येष पापः प्रजल्पति यवनः । पश्यत, तच्छृणुमः, आगच्छत ।

यवनवीरः— सुन्दरि! आगच्छ, शिबिरं व्रजावः। डिल्लीश्वरस्य सेनापतेः कनीयानहं सोदरः, बख्त्यारखान इति मदीयं नाम । वीरस्यास्य बख्त्यारखानस्य महिषीं पदमलङ्कर्तुमर्हति भवती । इतो नातिदूरे मे शिबिरम् । आगच्छ, आगच्छ, सुन्दरि! इति तस्याः पाणिमादातुं स्वकरं प्रसारयामास ।

अथ सा गिरिजा मनागिव पश्चादपसृत्य सर्वतश्चक्षुषी विकीर्य च चपलतया यवनभटकटौ लम्बमानात्कोशात्खड्गमादाय काममोहितान् विस्मृतश्च परभावं स्थितांस्तांस्त्रीनपि यवनांस्तेन खड्गेन शिरसि प्राहरत् । परं लोहमयेन शिरस्त्रेण सुरक्षितानि तेषां शिरांसि प्रहारेणानेन व्यथामापुः । प्रतिभयेन गिरिजायाः साहसेन ते यवना विस्मिताः संवृत्ताः । यवनभटेनाज्ञप्तौ तौ तदीयौ परिचारकौ पादाघातेन परुषतमेन द्वित्रवारं गिरिजां वक्षस्यताडयताम् । पादाघातानेतानसहमाना विक्लवा यावदपसरति पश्चात्तावत्स्खलन्ती सा सहसा हन्त हन्त न्यमज्जत्पङ्के । 'नातः परं मे जीवितेन फलम्, यदि वा जीवामि पापा एते नूनमनार्यमाचरन्ति' इति विचिन्त्य कवचकोशे सुरक्षितमेकं पत्रं मुखे निक्षिप्य तत्रैव गुप्ततरं रक्षितायाः करवालिकया निर्दयं हृदि प्राहरदात्मनः । तेन सा करवालिका सरुविमग्नमासीद्धृदये ।

आर्या: पाठका:! आसीदन्तो गिरिजाया:। पवित्रतमं तस्या: शरीरं विनष्टं स्वामिकार्ये। अहो गिरिजाया: स्वामिभक्ति:, स्वधर्मगौरवञ्च, न खलु स्वामिभक्तानां गुरुतरं स्वामिकार्यान्निजं जीवितम्। कुलव्रतं खलु स्वामिकार्यसम्पादनं तेषाम्। एवंविधा बहव: सुगृहीतनामधेया: सुकृतिन: पुरा स्वामिकार्ये प्रवृत्ता प्राणाञ्जहासु: सुखम्। अत एव प्राचीना भूमिपाला: स्वराज्यं निरायासं सम्पादयामासु:। जीवितस्यापि हि भीति: स्वराज्यसम्पादने नासीत्तेषां राज्ञाम्।

समयोऽयमेवंविधो नासीदपरिचितस्तस्य दुरात्मनो यवनहतकस्य। पर:शता: किल कुलयुवतयोऽस्य दुर्नीतिप्रदीपे शलभायमाना: पर्यत्याक्षुरिमं लोकम्। अबलाजनविलोकनसमकालमेव दुरात्मनोऽस्य दुर्नय: परामध्यगच्छति स्म काष्ठाम्। नासीदेवंविधो दुरात्मा तदानीमन्य: कोऽपि। नामाप्यस्य जनयति स्म अबलाजनानां चेतसि भीतिम्। अद्यापीयं सर्वसहास्य पापस्य दुर्नयडिण्डिमनिनादेन नितान्तमाक्रान्ता।

तत: स यवनवीरस्तस्या अन्तिकमागत्य 'किमनया भक्षितम्' इति सकौतुकमाच्छिनत्तदीयां निशितकृपाणेन कन्धराम्। अरे आगम्यताम्, पत्रं भक्षितमिवानया, विलोक्यतां निपुणं मुखमुद्घाट्य, न चेत्तत्र लब्धं च्छित्वास्या: शरीरं शोधनीयम्, विलोकनीयमेव तत्पत्रं मया, इति परिचारकावादिशत्।

तौ तदा यावत्तन्मुखमुद्घाट्य पश्यत: तावत्तत्रैवासीत्तत्पत्रम्, तदादाय स्वामिने समर्पयामासतु:। तत: स पाप: हं अन्यत्किमपि वा स्यादस्या: सविधं, अन्विष्यतामित्यनुचरौ पुन:

राज्ञापयामास । ततस्तौ सरभसं तस्याः शरीरगतानि वासांसि निर्दयं निष्कास्यान्वेषितुमारभताम् । तस्याः कवचकोश आसीदेकाधरीकृतकामवामलोचनाया वामलोचनायाः कस्याश्चन हृदयङ्गमाप्रतिकृतिस्तदा दृष्टिगोचरा । विलोकनेन तस्याः परं विस्मयमध्यगच्छँस्ते पापा यवनाः । अन्यात्किमपि न लब्धं तस्याः सविधे । ततश्च तामेकां प्रतिकृतिमादाय गिरिजाशरीरं निर्दयं खण्डं खण्डं तत्रैव निक्षिप्य ते शिबिरमात्मीयमयासिषुः । अहो अकारुण्यं यवनानाम् । न जानात्येतेषां पापमयं हृदयं करुणाया वार्तामपि । सर्वथैते सौनिकेभ्योऽपि सौनिकाः । परुषतमस्य वज्रस्यापि द्रवेद्धृदयम् । न पुनरेतेषां पापानाम् । हन्त हन्त ।

६

जराग्रस्तो दयालुसिंहमहाराजः कासामयेन बलवदाक्रान्तो शय्यामेव प्रसुप्तः । सुरवैद्यसदृक्षैर्भिषक्प्रवरैरनल्पैरुपायैर्निपुणं चिकित्सितोऽप्यस्य कासामयो न प्रशान्तो मनागपि हन्त दिष्टं महाराजस्य । वात्सल्यमूर्तेः पितुरामयेनानेन नितान्तं चिन्तावशीकृतस्वान्ता कमला तत्रैवोपविशति स्म । अत्रान्तरे कोऽपि चारः सरभसं भीतभीतः समागतस्तत्र 'विजयतां प्रभुः, अत्याहितमापतितम्, एष दुर्ग आक्रान्तोऽनल्पैर्यवनैः, महाराजः प्रमाणम्' इत्यब्रवीत ।

महाराजः— (सभयम्) किमयं दुर्गो यवनैराक्रान्तः ?

चारः— (सविनयम्) अथ किम् ।

महाराजः— कदा ?

चारः— इदानीमेव ।

महाराज:— (सचिन्तम्) किन्तु वा निदानमत्र? (इत्युत्थातुं प्राक्रमत)

कमला— हां तात तात, सुखं शेरताम् भवान्। किन्तदिति सर्वं विचारयामि। मा करोतु तातश्चिन्ताम्।

महाराज:— जाते, नूनमेते पापा भवत्या: सौन्दर्यमोहिता: समागता: स्यु:।

कमला— (स्वगतम्) कुतो नु वा मे सखी गिरिजा जयसिंह-महाराजाय मे प्रणयपत्रिकां दातुमुदयपुरं गता नाद्यापि समागता? न भवेद्वा तत्र मे जीवितं जयसिंहमहाराज: यदि स्याद्विलोकितं भवेन्मे पत्रम्, भवेद्वा मनोरथ: फलित:, इत्येवमादिमनोरथ:शतैर्मनो विनोदयन्त्यासाम्, किमेतदत्याहितमापतितम् किमत्र कर्तव्यम् इति (विचिन्त्य प्रकाशम्) किं मदीयरूपविमोहिता: समागतास्तात, पापा एते?

महाराज:— भवेदेवम् (इति दण्डमालम्ब्य कुमार्या निवारितोऽपि प्राक्रमत बहिर्गन्तुम्। अन्य: कोऽपि चार: समेत्य सविनयम्) महाराज! पत्रमिदं यवनसेनापतिना स्वमुद्रामुद्रितं प्रेषितम्। तत्प्रत्यक्षीकरोतु महाराज:। (इति पत्रमेकं प्रभवे प्रायच्छत।)

महाराज:— (पत्रमादाय मनागिवानुवाच्य सामर्ष) किं सेनापते! भवत: कनीयान् वत्साया मे कमलाया पाणिं गृहीतुमिच्छति। अहो दुरात्मन्! अविवेकता तव, पत्रमेवं विलिखितुं कथं रे पाप! न त्रपते ते हृदयम्, नावगतं वा भवता न जातु सहेयु: पत्रमेवंविधं रजपूता:, रजपूतानां धर्मो न विदितो वा

तव, चित्र (चितोर) गडीयवृत्तान्तो न ते कर्णपथागतो वा? (पुनः पत्रं विलोक्य) किम् 'पाणिग्रहणमहोत्सवसन्नद्धा वयम्, भवन्तोऽपि सत्वरं सन्नद्धा भवथ' हा हन्त हन्त किं कुर्याम्, दहति मे हृदयं कोपपावकः प्रकामम्। (पुनरनुवाच्य) 'अन्यथा........

पाठकाः— नासीत्परा काष्ठैव दयालुसिंहस्य कोपस्य। करतलात्पतितं तत्पत्रं भूमौ। प्रथममेव तदीयं शरीरं वार्धक्येण कासामयेन जीर्णशीर्णम्। तदिदं कोपभरेण कम्पमानमपतत्सहसा भूतले। अथेदृगवस्थं पितरं विलोक्य विक्लवान्तःकरणा कमला तमुत्तरागारं नीत्वा मृदुतरतूलमये शयनीये शाययित्वा साकल्येन तत्पत्रं वाचयित्वा दूयमानमानसा मनागिव विचिन्त्यात्मनः प्रातिकूल्यञ्चावबुध्य सेनापते! को दोषः, सायं स्वयमेवायुष्मती कमला समापतिष्यति शिबिरम्, यथेच्छं कर्तुं प्रभवति भवान्, इत्याशयपरिप्लुतं पत्रं स्वयमेव विलिख्य राजमुद्रया सम्मुद्र्य प्रेषयामास प्रेष्यमुखात्। ततः पितुः शुश्रूषार्थं विश्वासभाजनं शिवसिंहं नियुज्य स्वयं मङ्गलस्नानं विधाय भगवन्तमम्बिकाधवं अर्चितुमुपवनं प्रस्थिता। तत्र मार्गे भूतपूर्वाणि सर्वाणि दुःशकुनानि सममेव तस्याः स्मरणसरणिमारूढानि। एवं विधः प्रतिभयतमः समयः समापतिष्यतीत्येव वा ममैतानि दुःशकुनानि जातानि!। भवतु भवितव्यता बलीयसी; न कोऽपि प्रभवति तमुल्लङ्घयितुम्। हन्त. प्रातरद्य किं विचिन्तितम्? किमिदानीमुपनतम्! कथमत्र कर्तव्यम्। को वा भवेन्मे शरणम्? अगाधः खल्वेष विपत्सिन्धुः। हन्त कथमेनमुल्लङ्घ-

यामि। इति चिन्तयामास। ततः शिवालयं प्रविश्य सभक्ति श्री श्रीकण्ठं सम्पूज्य साञ्जलिबन्धं— भगवन् दीनबन्धो दयासिन्धो भवानीपते! अतिमात्रं खल्वापतितमत्याहितं मयि, पिता च मे जराग्रस्तः पुना रुग्णशय्यामधितिष्ठति। रक्षणकर्ता च नात्रान्यो वर्तते। बाढं कुटिलहृदयाः खल्वेते पापा यवनाः। अहञ्च कामिजनलोचनलोभनीयलावण्यशालिन्यबला। धिगस्तु ममास्य लावण्यस्य। अत्याहिते पुनर्निदानमपीदमेव। भगवन् प्रभो भवानेव सर्वथा शरणमबलाया मे। न मेऽस्ति भगवन्, भवन्तमन्तरान्यः शरणम्। निरलसमिदमशेषं भुवनं पालयतो भवतो नाहमबला श्रमाय। दीनबन्धो! जगति विश्रुता तव दीनबन्धुता। महति सङ्कटे पतिताऽस्मि। अस्ततन्द्रं मया तव पूजा जन्मनः प्रभृति भक्त्या। भक्तवत्सलोऽसि भगवन्। अहं ते भक्ता। यद्यवितथं भक्तवात्सल्यं ते प्रभो, तदा पाहि माम्। इयत्येव मे प्रार्थना त्वच्चरणारविन्दपरिसरेषु। इति सम्प्रार्थ्य निजालयमागता निराहारेण वासरं तमनैषीत्।

पाठकवराः, दयालुसिंहमहाराजस्यातिमात्रं कष्टमयी संवृत्ता दशा। निरचैषुर्दुर्गवर्त्तिनः सर्वेऽपि दुःखिता नायं जीवतीति, केवलं कण्ठगतप्राणः शय्यायां प्रसुप्त आसीत्। परिणतो वासरः, भगवान्सहस्रभानुः सङ्कुचितभानुर्विश्रान्तिसुखसेवनाय चरमगिरिशिखरं प्रयातुमुद्यतः। समयेऽस्मिन् राजकुमारी कमला शुभ्रतमं वासः परिधाय वस्त्राञ्चले निशितनिशितां करवालिकां गोपयित्वा तद्वसनाञ्चलं कटौ निवेश्य मेखलयाबध्य रुग्णशय्यामधिशयानस्य पितुरन्तिकमागता तच्चरणावभिवन्द्य बाष्पा-

कुलनयना सगद्गदं सकरुणञ्च— तात! एषा ते कठिनहृदया तनया दयनीयतमां दशामापन्नमपि भवन्तं विहाय गच्छति । यां खलु भवाना शैशवात्समयमेतावन्तं जीवितनिर्विशेषं पर्यपालय: । सैवैषा पापा । अहो निर्दयत्वं मम । नास्ति तात! तस्य परा काष्ठा । हन्त हन्त क्षणादेव गच्छति भवानपि करालकालकबलताम् । सर्वथासाम्प्रतं खलु समयेऽस्मिन् भवन्तं परित्यज्य गन्तुं त्वद्वत्साया मम । परं तात! किं कुर्याम् । हन्त हन्त! तात,........

न तत: पाठकवरा:! तन्मुखादेकमपि नि:सृतमक्षरम् । अथ क्षणान्मनागिव शोकावेगं तनूकृत्य सा सगद्गदं तात! समयोऽत्येति, गच्छामीति निगद्य देवागारं गत्वा कुलदैवतमेकलिङ्गेश्वरं प्रणम्य सम्प्रार्थ्य च शिवालयमागत्य भगवन् चन्द्रशेखर! जन्मान्तरेऽपि त्वच्चरणनलिनयोरव्यभिचारिणी भक्तिरस्तु, इति साञ्जलिबन्धं प्रार्थयित्वा गोपुरं सरभसं समागता सर्वाननुयात्रिकान् सविनयं सानुरागं च आर्या:! एषा व: सोदरी गच्छति । अनुजानन्तु सर्वे। स्मरणमस्तु कनीयस्या: कियद्दूरमागच्छथ! किमागतानां फलम्! किमेषा प्रतियाति वा! वृथा खल्वागमनं भवतां दूरम् । प्रतियान्तु भवन्त: । एकप्रणामाञ्जलिर्भवतामन्तिम: । शिवसिंह! गच्छ । न कोऽपि वर्तते पितु: सविधे । धर्म: परिपालनीय:, अस्मैव गुरुतरं श्रेय: । भवति मे विलम्ब: । तूर्णं गन्तव्यं खलु । गच्छ गच्छ । इति निगद्य पञ्चषैर्विस्रंभभाजनै: परिचारकै: परिवृता सत्वरं प्रातिष्ठत यवनसेनापते: शिबिरम् ।

७

निशाया: प्रथमो यामोऽपगत:। परिश्रान्ता: सर्वेऽपि

यवनसैनिकाः, पक्षिणां विरावोऽप्यस्तं गतः, प्रशान्ततमे समयेऽस्मिन् यवनसेनापतेः कनीयसो भ्रातुर्बखत्यारखानस्य कमनीयतमं दूष्यं सुव्यवस्थं स्थापितैः प्रज्वलद्भिः प्रदीपैः भासुरं, पटुतरमालाकारग्रथितैर्हृदयहारिभिर्मागधीमालतीप्रसूनमाल्यैः परिष्कृतश्चासीत्। तस्य मध्ये अच्छाच्छप्रच्छदपटशोभितं सुन्दरतरं चन्दनदारुसम्भवं पीठं नानाविधसुरापूर्णकाचपात्रसमलङ्कृतमाबभास। तस्य परितः कूर्चासनानि स्थापितानि। एकस्मिन् कोणे स्वर्गापगापयः फेनपाण्डुरप्रच्छदपटविराजमानहंसतूलमयशयनीयसनाथीकृतो रौप्यमयो मरकतादिमणिराजिरूषितो मञ्चः पुष्णाति स्म दूष्यशोभाम्। एकत्र चन्दनदारुसम्भवे मृदुतरतूलमयपरिच्छदशालिनि कूर्चासने उपविष्टो बखत्यारखानः सुरां पायम्पायं मत्तः प्रतिपालयति स्म राजनन्दिन्याः कमलायाः पन्थानम्। अत्रान्तरे प्राविशत्सा राजदारिका तद्दूष्यम्। अनुचरा अपि तामन्वागताः सर्वेऽपि तस्या निर्देशेन प्रत्यागच्छन्। शान्तिमय इवासीत्स प्रदेशस्तदा।

अथ समागतामेतां कमलां वीक्ष्य सानन्दं बखत्यारखानः ससम्भ्रममासनादुत्थाय सुन्दरि! स्वागतं ते, इदमासनम्, अत्रोपविशतु भवती, अतिमात्रं खल्वेतौ तव चरणौ पेलवौ, सुचिरमवस्थानं न सहेते। सुन्दरि! भवत्या अवस्थानेन मदीयौ पादौ व्यथतः, तूर्णमुपविशात्र, इति निगद्य कूर्चासनमेकं निधाय तदग्रे पुनर्निपुणं तां निर्वर्ण्य—— प्रेयसि! अहो लावण्यं तव नाहमेतावन्तं समयमवालोकिषं भवद्विधां कमनीयां वामलोचनाम्। कल्याणि! केयमाह्लादकता भवत्या वदनचन्द्रमसि! असकृद्विलोकितोऽपि न मे जनयति तृप्तिम्। अच्छतरादर्शतलभासुरयोस्ते

कपोलयोरेतयोर्भासमानं तेजः सर्वथा कामिजनलोचने दीपयतः । नवकिसलयपेलवमेतत्ते कलवाणि! अधरमधीरं करोति मे हृदयम्, कृशोदरि! मामामन्त्रयतः पुनरेतौ ते कनककलशानुकारिणौ कुचावालिङ्गितुम । सुन्दरि! अलं कियन्तं कालमेवं तिष्ठति भवती । मास्तु कूर्चासनमिदम्, नवमल्लिकाकुसुमपेलवा भवती । कूर्चासनं पुनरिदं परुषतमदारुसम्भवा । हन्त हन्त लोकोत्तरं खलु ते सौकुमार्यम् । प्रणयिनि, पश्येतः, एष सज्जीकृतो भवत्याः कृते पर्यङ्कः। आस्तृतं तस्मिन् मृदुतरं शयनीयं हंसतूलमयम् । तदुपरि प्रसारितानि सुन्दरि! अर्धोन्मिलितानि मालतीकुसुमानि, एहि एहि, उभावप्युपविशावस्तत्रैव, विविधाः सुखगोष्ठीर्वदावः । स्वैरमनुभवावः सुरतसुखम्, सर्वथा धन्योऽस्मि, कृतकृत्योऽस्मि, अवन्ध्यजीवितश्चास्मि, यतोऽद्य भुवनैकसुन्दरी भवती सधर्मिणी मे जाता । प्राणेश्वरि! एहि एहि, । इति तस्याः पाणिमादातुं प्रायतत । अथ सा सुचरिता कमला— मनागिव सहसा पश्चादपसृत्य— हां तत्रैव तिष्ठ, मा निधाः पदमेकमप्यग्रे, मा मां स्पृशतु भवान्, पापमयेन तव स्पर्शनेन न भवतु मे गात्रं कलङ्कितम्, महाभाग! पश्चादपसर । खलसुलभानि कथमेतानि भाषितानि वक्तुं न त्रपते भवान्! अधीता वा भवता मनागपि नीतिग्रन्थाः, भवतां वा धर्मग्रन्थे किं लिखितम्, परकीयाः प्रमदा हि मातृनिर्विशेषा इति न कश्चिल्लिखितम्? अपि नाम नाहमार्य! परस्त्री! (विमृश्य) पश्य कस्यां वा जातौ जातो भवान्? अहञ्च कस्यां जातौ जाता । अपि जानासि वा त्वमिदम् । प्रथमं जातावेव महान्भेदः, कथमेवं सति चिकीर्षस्यनार्यं कर्म? रोचते वा कथं तात! कर्तुमेवं भवते? कृत्वा वा

कर्मेदं विधं किं कथयिष्यासि धर्मराजाय। (समीपमागमिष्यन्तं तं विलोक्य) किं कथ्यते मया! मागच्छ मागच्छ पुरतः। न भवेदुभयोरपि परिणामो मङ्गलकरः, पश्य। (पुनरागमिष्यन्तं विलोक्य) न शृणोषि वा महाभाग। भवतु, भगवतः श्रीमदेकलिङ्गप्रभोरिच्छा। एषा गच्छामि। गच्छतु भवानग्रे, इति निगदन्ती सानन्दमग्रे गच्छन्तं तं बखत्यारखानं वसनाञ्चलैः गोपितया तीक्ष्णतरया करवालिकया शिरसि दृढं प्राहरत्। यावदपावृत्य पश्यति सः, तावदेव पुनस्तदीयोरसि निर्दयं तया करवालिकया जघान। सुरापानेन प्रथमं सम्भ्रान्तस्यास्य बलं निखिलमपि विनष्टमासीत्तदीयम्, करवालिकाप्रहाराभ्यां पुनरेताभ्यां जर्जराङ्गो 'हा हन्त मृतोऽस्मी' ति उच्चैः क्रन्दं क्रन्दं सहसा भूमौ निपतितः प्राणानहासीत्। मनागिवावशिष्टजीवितम् शङ्कमाना सा वामपादेन ताडं ताडं 'रे दुरात्मन्! अपि फलिता कमलया साकं क्रीडनेच्छा! स्वैरमनुभव तया साकं विहारसौख्यानि, इति निगदन्ती पुनरेकवारं प्राहरत्तया करवालिकया तस्य हृदि। ततश्च तामसरु बखत्यारखानवक्षसि निमग्नां करवालिकामुत्कृत्य निजे हृदि प्रहर्तुमैक्षत। तदा सा करवालिका रक्तपूर्णाऽसीत्। दुरात्मनोऽस्य रक्तं न मे प्रविशतु हृदयमिति विचिन्त्य तां तत्रैव न्यक्षिपत्। अत्रान्तरे महानश्रूयत दूष्यं परितः कोलाहलः। अथ सा चपला कमला तत्रैव दूष्यस्य मध्यस्तम्भे निष्कोशां लम्बमानां शाणोल्लीढां करवालिकां वीक्ष्य सानन्दमादाय च तयाऽत्मनो हृदि प्रहृत्य प्रहृत्य प्राणान् पर्यत्याक्षीत्। पाठकवराः! कुतोऽनु वा साहसमेवं विधं तया कृतम्, अहो महत्खलु साहसमिदम्। किं ब्रूथ?

स्वस्य पवित्रतमस्य शीलस्य रक्षणाय कृतं साहसमनया राजदारिकया कमलया, इति । अलं तर्हि, नैषा प्रभवति लेखनी दुःखिता लिखितुमग्रे ।

चिदम्बरशर्मा । (वडली)

---

॥ श्रीः ॥

# ॥ भारतसावित्री ॥

बालरामायणकृतेः स्वस्वभावमुपेयुषी ।
शैक्षाणामुपकाराय स्यादियं भारतीकथा ॥

धर्मराजो द्वारकानगरमधिवसन्तं श्रीकृष्णदेवमाकार्य, कौरवाणां स्वेषां च सन्धिं कुर्या इति संप्रार्थ्य, दौत्याय प्रेषयामास । स देवोऽपि तथाहीति हस्तिनपुरमुपगत्य, स्वसारथिं दारुकं विदुरस्य गृहान्प्रति रथमुपस्थापयेति समादिदेश । सोऽपि तथाकरोत् ।

अथ विदुरो गोपालदेवं प्रत्युत्थाय, साष्टाङ्गदण्डप्रणामान्कृत्वा 'लोकनायक, त्वमस्माकं शुभाय समासेदिथ । भवच्चरणारविन्दयोरवलोकनेन सकलया विधया कृतार्थोऽस्मि । इदानीं मम जन्म सफलमभूत् । मम तपांस्यफलन् । मम पुण्यानि पूर्णानि । दामोदर, मदीयमदनं प्रति भवतः समागमनेन जन्माष्टमी, महानवमी, अनन्तचतुर्दशी, दक्षिणायनपुण्यकालः उत्तरायणसंक्रान्तिः, दशमी, एकादशी, द्वादशी, अमावास्या, चैवमाद्याः पुण्यदिवसा मम समासेदुः' इति अवदत् । एवं वादिनि विदुरे, वसुदेवनन्दन-

स्तमुपलक्ष्य, 'अतिशायनां प्रज्ञां सकलशास्त्रज्ञानं चोपेयुषो भवतो वचनानि प्राशंसिषम्। चिरकाङ्क्षितानि वराणि वृणीष्व। ददामि' इति वदति भगवति, विदुरः संतुष्य 'पुरुषोत्तम मदीयगृहेषु सहस्रशो ब्राह्मणा भुञ्जन्तु। मन्मन्दिरं बन्धुजनाः पूर्यन्ताम्। मम शयनसमये कुमारा दुहितरश्च कलकलं कुर्वन्तु। तादृशं वरं दयनीयमि'ति ननाथ। वासुदेवस्तथास्त्विति वरं ददौ।

अथ श्रीकृष्णदेवस्य समागमनं श्रुत्वा राजराजो दुर्योधनो विदुरस्य सदनमुपेत्य, मधुसूदनमवलोक्य 'कमलाक्ष, भीष्मद्रोणावुल्लङ्घ्य, मम गृहाननभिगत्य, ते शूद्रस्य सद्मनि भोजनं रोचते किम्' इति सोल्लुण्ठं जगाद। तदाकर्ण्य रुक्मिणीवल्लभः सुयोधनं प्राह 'परमभागवतोत्तमस्यान्नं गङ्गातोयं श्रीविष्णुदेवस्य पदपद्मध्यानमेकादशीव्रतं चैतानि परिशुद्धानीति वर्षीयोभ्यः किं न वेत्थ। विष्णुभक्तिपरायणो मनुजश्चतुर्थजातिजनिरपि ब्राह्मण्यमुपेयात्। सकलास्वपि जातिषु विष्णुभक्तिविदुरः शूद्रत्वमीयात्। मद्भक्तस्य चण्डालस्याप्यवमाननं बुद्धिमतामनुचितं भवेत्। इदमज्ञात्वा मय्युत्सुकान् दूषयन्तो नराधमा रौरवादीन्नरकान्प्रयन्ति। राजेन्द्र, आदरमेव पृच्छ। न पुनर्भोजनम्। अन्नमेकस्मिन् यामे जीर्णं भविष्यति। आदरस्तु शाश्वतिकः। शत्रोः सदने भोजनं, रिपोर्भोजनदानं च निषिद्धे स्मरन्ति। त्वं मम शत्रुः। तेन भवदीयगृहेषु भोजनं न युज्यते। तथाहि, पाण्डवा मम परमाप्ताः त्वं तु तेभ्योऽपराध्यसि। सोऽपराधो मय्यपि नित्यमभूत्। मम पाण्डवाः पञ्च प्राणा इति किं न जानासि। प्रियपूर्वकमाहूतवतां गेहे भोजनमुचितं हि भवति। अन्नमविन्दन्नाप-

त्काले कस्यापि सदने भोजनं कुर्वीत । तवास्मासु प्रेम नास्ति । वयमन्नहीना नाभूम । सुयोधन, आदरेण दत्तं शाकमात्रमप्यमृतायते । भक्तिं विना दत्तममृतमपि निःसारं गणयेम ।

हितं यदि श्रोष्यसि तर्हि सुदूरमभिमानं त्यक्त्वा पाण्डुनन्दनेभ्यो भुवं समभागं विभज्य देहि । यूयं शतं ते च पञ्च; सन्धाय सुखेन वर्तध्वम् । माभूद्वः कुलस्य हानिः । यूयं पञ्चोत्तरशतमेकीभावेनावतिष्ठत । अन्यच्च, काननान्तरेषु द्वादशहायनानि स्थित्वा, वत्सरमेकमज्ञातवासं च कृत्वा, चिराय समायाताः पाण्डवाः पञ्चानामप्यात्मनां पञ्चग्रामान्याचन्ते । ते च नामत इन्द्रप्रस्थो यमप्रस्थो वारणावतमवन्ती चेति चत्वारः । पञ्चमः कश्चिद्वा । तस्मादवश्यमेते दातव्याः ।' इति भगवता समुदीरितं श्रुत्वा सुयोधनः प्राह— 'केशव, समरमन्तरा सूक्ष्मेण सूच्यग्रेण विद्धमात्रामपि महीं नाहं दास्यामि ।'

इति सुयोधनस्य वाचं निशम्य, श्रीकृष्णदेवः प्राह— यदा कपिध्वजमवष्टभ्य गाण्डीवं टङ्कारयन्पाण्डवमध्यमः किरीटी, गदादण्डमुद्धतं भ्रामयन्वेतण्ड इव वृकोदरश्चरणाङ्गणमुपतिष्ठेताम् , तदा त्वमेव सकलमपि राज्यं विभज्य दास्यसि ।'

इत्येतद्वचः श्रुत्वा सुयोधनः श्रीकृष्णदेवमेवं प्राह— 'यदा मदगज इवोच्छृङ्खलो महामेघ इव गर्जन् , चित्रगतिभी रथं गमयन्नादित्यनन्दनः कर्णः सुवर्णद्युतिसहचरीभिः स्वदेहकान्तिभिर्ज्वलन्समरे विहरिष्यति तं समयं त्वमेव द्रक्ष्यसि ।' इति ।

तदा श्रीकृष्णदेवः सुयोधनं प्राह––

'यदि त्वं राधेयस्य बलं विश्वासिषि ; गजाश्वरथहीन एकाकी

पादाचारेण पलायनं करिष्यसि। अन्यथा धर्मशास्त्रकर्तारो याज्ञवल्क्यप्रभृतयो मद्यपायिन इवासत्यवचना भवेयुः। इति सशपथमुक्त्वा पुनरप्येवं गोविन्दः प्राह—

'उत्तरगोग्रहणे शिरोवेष्टहारकं पराजयमनुभूयापि पुनर्युद्धायोपक्रममाणो भवानेकः; पुरा त्रेतायामाञ्जनेय एकाकी लङ्कां निःशङ्कं प्रविश्य, अशोकवनं भङ्क्त्वा, स्वात्मजमक्षं निहत्य लङ्कापुरीमग्निसादकरोदिति जानन्नपि पुनर्युद्धाय संसिद्धो रावणश्चैको द्वावपि युवां लोके मूर्खाविति वक्तुमर्हतः।'

एवं सहस्रनागबलसंपन्नस्याऽग्निस्तम्भजलस्तम्भेन्द्रजालादिविद्याशालिनो धृतराष्ट्रस्य नन्दनं, शतमनुजानेकोचरशतं तनुजाँल्लक्षं विंशति सहस्राणि च बान्धवान्, षट्सहस्राणि महामन्त्रिणः, शतकोटीर्नियोगिनां, पञ्चसहस्राणि परिचारकाणां, चतुष्कोटीः सामन्तानां, तिस्रः कोटीर्दण्डनायकानां, कोटिं नवलक्षाणि चैकवीराणां, चतुर्लक्षं रणविजयिनः, चत्वारिंशत्सहस्राणि धन्विनः, कोटिं प्रासिनः, पञ्चदशसहस्राणि भद्रगजानां, पञ्चलक्षाणि संग्रामदन्तिनां, सप्तलक्षा एकोनाशीति सहस्राणि सैन्यानि, कनकरत्नं, माणिक्यकिरीटं च प्राप्य, महाविभवेन हस्तिनापुरं पालयन्तं, राजराज इति बिरुदं धृत्वा, षट्खण्डानि स्वयं शासन्तं, खण्डत्रयीराजैः करं गृह्णन्तं, नवखण्डमण्डलाधीश्वरं, नेत्रयोश्चिन्तामणिं, हस्तयोः स्पर्शवेधिनं, पादयोः पद्मरेखाश्च लब्ध्वा, विराजमानं दुर्योधनचक्रवर्तिनमधिक्षिप्य भुवो भारं परिहर्तुं, किरीटिने सारथ्यं कर्तुं व्यवसितः श्रीकृष्णदेवो यथागतं निश्चक्राम।

ततो वेदव्यासमुनीन्द्रो धृतराष्ट्रमुपेत्य, समुपस्थिते महारणे

कुलक्षयमुद्भाव्य शोचन्तं तं समाश्वास्य, तत्प्रार्थनया सकलमपि भारतरणप्रकारं धृतराष्ट्राय श्रावयेति सञ्जयं नियुज्य ययौ।

अथ धृतराष्ट्रेण पाण्डवकौरवयोर्मध्ये के वातिरथाः, के वा महारथाः, के वा समरथाः, के वार्धरथाः, के वातिरथश्रेष्ठाः; प्रवृत्ते घोरयुद्धे कैर्वा के निहता अभूवन्; सविस्तरं ब्रूहीति पृष्टः सञ्जयो राजानं प्राह—'कौरवाणां बले सुयोधनः, कृतवर्मा, शल्यो, भूरिश्रवाः, सोमदत्तो, बाह्लिको, हलायुधश्चातिरथाः। सैन्धवो, नीलो, वृषसेनश्च, महारथाः। बृहद्बलः, शकुनिः भगदत्तो, लक्ष्मणकुमारश्च समरथाः। दण्डधारः, कर्णो, विन्दानुविन्दौ चार्धरथाः। कृपोऽश्वत्थामा द्रोणो भीष्मश्चातिरथश्रेष्ठाः। पाण्डवसैन्ये युधिष्ठिरः काम्भोजश्चातिरथौ। द्रौपदीपुत्रपञ्चकं, उत्तरः, शिखण्डी, द्रुपदविराटौ, धृष्टकेतुश्च महरथाः। नकुलसहदेवौ पाण्ड्यश्च समरथाः। अभिमन्युः सात्यकिर्धृष्टद्युम्नो, घटोत्कचोऽतिरथश्रेष्ठाः। बीभत्सुरेतावानिति वक्तुं, श्रोतुं च न शक्यम्। कौरवपाण्डवानामेकादशसप्त चाक्षौहिण्य एकीभूय प्रतिष्ठेयुरप्येक एव धनंजयो निमेषमात्रे संहरिष्यति। अर्जुन एकाकी कौरवबलमर्धनिमेषे प्रतार्य विजेष्यते।' इत्युक्त्वा पुनरपि सञ्जय एवं प्राह—

मार्गशीर्षमासे शुक्लपक्षे त्रयोदशीदिने भरणिनक्षत्रे भारतं युद्धं प्रववृते। तत्र कृष्णपक्षसप्तमीदिने शिखण्डिनं पुरो निधायाऽर्जुनो भीष्मं पातयामास। अष्टमीदिवसे भगदत्तो, नवमीवासरे जयद्रथो, दशमीदिनेऽभिमन्युः, एकादशीतिथौ सैन्धवः, तस्या एवार्धरात्रे घटोत्कचो, द्वादश्याः प्रत्युषसि विराटद्रुपदौ, तस्या एव मध्याह्ने दुःशासनः, तस्याः सायं समये महावीरः कर्णश्च रणेऽपतन्।

ततो दुर्योधनस्य सैन्यं दैत्यमनुभूय वाद्यघोषान्वर्जयित्वा, वीरालापान्विना, हर्षानपहाय, च्युतसूर्यमिव दिवा शून्यचन्द्रमिव दोषा, कान्तिहीनं ददृशे। कमलदलसमनयनाभ्यां भासमानं दुर्योधनस्य वदनं कलाहीनमलक्ष्यत। एवं कौरवसैन्यं कर्णरहितं न शुशुभे। ततोऽमावास्यायां शकुनिरुलूकश्च सहदेवेन हताभूताम्। तस्या मध्याह्ने शल्यं धर्मराजः परलोकमनयत्। तस्मिन्नेव समये भीमसेनस्य गदाघातेनोरुणा भग्नः सुयोधनः पपात। धृष्टद्युम्नः शिखण्डी, द्रौपदीपुत्राः पञ्च च तामेव रात्रिमश्वत्थामाऽघानिषत। एवमष्टादशाक्षौहिण्योऽष्टादशसु दिवसेषु चिक्षियुः।

भीष्म एकस्मिन्दिवसे दशसहस्राण्यश्वान्, नवसहस्राणि गजानां, पञ्च मूर्धाभिषिक्तान् राज्ञो निहत्य समराद्विरराम। द्रोणो दशदिवसान्, कर्णो द्वे अहनी, शल्योऽर्धदिनं च युयुधिरे। दुर्योधनोऽर्धदिनं भीमसेनेन सह गदायुद्धं कृत्वा प्रेयाय। एवं कुरुक्षेत्रे सकलक्षत्रियक्षयकारणं भारतं युद्धं प्रवृत्तमासीत्।

कुरुक्षेत्रमेव यज्ञवेदिः, जनार्दनो यूपः, दुर्योधनः पशुः, कर्णः पाशः, पाञ्चाल्यरणिः, भीमसेनो ज्वलनः अर्जुनो होता भीष्मद्रोणावाज्यं, धर्मराजो यजमानः, सकलं राजकं हव्यद्रव्याणि, गाण्डीवबाणं स्रुक् स्रुवौ, च भूत्वा, महता संरम्भेणामुं रणयागं प्रवर्तयामासुः।

एष भारतसारसंग्रहो भारतसावित्रीति प्रशस्यते। इमां पठतां स्वर्णमालालंकृतनां गवां सहस्राणि सत्पात्रे ददतां च तुल्यं फलं भवेदिति वेदव्यासवचनमास्ते॥

श्री पीठिकाधिपास्थानकवी शतावधाविनौ।
रामकृष्णाह्वयावेतां रचयामासतुः कृतिम्॥

॥ श्रीः ॥

# ॥ सावित्रीचरितम् ॥

—*—

पुरा पाण्डवेषु वने वसत्सु कदाचिद्यदृच्छया तन्निकटमाजगाम योगी मार्कण्डेयः। धर्मनन्दनश्च तं यथाविधि पाद्यादिना पूजयित्वा, समुचितासने उपवेशयामास। सुखोपविष्टं च तं कुशलप्रश्नानन्तरं वनवासदुःखितोऽपि, अन्तःस्तम्भितदुःखभारः एवमुवाच—'योगिन्, मम वनवासाद्राज्यापगमादपि न खेदः, किं तु अबला सुकुमारी चैषा द्रौपदी सहास्माभिः कण्टकाद्यावृतेषु वनमध्येषु अधिकतमं क्लेशमनुभवतीति नितरां दुःखायितं मे मनः। अनयैव किल सुचरितया हेतुभूतया अतिकष्टापि विपदुत्तीर्यतेऽस्माभिः। एतादृशी पतिदेवता लोके यत्रकुत्रापि अस्ति वा' इति। स चाह— 'पाण्डव, जगत्य-हीनैश्वर्यतपःशालिनां माहात्म्यमेतावदिति शक्यते वक्तुम्, जन्मश-तैरपि पतिव्रतामाहात्म्यं नैव शक्यते वक्तुम् साध्वी सर्वदापि साम-र्थ्यवती कार्यसाधने, पातिव्रत्येनैव किल, सावित्रीनामधेया काचन युव-तिल्ललामभूता रमणी मृतमपि भर्तारं संजीव्य निखिलभुवनेषु व्याप्त-कीर्तिशरीरा, अद्यापि परिदृश्यमानेव, लोकैरवभासते' इति। एवमु-क्तवन्तं मार्कण्डेयम् 'आर्य, कथामेतामामूलाग्रं श्रोतुमतीव ममोत्क-ण्ठेते श्रवसी' इत्यवादीत्। योगी च प्रोवाच 'पुरा समस्तनरपतिव-न्दितपादयुगलः निखिलभूमण्डलाधिनायकः मद्रविषयाभिवासी अश्व-पतिर्नाम यथार्थनामा, कश्चनासीद्राजा। स चिराय विजितारिमण्डलतया स्वस्थमना निखिलसंपज्जाज्वल्यमानोऽपि अनपत्यतादूयमानचेताः अहर्निशं देवताराधनतत्परः मूलमन्त्रेण सावित्रीदेवीमतोषयत्।

तुष्टा च सा प्रत्यक्षीभूय पुत्रिकादानेनानुगृह्य, स्वयमन्तर्दधे । ततश्च क्रमेण राज्ञी च मालविका गर्भमधत्त । संपूर्णेषु गर्भदिवसेषु दशमे मासि शुभंयुगुणकोरकिते वासरे संपूर्णलक्षणसंपन्नां प्रजापतिना सौन्दर्यसर्वस्वेनेव निर्मिताम् अपरस्वरूपमिव रतेः उभयवंशप्रतिष्ठाकर्त्रीं सुतामसूत । पुत्रिकाजननसन्तुष्टान्तरङ्गः क्रमेण सद्य एव, निखिलमपि कार्यजातं परिसमाप्य सावित्री प्रसादभूतायास्तस्यास्तन्नाम्नैव तां सावित्रीमकरोत् । सावित्री च क्रमेण शुक्लपक्षशशिकलेव प्रतिदिनमेधमाना, विवाहोचितं वयः प्रपेदे । राजापि दुहितृविवाहाय प्रयतमानः सौशील्यादिभिरनुरूपं वरमन्विष्यापि अलभमानः तीर्थयात्राव्याजेन भर्तृवरणे पुत्रिकामेव न्ययुङ्क्त । सापि परिवारसमेता, पतिवरणाय निर्गत्य आगत्य च, नारदसहितं पितरं प्रणम्य कुशलानुयोगानन्तरं किं वृत इति पृष्टा व्यजिज्ञपत् । 'तात, साल्वदेशनायकः उत्तमनृपवंशसंभूतः मूर्तिमानिव धर्मः द्युमत्सेनाभिधो राजा । तस्मिंश्च चिरं प्रजाः परिपाल्य दैवयोगेनान्धत्वमुपेयुषि, तत्पुत्रस्य शिशुत्वेनारातयः सकलमपि हृत्वा राज्यं गृहान्निष्कासयामासुः । स च, सत्यवानिति यथार्थनामधेयवता सूनुना भार्यया शैब्यया च संयुतः अरण्येषु कन्दमूलादिभक्षणेन गमयन्कालमतीव दुःखितो वर्तते । तदात्मजः सत्यवान्वृत इत्युक्त्वा तूष्णीमास । तदात्व एव त्रिकालवेदी नारदः नारायणेति वदन् अधोमुखो विचारसागरे निममज्ज । मुखवैलक्षण्यं समालोक्य किमिति पृष्टोऽश्वपतिना प्रोवाच, 'अस्य वरस्य आयुः संवत्सरावशिष्टम्' इति । एवमभिहितो मुनिना सुतां पार्श्वस्थामवादीत्—वत्से, अपि श्रुतं नारदवचनम् । दैवविलासस्यानन्यथाकरणीयत्वेन

मुक्त्वैनमन्यं वृणीष्व' इति । सा त्वब्रवीत्— 'तात, एवं न वक्तव्यम् ।

अवश्यं भाविनो भावा भवन्ति महतामपि ।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः ॥

अतो मम यदि वैधव्यं सुनिश्चितं तदान्योऽपि म्रियेत । किं च, मनोवाक्कायकर्मभिः स मया पतित्वेन गृहीतः । अन्यवरणे कुतो वा पातिव्रत्यम्' इत्यादिभिः सुनिपुणैर्नीतिवाक्यैस्तौ विस्मितौ चकार । तदा तस्यास्तादृशीं मनोवृत्तिं समभिवीक्ष्य योगी प्राह— 'राजन्, एतादृश्याः पतिव्रतायाः माहात्म्यं मरणमपि निवर्तयिष्यति । अतोऽवश्यम् तदभीष्टानुसारेण कर्तव्यम्' इत्यभिधाय अन्तरधात् । राजापि मुनिवचनमाशीर्वचनं मन्वानः पाणिग्रहणाय परिवारसमेतः सामग्रीमादाय सभार्यः द्युमत्सेनावसथं जगाम । गत्वा च तस्मै स्वोदन्तं साभिलाषं निवेद्य विधिदृष्टकर्मणा सावित्रीसत्यवतोः पाणिग्रहणमकार्षीत् । संवृत्ते च पाणिग्रहोत्सवे यथाशक्ति सुतायाः दत्वा वस्त्रादिकं ययावश्वपतिर्निजपुरीम् । ततश्च सावित्री पत्युः श्वशुरयोश्च यथासमयं यथाशास्त्रमुपचरन्ती तेषामास्पदीबभूव प्रेम्णः । एवमुपचरन्त्यां च तस्यां चतुर्दिनावशिष्टो गतः संवत्सरः । समीपस्थे च मृत्युदिवसे योगिवचनमविस्मरन्ती अन्तःस्तम्भितदुःखभारा पत्युरायुष्याभिवृद्धये दिनत्रयं शुद्धोपवासं विधाय चतुर्थदिवसे प्रातरुत्थाय होमादिकं परिसमाप्य स्वयमभुञ्जाना ध्यायन्ती भगवन्तं तस्थौ । ततश्च अवश्यंभावितया दैवविलासस्य पत्यौ समिदाहरणाय गुर्वोराज्ञां स्वीकृत्य गन्तुमरण्यं प्रतिष्ठमाने स्वयमपि स्वीकृत्य पत्युः श्वशुरयो-

श्वाज्ञां तेन सह प्राविशन्महारण्यम्। प्रविष्टमात्रस्यास्य महती शिरोवेदना समुत्पन्ना। तया बाध्यमानः भूमावधिशिश्ये। शयानं पतिमुपचरन्ती ध्यायन्ती भगवन्तमधितस्थौ। ततोऽस्य शरीरं क्षणादेव निश्चेष्टतामगात्, निश्चलेन्द्रिये च तस्मिन्, रक्ताम्बरधरः पाशहस्तः कश्चन पार्श्वेऽदृश्यत पुरुषः। सावित्री च दृष्ट्वा तं हठादुत्थाय कृताञ्जलिर्वेपमाना, एवमभाषत— 'महानुभाव, अमानवीं त्वद्देहकान्तिं पश्यन्त्या मे निर्जर इव प्रतिभासि। कस्त्वम्? किमर्थमायातोऽसि निवेदय' इति। स चाह—'मां शमनं विद्धि। त्वद्भर्तुरवसानकालस्य समासन्नतया पाशबद्धं विधाय नेतुं समायातोऽस्मि' इति। सा च, विनयावनता 'देव, जीवनयनाय दूताः प्रेष्येरन्नित्यश्रावि मया। इदानीं तु युष्मदागमनकारणकथनेन, मामानन्दयतु भवान्' इति। सोऽप्यवादीत्—'मनुष्यकृतपुण्यपापानि समालोच्य तदनुकूलानेव प्रेषयिष्यामि। अस्य तु सुगुणसंपन्नतया स्वयमेवागतः' इति वदन्सत्यवतः शरीरात्प्राणमादाय विरगात्। गतासुं विधाय गच्छन्तं विलोक्य बाष्पाकुलितलोचना पतिशरीरं क्वापि प्रदेशे सुसंरक्ष्यानुजगाम। अनुयान्तीं विलोक्य, 'भद्रे, गच्छ मया सहागमने फलं नास्ति; तस्य अनन्तरक्रियाः समाचर' इत्यभिहितावादीत्।

आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा।
मृते म्रियेत या नारी सा स्त्री ज्ञेया पतिव्रता॥

इत्याकर्ण्य 'भद्रे, पतिजीवितमन्तरा वरं वृणीष्व' इत्यवादीत्। सावित्री च— 'आर्य,

'अन्धौ राज्यात्परिभ्रष्टौ दुःखितौ श्वशुरौ मम।
तयोर्नेत्रप्रदानेन परितोषय नायक॥'

इत्याह । 'तथास्तु, निवर्तस्व' इति वादिनम् 'मत्पतिगम्यस्थानमेव ममापि गम्यस्थानम् । देवदेव सज्जनसंगतिर्न कदापि निष्फला' इति वदन्तीं पुनरपि यथापूर्वं 'वरं वरय' इति । प्राह । सा च ।

'राज्यभ्रष्टौ वनं प्राप्य दुःखितौ श्वशुरौ मम ।
तयो राज्यप्रदानेन परितोषय नायक ॥'

इत्यवादीत् । 'तथास्तु निवर्तस्व' इति वादिनम् धर्ममूर्ते, 'सकरुणा रक्षन्ति सन्तो दीनान् आश्रितानां मनोरथान्सप्रतिज्ञं पूरयन्ति' इत्यादिवचनानि वदन्तीम्, 'आर्ये तृषितमिव शीतलोदकैः नितरां मामानन्दयसि वाक्यामृतैः' इति वदन् 'भद्रे, तव पातिव्रत्येन अतीव संतुष्टोऽस्म्यहम् । अतः जीविष्यति ते भर्ता गच्छ' इत्यभिधायान्तरधात् । सा च प्रतिनिवृत्य लब्धजीवितं भर्तारं समवलोक्य प्रहर्षपूर्णमानसा पत्या सह श्वशुरनिकटमेत्य एनमुदन्तमभिधाय पुनरपि राज्यं प्राप्य बहुकालं सकलैश्वर्यसंपूर्णा तुतोष । अतः युष्माकमपि तथैवेति वदन् मार्कण्डेयोऽपि निर्जगाम ।

अल्लंराजु सत्यनारायणशास्त्री ।

यन्त्रान्निपातयति भूमितले विलूनं
गृह्णातु मे स्वसुरनल्पबलः स पाणिम् ॥ ४८ ॥

सिंहासनस्थितान्भूपानित्युक्त्वा द्रुपदात्मजः ।
स्वस्रे तान्दर्शयामास रूपवेषसमन्वितान् ॥ ४९ ॥

प्रथमं भगिनीं नीत्वा सविधं हैहयप्रभोः ।
तस्यै स तद्गुणगणानाख्यातुमुपचक्रमे ॥ ५० ॥

पुत्रं चक्रकविं गुणैकवसतिः श्रीलोकनाथः सुधी-
रम्बा च पतिव्रता प्रसुषुवे यं मानितं सूरिभिः ।
आश्वासः समभूद्द्वितीय इह तच्चम्बुप्रबन्धे शुभे
पाञ्चालापरिणीतिनाम्नि धरणीपुत्रीविवाहानुजे ॥

इति द्वितीय आश्वासः ॥

---

## तृतीय आश्वासः ॥

साहस्रान्मथितुं रथान्दशशतं भेत्तुं गजान्वाजिनां
हन्तुं पञ्चशतद्वयं च युगपद्धङ्क्तुं सहस्रां भटान् ।
ईष्टे यद्भुजमण्डलीरणभुवि प्रत्यर्थि पृथ्वीभुजां
सोऽभूद्दुर्जनशिक्षकः क्षितितले श्रीमान्नरेन्द्रोऽर्जुनः ॥

येनोद्दामभुजासहस्रयुगपच्छिन्नाहितश्रेणिना
जित्वासौ दशकंधरो दृढतरं चापज्यया संयुतः ।
कारागारमवापितः स कवचं स्तोत्रं यदीयं जगौ
नूनं तन्निगलाद्विमोचनमगाद्याजः पुलस्त्यार्थना ॥ २ ॥

कारागारनिबद्धताद्दशग्रीवाननश्रेणिभू-
नि:श्वासश्वसनैधितोद्भटभुजाराजिप्रतापानलः ।
यो वीरेषु वरः स्वयं क्षितिवधं पर्यग्रहीद्विर्नव-
द्वीपस्थापितयूपजालविलसद्रोमाञ्चपुञ्जाञ्चिताम् ॥
भूतप्रेतपिशाचदस्युपिशुनब्रह्मद्रुहां निग्रहं
कर्तुं साधुजनस्य सत्वरमपाकर्तुं च पीडाभरम् ।
बिभ्राणेन यदासतां क्षितितले चक्रेऽवतारो हरेः
चक्रेणारशतैः समं पृथुलयद्वाहासहस्रीकृतैः ॥ ४ ॥

तदन्वये नीलपदाभिधेयः
क्षोणीपतिः पुष्कलभागधेयः ।
असौ विभाति स्मररूपधेयः ।
संपत्सु यस्य ज्वलनो विधेयः ॥ ५ ॥

यश्च निष्पिष्य विद्विषो निरस्य दस्यूनुन्मूल्य खलजनान्निर्धूय च पिशुनानीतिबाधामवधार्य पितेवौरसमपत्यं पक्ष्मद्वयमिव लोचनं कवचमिव शरीरं शिरस्त्राणमिव मस्तकं गौरिव वत्सतरं मन्त्र इव जपनिरतं देव इवोपासकं महारथ इव निजवाहिनीव्यूहं वणिगिवार्थजातं सज्जन इव मानं मुनिरिव तपश्चर्यं चमर इव वालधिं परिपालयति प्राज्यं राज्यम् ॥

ततो हलायुधं स्वस्रे दर्शयन्द्रुपदात्मजः ।
कथयामास तस्यै तदपदानानि विस्तरात् ॥ ६ ॥

क्रूरक्रूरप्रलम्भाभिधविबुधरिपुप्रेयसीकर्णजाग्र-
त्ताटङ्कातङ्कविश्राणनचणमुसलः कामपालोऽयमास्ते ।

निर्भिन्नः स द्विधा यत्करतलविलसद्धोरसीरप्रहारैः
कालिन्दीनीरपूरोऽसितपटयुगलच्छद्मना सेवते यः ॥

तस्मादृग्मुसलप्रहारविदलत्प्रत्यर्थिकुम्भिच्छटा-
कुम्भोन्मुक्तविशुद्धमौक्तिकघटाभूषाविशेषान्विताम् ।
सीराघातविदारितारिपृतनापादातदेहक्षर-
त्सान्द्रक्षतजोक्षितां च विदधे युद्धक्षितिं यः क्षणात् ॥

तालध्वजस्य धवलच्छविसान्द्रसान्द्रे
किंचिद्विभाति सितहारलता शरीरे ।
राकानिशाकरकरोत्करगाढलिप्ते
तारावलीव विशदा वियदन्तराले ॥ ९ ॥

उत्सङ्गसीम्नि भवती श्रयति स्थितिं चे-
त्कृष्णे शरद्घनसनाभिरुचेरमुष्य ।
कैलासशैलतटवर्तितमालवल्ली-
शोभाविडम्बनकलाकुशला भवेस्त्वम् ॥ १० ॥

यस्य च भुजपराक्रमश्रवणजनितत्रासाः समृद्धानि नगराणि विहाय पलायिताः पर्वतोद्देशेषु सदाराः सन्तो निवसन्तो विमतभूपालाः कानिचिद्दिनान्यभ्यासभूयस्तया सौध इति भूधरशिखरं, उद्यानमिति कण्टकवनं, आस्थानमण्टपमिति तरुच्छायं, क्रीडासर इति काननपल्वलं, भृङ्गार इति मृत्कलशं, क्षौमाम्बरमिति तरुच्छदपरिधानं, केलीभवनमिति पर्वतकन्धरं, शाल्योदनमिति कन्दमूलफलादिकं, रत्नासनमिति तृणविष्टरं, मणिचषकमिति पत्रपुटं, काञ्चनमञ्च इति शिलातलं झटिति व्यवहरन्तो वधूजनलोचनानि

स्वात्पविमोचनानि रचयन्ति ।

अथ स्वसारं सविधं मुरारे-
नीत्वा स पाञ्चालपतेः कुमारः ।
तस्यै गुणांस्तस्य गुणाम्बुराशे-
र्यथामति प्राक्रमताभिधातुम् ॥ ११ ॥

कल्याणि सोऽयं वसुदेवसूनु-
रिहागतस्त्वामधिगन्तुमिच्छन् ।
विपश्चितो यं कथयन्ति साक्षा-
न्नारायणं क्षोणितलावतीर्णम् ॥ १२ ॥

गोपाङ्गनाजनचिरंतनभागधेय-
पुञ्जीभवद्विविधबालविहार एषः ।
आभाति षोडशसहस्रनरेन्द्रकन्या-
चित्तापहारविधिसादरयौवनश्रीः ॥ १३ ॥

तस्यैतस्य हरेः समो न भुवने रूपेऽस्ति कालान्तक-
क्रोधप्लुष्टवपुः पुरा रतिपतिः जन्माप्तुमिच्छन्पुनः ।
सौन्दर्यं जननान्तरेऽपि परमं वाञ्छन्ससूनौ पितु-
रिच्छाया स्यादिति यत्सुतत्वमभजन्प्रद्युम्ननाम्नान्वितः ॥

युद्धे यत्स्खलिताश्वकासति रुषा दष्टाधरोष्ठा द्विषां
मूर्धानो वसुदेवनन्दनपुरस्तिष्ठास्ति शौर्यं यदि ।
इत्थं शंसितुमुद्यताः प्रथमतो यन्नाममूलस्फुर-
द्वर्णोच्चारणकाल एव निशितैर्बाणैर्निकृत्ता इव ॥१५॥

प्रीतिं कृतां जगति गोपवधूष्वसंख्या-
मादाय षोडशसहस्रवधूष्वकार्षीत् ।

चक्रेऽच्युतोऽष्टमहिषीषु तदाहृतां तां
त्वय्येकधामनि निधित्सति तां तदास्ताम् ॥ १६ ॥

मुखेन्दुबिम्बेन विराजमाननक्षत्रमालाममलां वहन्ती ।
एषा यदूनां तिलकस्य मूर्त्तिराभाति राकारजनीष्विव द्यौः ॥

एष खलु संततमाकलितैर्लक्ष्मीकटाक्षैः श्यामलितामिव मूर्तिमुद्वहन्, समंततः प्रसृत्वरैः कायप्रभानिकायैः यमुनापूरपूरितमिव हरिनीलशिलाजालकलितमिव विकचकुवलयभरितमिव कस्तूरिकापङ्कानुलिप्तमिव नीलनीरदघटाच्छादितमिव कादम्बकदम्बकरम्बितमिव शैवालपटलजटिलमिव तमालदलस्तोमास्तृतमिव चञ्चरीकसंचयसमञ्चितमिव नीलांशुकवितानसंशोभितमिवातसीगुच्छच्छटाच्छुरितमिव स्वयंवरमण्टपमाकलयन्, चन्द्रिकावलक्षैः कटाक्षैः क्षीरसागरसहस्राणीव समुद्गिरन्, कुन्दविशदैर्मन्दहासैर्दिवापि कौमुदीमिवोत्पादयन् समरसमागतक्रूरतरपराक्रमशक्ररिपुचक्रशरीरविशसनत्रुटत्कीकसशाणकोणकषणनिशितस्फुरदरनिकरवक्रक्रकचदारितनक्रेण चक्रेण गम्भीराम्भोधिविजृम्भमाणघोरतरघोषणघुमुघुमुध्वनिविदीर्णहृदयरणाङ्गणगतकान्तजनोदन्तश्रवणमूर्छितदानवीलोचनजनितबाष्पाम्बुना कम्बुना चामेयमायदैतेयकायदलनकर्मणा शतमखमुखनिखिललेखलोकानन्दकेन नन्दकेन च निष्ठुरप्रहारसंचूर्णितास्थिपञ्जरदनुजशरीरस्रवदसृग्धाराहरिचन्दनानुलिप्तया वितीर्णसुरगणप्रमदया गदया च मन्दरमथनघूर्णमानोदीर्णकल्लोलकोलाहलभैरवैर्ज्यारवैर्विरचितासुरोज्जासनेन शरासनेन च वि-

राजमानः, विडम्बितनूतनाम्बरमणिकिरणनिकुरुम्बडम्बरपीताम्बरकरम्बितशोभनितम्बबिम्बः, आन्तरमानुरागमिव कौस्तुभमुरस्तटे दधानः, गाढाश्लेषलग्नं लक्ष्मीस्तनकस्तूरिकापङ्कमिव श्रीवत्समुद्वहन्, जलधरशङ्कासमागतया वासवधनुर्लतयेव वनमालया भूषितभुजान्तरः, सागर इव भुवनैकाश्रयः, ग्रीष्मसमय इव मधुविलासासहनः, जयेप्सुरिव समरसमाहितचित्तः, कामीव मधुराधराकलितविहारः, असमप्रविभव इव गोत्रयान्वितः, शम्बर इव मायानिवासः, जलधर इव विमलमहोदधिपयोग्रहणव्यग्रः, लवणार्णव इव मन्दरचितक्षोभानभिज्ञः, वीर इव विजयश्रीसंपादनोन्मुखः, जराक्रान्त इव मन्दरागधारी, कर्मठ इव धर्मजातकलितप्रीतिः, क्षणदामुखसमय इव विविधानन्तभवतारकः, कालीयह्रद इव विषमयवनभयंकरः, प्रणतजनसंरक्षणविचक्षणकटाक्षवीक्षणो भगवान्भासते वासुदेवः ॥

अथ स्वसारं द्रुपदस्य नन्दनो
निनाय तामन्तिकमङ्गभर्तुः ।
वाचालतां च श्रयतिस्म तस्यै
गुणांस्तदीयानभिधातुमिच्छन् ॥ १७ ॥

नामोचनं न च विमोचनमस्ति यस्य
स्वेदो न यस्य वहनेन न च श्रमो वा ।
निद्राशनाप्लवविधिष्वपि धार्यते य-
त्तेनैष दिव्यकवचेन विभाति कर्णः ॥ १८ ॥

अनपेक्षितशिल्पिचातुरीकं
मणिसंपादनयत्नमन्तरेण ।
शुभकुण्डलयुग्ममस्तवेध-
व्यथयोर्यः खलु कर्णयोर्बिभर्ति ॥ १९ ॥

विश्राणनश्रवणतोऽङ्गविभोरमुष्य
कल्पद्रुमः फलकदम्बभरच्छलेन ।
आस्ते ह्रियानतशिरा दिविषद्गवी सा
लज्जाभरानतमुखी तृणचारदम्भात् ॥ २० ॥

जीमूतवाहमसुदानकृतं सुदान-
कर्त्रा समानममुना कथमामनन्ति ।
धत्तेऽनिशं शयकुशेशयमेतदीयं
यत्स्वर्णभूप्रमुखदानपयोमधूनि ॥ २१ ॥

भोक्तुं मूलफलानि सन्ति वसितुं वृक्षच्छदाः कोमलाः
पातुं पल्वलगर्जवार्ति सलिलं वस्तुं पुनः प्रस्तराः ।
च्छायाः पादपमण्डलस्य शयितुं किं नास्ति भाग्यं वने-
ष्वित्युक्त्वा सचिवा नयन्ति चकितान्यद्वैरिभूपान्वनम् ॥

सोऽयमहं तामर इव चिन्तामणेः, विकल्प इव कल्प-पादपस्य, वितरणसौरभ इव सुरसुरभेः, कीर्तिरिव शिबि-चक्रवर्तिनः, प्रशस्तिवाचेव दधीचेः, विश्रान्तिभूर्विश्राण-नस्य, अद्वयमुपमानं दानशौण्डानाम्, मित्रं धार्तराष्ट्राणाम्, अमित्रः पाण्डुपुत्राणाम्, तरुणारुणसच्छायः प्रकाशते पति-रङ्गानाम् ।

ततः स्वसारं प्रापय्य सविधं मगधप्रभोः ।
तद्गुणान्वक्तुमारेभे तस्यै द्रुपदनन्दनः ॥ २३ ॥

गम्भीर्यौदार्यशौर्यप्रशमविनयभूर्धैर्यमाधुर्यधुर्यो
ब्रह्मण्यः सत्यसंधो जगति बलवतामग्रगण्यः शरण्यः ।
धीमानुद्दामधामा मगधनरपतिर्भासतेऽसौ गुणानां
सीमा कामाभिरामाकृतिरनघतरश्रीर्जरासंधनामा ॥

यस्योर्वीरमणस्य खड्गलतिकाः छित्वा विपक्षच्छटा-
श्मश्रूरप्सरसां न केवलमभूदुत्पादयन्ती वरान् ।
त्रुट्यत्तद्गलनिर्गलत्कलकलारावोल्लसल्लोहित-
स्रोतोभिस्तटिनीशतानि रभसादुत्पाद्य सिन्धोरपि ॥

परशुक्षेपं कुर्वञ्जमदग्निकुमारवज्जयति ।
स्वर्णस्तोमं वर्षञ्जलधरसच्छायमवनिपालमणिः ॥ २६ ॥

श्रीरेतद्भवने करोति वसतिं न ज्यायसी च द्विषां
गेहे संततमातनोति वसतिं तेषां क्षतिः का ततः ।
भन्नं किं न हि भोगिनां समुचितं गेहेषु किं न स्त्रियः
किं नो दुर्गगतावनी च कनकाकीर्णे न किं वारुणम् ॥

दूर्वा वदने निहिता पूर्वा त्रिदशाधिराजभुजगुप्ता ।
गतिरेतद्विमतानां नान्या खलु विद्यते पुनस्तेषाम् ॥

एष निजभुजाक्रान्तसामन्तराजसीमा, प्रशस्तमहिमा, देव इव वसुंधरासंचारसंजातकुतूहलः, किंपुरुष इव मानुषवेषधरः, सिद्ध इव विमानवेगच्युतः, विद्याधर इव निरालम्बनाम्बरसंचारविमुखः, गन्धर्व इवोर्वीरामणीयकावलोक-

